As pontifical head of the Uttarādi Mutt, he zealously and devotedly maintained the power, prestige, and dignity of his exalted office

As spiritual precepter, (genuine Vedantic Gurū, Ācarya or Desika ) he should have been extraordinarily kind and sympathetic, as could be gathered from references made by his disciples

As a disciple he exhibited uncanny devotion and loyalty to his own Precepter Raghuvaryatirtha from whom, he received all philosophic knowledge, metaphysical lore and the pontificate

As one moving with the spirit of the times, (Zeitgeist) he readily saw that certain amount of pomp, external paraphernalia, like servants, establishment processional elephants etc accompanying him in his tours, were absolutely necessary and having secured them all made his Mutt a strong and powerful centre of Religion Learning and Philosophy

But the most outstanding fact about Raghūttama Tirtha is that he is a great healer and helper of mankind

He is a healer of sores and wounds of the soul (not merely of the body) Even to day hundreds and thousands afflicted in body and mind penitently proceed to his shrine in Tirukkoyilur, perform penance devotedly meditating on him and the Supreme Lord worshipped by him

Raghuttama Tirtha has been known to save all heal all those devotess who had taken refuge in him None of his devotess would seem to have returned in disappointment

His shrine is a veritable place of pilgrimage Without any restrictions of caste creed colour the saint is worshipped by all to day The calm and quiet of the serene circumambient atmosphere of the locality greatly add to the serenity and compelling charm of the entire panorama Such a mystic and haunting charm is characterising his work as well May saint Raghuttamatirtha and the Supreme Lord worshipped by him confer gifts and rewards of Higher Life on all devotees would be my earnest prayer

R NAGA RAJA SARMA

# ACKNOWLEDGEMENTS

My sincerest thanks are due to the Madras Government for inclusion of S'rī Raghūttama-Tīrtha's work "Tattvaprakās'ikā-bhāvabodha" for publication in their Oriental Series, and to Mr. T. Chandrasekharan, *the Curator, of the Government Oriental* Manuscript Library.

My heartiest thanks are due to His Holiness Sri Vidyāsamudra-*tīrtha Svāmi of Kaṇiyūr Mutt in Udipi for loan of a copy of* "Bhāvabodha".

I am grateful to Mr T R Venkoba Rao, High Court Vakil and *Municipal Councillor of Tiruvannamalai for a copy of a* pamphlet in *Tamil* on the life of S'rī Raghūttama-Tīrtha, to Dr Subba Rao of Srirangam and to Gutthal Hayavada-nachar for similar help

Pandit R Sudarsana Sarma, (Siromani) first assistant, Raja's Veda-S'astra-Pāthasālā, Kumbakonam, and Mahāmahopādhyāya Sethumadhavacharya, (Retd Principal, Sanskrit College, Tirupati) are to be thanked for various suggestions made during *the progress of editing the work*

S'rī K Seshacharya, M A. Principal, of the S'rī Madhva-Siddhanta-Paripalana-Sanskrit College, Udipi has to be thanked *for the Alphabetical Index of the Vedānta-Sūtras*

R. NAGARAJA SARMA

———

# MANUSCRIPTS

In editing the present work and in fixation or standardization of the text in doubtful cases, the following manuscripts have been used.

1—Incomplete, Paper manuscript, relating to parts of the second, third and fourth chapters belonging to my father, (late) Mahāmahopādhyāya Paṇḍit Bhāratasiṁham-Vidyābhūṣaṇa etc Rāmachandrāchārya, lent by Paṇḍit R Sudarśana Śarmā

2—Paper manuscript lent by His Holiness Śrī Vidyāsamudratīrtha Śrīpadaṅgalavaru of Kaṇiyūr Mutt, Udipi—complete—second, third, and fourth chapters, (without the text of first chapter)

3—D—7839—belonging to Tanjore Sarasvati Mahāl Library—loan obtained through the Curator, Madras Government Oriental Manuscripts Library—incomplete according to note in *Marathi*—PP—31—to—280

PP—98—163—missing.

4—D—7840 — incomplete — from chapter 2 to end of chapter 3 second quarter. Belonging to Tanjore Sarasvathi Mahāl Library—loan obtained as in the case of No 3

Thus for the *first* chapter, only the Press Copy prepared by the Madras Government Oriental Library has been used It was a fairly good and correct copy

The four manuscripts used were in some contexts very corrupt and there were plenty of scribal errors

It is needless to add that the best has been done to render the text fairly accurate with the help of these manuscripts Marginal numbers in text refer to Madhva-Vilasa edition of Tattvaprakāśika

R Naga Raja Sarma.

Madras
January 1956

---

॥ श्री ॥

# ॥ अवधेयम् ॥

१

प्रथमपत्रे तृतीयश्लोके "यतीन्द्रसिद्धौ" इत्यस्य स्थाने रघूत्तमार्यान् इति वर्तितव्यम्। एवं पाठो भूयादिति सर्वतंत्रस्वतंत्र श्रीमदुत्तरादिमठाधीश श्रीसत्यप्रमोदतीर्थानामाज्ञा।

२

पंचमपत्रे-चतुर्दशपंक्तौ-"शु च्य म्पि" इति भाव्यम्। बह्वप्-बह्वपी-बह्वापीति काशिकायामिति-केशवाचार्य-कृत-तात्पर्यचन्द्रिका-व्याख्यायां वर्तते।

३

एकपंचाशपत्रप्रथमपंक्तौ-"सम्मुग्धत्वेऽपि" इति भाव्यम्। अयं च प्रयोग· तत्त्वप्रकाशिका-भावदीपे-३६४-पत्रे दृश्यते। एवमेव न्यायसुधायां टीकाकारीयोऽपि प्रयोग ४०५-पत्रे।

४

अष्टपंचाशपत्रे, "आतिदेशिकरूपे"ति, अव्यवहितपूर्ववाक्यसंगततया भाव्यम्। न तु श्लोकावयवतया। "अध्यात्म"मित्यादिश्लोक।

स्फुटप्रतिभासाक्षरसंयोजकानवधानादिमूलकाशुद्धाना शोधनं न कृतमिति वाचकमहाशयैर्विभावनीयम्।

रा. नागराजशर्मा.

॥ श्रीः ॥

श्रीमद्धनुम-द्भीम-मध्वान्तर्गत-
राम-कृष्ण-वेदव्यासात्मक-
लक्ष्मीहयग्रीवाय नमः

# ॥ उपोद्घातः ॥

## श्रीमद्रघूत्तमतीर्थाः

श्रीमत्सर्वतन्त्रस्वतन्त्ररघूत्तमतीर्थविरचितं, श्रीमज्जयतीर्थप्रणीततत्त्व-प्रकाशिका-व्याख्यानरूपं, तत्त्वप्रकाशिका-भावबोधाख्यं प्रबन्धरत्नमिदं-प्रथमतया संप्रति मुद्राप्य प्रकाश्यते। विदितचरमेवेदं स्यायचेन्नपत्तनराज-कीयाधिकारिभिः काचन ग्रन्थमाला प्रकाश्यमाना जागर्ति ॥

तस्यां ग्रन्थमालायां सुरभिकमनीयकुसुमतया रघूत्तमतीर्थीयभावबोधो ग्रथितो बाभाति ॥

अस्मिन् प्रकरणे श्रीमन्मध्वमतसम्बद्धमुख्यग्रन्थ-ग्रन्थकर्तृपरिचय आवश्यक इति तदर्थं तच्चरित्रं संग्रहेण निरूप्यते ॥

1

"अनादिकालतः सिद्धाः समया हि प्रवाहतः" इति यद्यपि नास्तिका-ऽऽस्तिकसकलदर्शनानां प्रवाहतोऽनादित्वमभ्युपम्यते। तथापि दर्शनानामारम्भाः, मूलपुरुषाः, दर्शनाचार्याश्च भवन्त्येव ॥

**श्रीमदानन्दतीर्थ**-भगवत्पादाः (तेषामेव **मध्वाचार्याः**, पूर्णप्रज्ञाः, इत्यादि नामान्तराणि) **द्वैत**–राद्धान्तस्य प्रवर्तकाः। भगवान्नारायण एव **द्वैत**-सिद्धान्तप्रवर्तक इत्यपि व्यवस्थापयितुं शक्येत ॥

श्रीमन्नारायणनाभिकमलसंभवस्तस्य भगवतः प्रथमः शिष्यः। कमलसंभवस्य सनकादयो मानसपुत्रास्तस्य शिष्याः ॥

सनकादीना शिष्यस्तावद्दूर्वासमहर्षिः । दूर्वासमहर्षिशिष्यः परतीर्थः ॥

परतीर्थशिष्यस्तावत सत्यप्रज्ञः । सत्यप्रज्ञशिष्य प्राज्ञतीर्थः । प्राज्ञतीर्थशिष्य· अच्युतप्रेक्षः । अच्युतप्रेक्षकरकमलसजात एवानन्दतीर्थ इति गुरुशिष्यपरम्पराव्यवस्थापिता वर्तते ॥

भगवान्नारायण एवादिगुरु । तन्नाभिकमलसंभवश्चतुर्मुख एवाऽऽदिशिष्य ॥

अतिभयावहसर्वत प्रसृमरप्रलयोदकदर्शनचकितं चतुर्मुखं प्रति भगवता नारायणेन "तप तप" इत्युपदेशोऽकारि ॥

तपश्च पारमार्थिकभेदन्यास इति भेदप्रधान एव द्वैतसिद्धान्त एवादिगुरुणाऽऽदिशिष्यायोपदिष्ट इति भवति । भगवान्नारायण एव बादरायण इत्यविवादम । तस्मात् द्वैतसिद्धान्त एव बादरायणसिद्धान्त इति फलितं द्रष्टव्यम् ॥

स्यादेतत् । अद्वैत-विशिष्टाद्वैत-शैव वीरशैवादिसिद्धान्ता अपि बादरायणीया एवेति प्रत्यवस्थानं सुकरम् ॥

सति चैवं, सिद्धान्ततारतम्यनिर्णयसामरस्यादिविमर्शैरेव संपादनीयं भवति ॥

"ग्रन्थान् मध्वश्चकारासौ सप्तत्रिंशदुदारधी"
इति मध्वाचार्यैर्विरचितानाग्रन्थाना सङ्ख्या परिगणिता ॥

तत्रोपनिषद्भाष्याणि दश ॥

सूत्रप्रस्थाने तावत्ब्रह्मसूत्रभाष्यं, अणुभाष्य, न्यायविवरण, अनुव्याख्यानम् इति ग्रन्थचतुष्टयम् ॥

एकविंशतिभाष्यनिरसननिजमतस्थापनपर ब्रह्मसूत्रभाष्यम् । एकविंशतिभाष्यकाराश्चेमे—

"भारतीविजयश्चैव सच्चिदानन्द एव च ।
ब्रह्मघोष शतानन्द उद्वर्तश्चैव पञ्चम ॥ १ ॥

विजयो रुद्रभट्टश्च वामनाख्यस्तथाष्टमः ।
स यादवप्रकाशश्च नवमस्तत्र कीर्तितः ॥ २ ॥
रामानुजस्तथा भर्तृप्रपञ्चो द्रविडस्तथा ।
ब्रह्मदत्तो भास्करश्च पिशाचो वृत्तिकारकः ॥ ३ ॥
तथा विजयभट्टश्च विष्णुक्रान्तस्तथैव च ।
वादीन्द्रश्च तथा पश्चात्ततो माधवदासकः ॥ ४ ॥
ततश्च शंकराचार्ये एकविंशतिवादिभिः ।
प्रणीतानि निराचक्रे भाष्याणि स महामतिः ॥ ५ ॥

**अणुभाष्यं** द्वात्रिंशत्श्लोकात्मकं सकलशारीरकसूत्रार्थानां संग्रहेण प्रतिपादकम् ॥

**न्यायविवरणं** ब्रह्मसूत्रप्रत्यधिकरणपूर्वापरपक्षन्यायप्रतिपादनपरम् ॥

**अनुव्याख्यानम्** "तर्ककर्कशं" प्रबन्धं रचयेति शिष्येण **त्रिविक्रमपण्डिताचार्येण** प्रार्थितम् । तदनुसृत्य प्रणीतं परमगूढप्रौढार्थम् । प्रकरणानि **दश** ॥

**प्रमाणलक्षणे** द्वैताभिमतप्रमाणस्वरूपनिरूपणं कृतम् । यतो "मानाधीना मेयसिद्धिः" ॥

**कथालक्षणे** वाद-जल्प-वितण्डानां विचारो दरीदृश्यते ।
**मायावादखण्डने** सामान्यतो मायावादः खण्डितः ।
**उपाधिखण्डने** अद्वैत्यभिमतोपाधिनिरासः कृतः ।

**मिथ्यात्वानुमानखण्डने** "विमतं मिथ्या" इति परप्रयुक्तप्रसिद्धानुमानस्य दूषणमभ्यधायि ॥

**तत्त्वसंख्याने** स्वतन्त्र–परतन्त्राख्य–तत्त्वद्वयविभागमाश्रित्य सकलचेतनाऽचेतनजगत्स्वरूपनिरूपणम् । भगवान् विष्णुरेक एव स्वतन्त्रः । सर्वं तदतिरिक्तं परतन्त्रम् ।

**तत्त्वविवेके** पूर्वोक्तस्यैव प्रमेयस्य विशिष्य निरूपणम् ।

तत्त्वोद्योते मुक्ता अपि परमात्मनो भिद्यन्त इत्यारभ्य द्वैतसिद्धान्त-प्रक्रियासमर्थनम्।

विष्णुतत्त्वनिर्णये मुख्यतमप्रकरणे परिच्छेदत्रयात्मके, भगवतो लक्ष्मीपते सकलजगज्जन्मादिनिमित्तकारणत्वं, जगत्सत्यत्वमित्यादितत्त्वजात निपुणतम साधितम्।

कर्मनिर्णये "महानाम्नी" मन्त्रार्थवर्णनं, मीमासकमतखण्डनादि दृश्यते।

ऋग्भाष्ये वेदार्थवर्णनप्रकारादि मात्रया प्रदर्शितम्।

गीताभाष्ये श्रीमद्भगवद्गीतार्थनिर्णय कृत।

गीतातात्पर्ये गीतार्थविशेषविचारो वर्तते।

तन्त्रसारः भगवत्पूजाविधानकतिपयमुख्यमन्त्रोद्धारादिसबद्ध।

नरसिंहनखस्तोत्र द्वादशस्तोत्रं च भगवत्स्तुतिपरम्।

यमक भारत यमकप्रधान चित्रकाव्यम्।

भागवततात्पर्ये भागवतार्थविचार कृत।

महाभारततात्पर्यनिर्णये सकलमुख्यपुराणार्थनिर्णयद्वारा जीवेश्वरभेद एव निखिलपुराणप्रतिपाद्य इति व्यवस्थापनम्।

कृष्णामृतमहार्णवे कृष्णाख्यपरब्रह्मस्वरूपनिरूपणम्।

सदाचारस्मृतिः सात्त्विकाचारप्रतिपादनपरा।

यतिप्रणवकल्पे ओंकारार्थवर्णनम्।

जयन्तीनिर्णये श्रीकृष्णजयन्तीमाहात्म्यवर्णनम्।

श्रीमन्मध्वाचार्याणा कालस्तु—११९९–१२७८ ए डि (क्रैस्तात्पर-मित्यस्य सूचकाक्षरद्वयम्) इति केचित्। अन्ये तु—१२३८–१३१८ ए डि इति। आचार्याणा प्रादुर्भावो विळम्बिहायने आश्विनशुद्धदशम्याम्। केचित्तु, आषाढकृष्णपञ्चम्यामिति। अन्ये तु रथसप्तम्यामिति। उपनयन पराभववर्षे॥

आनन्दसंवत्सरे तुरीयाश्रमस्वीकारो वेदान्तसाम्राज्यपट्टाभिषेकश्च। पट्टाभिषेकानन्तरं मासद्वयैकोनविंशदिनाधिकत्रिषष्टिवर्षपर्यन्तं साम्राज्यपरिपालनम्। (६२-वर्ष-मास-२-दिन-१९) ततस्तिरोधानम्। तिरोधानानन्तरं षट्त्रिंशत्सहस्र-(३६०००) वर्षपर्यन्तं बदर्यामाचार्याणां निवास इति **स्कान्दे** प्रतिपादित-मित्यैतिहासिका वदन्ति॥

## श्रीमध्वशिष्याः—

**त्रिविक्रमपण्डिताचार्याः** तत्त्वप्रदीपाख्यं ब्रह्मसूत्रभाष्यव्याख्यानं चक्रुः।

**नरहरितीर्थ** विरचिते यमक-भारत-तत्त्वनिर्णयटीके।

**पद्मनाथतीर्थकृतेषु** ग्रन्थेषु सूत्रभाष्यटीका **सत्तर्क-दीपावलिः**।

**अनुव्याख्यान** टीका सन्न्यायरत्नावलिश्च सूत्रप्रस्थानसंबद्धौ।

**पद्मनाभ नरहरि-माधव-अक्षोभ्यतीर्थाः** मध्वाचार्याणां साक्षा-च्छिष्याः क्रमशः साम्राज्यनिर्वाहं चक्रुराचार्यतिरोधानान्तरम्॥

## जयतीर्थाः

इमे टीकाचार्याः, टीकाकारा इति व्यपदिश्यन्ते। परिपूर्णभगवदनुग्रह-पात्रभूतास्तथाऽऽचार्यकरुणावरुणालयनिष्कलङ्कशशाङ्कायमानाः जयतीर्थपूज्यपादाः **मध्वसाक्षाच्छिष्याक्षोभ्यतीर्थशिष्याः**। नूनं भगवदाज्ञया, **मध्वग्रन्थ** व्याख्यानार्थमेव प्रातिस्विकं प्रादुर्भूता इति विभावनीयं भवति। वदन्ति चाभियुक्ताः।

"लोके मातापितृमुखजने सर्वतो वर्तमाने
कान्तायुग्मे कमलनयने चार्वशेषप्रतीके।
सर्वैश्वर्ये रजतकनकाच्छादने (कनकेत्यादिके) विद्यमाने
हित्वा (त्यक्त्वा) सर्वं यतिरयमभूत् सैव शुद्धा विरक्तिः॥"

इति।

जयतीर्थ श्रीचरणैर्द्वाविंशग्रन्था विरचिताः। तेषु तत्त्वप्रकाशिका संप्रति मुद्राप्यमाण-भावबोधमूलभूता, मध्वकृतसूत्रभाष्यव्याख्यानरूपा टीकासु मुख्यतया परिगणनामर्हति॥

प्रमाणपद्धतिः प्रमाणविचारपरः स्वतन्त्रो ग्रन्थः।

वादावलिः परमतनिरासप्रधानस्वतन्त्रप्रबन्धः।

माध्व दशप्रकरणटीकास्तु निखिलवेदान्तलोकमान्या जाग्रति।

प्रमेयदीपिका गीताभाष्यस्य टीका। गूढार्थप्रकाशिनी विभाति।

न्यायदीपिका गीतातात्पर्यस्य टीका। मध्वहृदयगतरहस्यार्थबोधिनी।

न्यायसुधा तावदनुव्याख्यानव्याख्यानरूपा जयतीर्थविरचितसकलप्रबन्धमूर्धाभिषिक्ता चकास्ति। "सुधा वा पठनीया, वसुधा वा पालनीया" इति वदन्ति॥

भामती तत्त्वबिन्दु प्रभृतितत्कालपर्यन्तानुस्यूतवेदान्तपरम्पराप्रसिद्धपरकीयप्रबन्धानुवादविमर्शनपूर्वकं मध्व-सिद्धान्त-स्थापन-परिरक्षणपरोऽयं ग्रन्थः॥

### व्यसराजतीर्थाः

विजयनगरपालक-कृष्णदेवरायादीनां गुरवो महामहिमशालिनः श्रीव्यासराजतीर्थाष्टीकाकारानन्तरं जगत्प्रसिद्धाः मध्वसिद्धान्तधुरंधराः विद्यासिंहासनाधीश्वरा इति विदितप्रभावा आसन्।

तद्विरचितप्रबन्धेषु, व्यासत्रयमिति विख्यातं ग्रन्थत्रयं, विद्वदविद्वन्मोदखेददायकं बाभाति।

न्यायामृतमिति परमोद्दामशैलीमनोहरवादग्रन्थस्य नाम। परमतखण्डनपरोऽयं ग्रन्थ. परिच्छेदचतुष्टयात्मकः। प्रथमे परिच्छेदे—सपरिकरजगन्मिथ्यात्वनिरसनपूर्वकं जगत्सत्यत्वस्थापनं कृतम्। द्वितीये अखण्डार्थवादनिरसनपूर्वकं ब्रह्मण. सगुणत्व-साकारत्वादिसमर्थनमारचितम्। एवमेव भेदपञ्चकस्य पारमार्थिकत्वसाधनमपि। तृतीये-श्रवणादिसाधनविचारः कृतः। चतुर्थे द्वैताभिमतमुक्तिस्वरूपनिरूपणमुपनिबद्धम्।

"श्रीमध्व शास्त्रदुग्धाब्धिं धीमन्दरमहीभृता ।
निर्मथ्यो (आमथ्यो)द्भृयते न्यायामृतं विबुधतृप्तये"

इति प्रतिज्ञासाधनपरोऽयं स्वतन्त्रो वादग्रन्थः ॥

**तात्पर्यचन्द्रिका**— सूत्रप्रस्थानपरा । जयतीर्थकृततत्त्वप्रकाशिका व्याख्यानरूपा ।

"सूत्रेभाष्ये अनुभाष्ये च सन्न्यायविवृतौ तथा ।
टीकासु च यदस्पष्टं तच्च स्पष्टीकरिष्यते ॥

प्रतिसूत्रं प्रकाश्येते घटनाऽघटने मया ।
स्वीयान्यपक्षयोः सम्यग्विदांकुर्वन्तु सूरयः ॥"

इति प्रतिज्ञातमस्मिन् ग्रन्थे । निपुणतममकारि प्रतिज्ञानिर्वाह इति पारमार्थिक-विमर्शका अत्र प्रमाणम् । अध्यायद्वयमात्रपरामर्शी ग्रन्थोऽयं, शेषचन्द्रिका-चार्या इति प्रसिद्धैर्व्यासराजाद्दशमपीठाधिपतिभि पूर्णतां नीतो रघुनाथ-तीर्थैरिति विभावनीयम् ॥

**तर्कताण्डवम्**— न्याय-वैशेषिकप्रक्रियाखण्डनपरेऽस्मिन् वादग्रन्थे स्वतस्त्वस्य प्रामाण्यस्य, परब्रह्मण सकलकल्याणगुणपरिपूर्णत्वस्य, भगवद्गुणाना-मानन्त्यस्येत्यादिमध्वमततत्त्वानां समर्थनं तत्तदर्थे न्यायवैशेषिकतत्त्वखण्डनं चार-चितम् । तत्कालपर्यन्तप्रसिद्धन्यायग्रन्थार्थानुवादपूर्वकं तत्प्रक्रियानिरसनं कृतमिति द्रष्टव्यम् ॥

**भेदोज्जीवने**—स्वतन्त्रवादग्रन्थे द्वैताभिमतभेदसाधनं दृश्यते ।

**मन्दारमञ्जरी**—नामविशिष्टा खण्डनत्रय-तत्त्वविवेक-तत्त्वोद्योत-विचित्रार्थविवरणपराष्टिप्पण्यश्च विलसन्ति । अत्रेयमभियुक्तोक्तिः—

"श्रीमध्वः कल्पवृक्षश्च जयार्यः कामधेनवः ।
चिन्तामणिश्च व्यासार्यो मुनित्रयमुदाहृतम् ॥"

इति ।

# विजयीन्द्रतीर्थाः

षोडशशतके (क्रैस्ताब्दपरिगणनप्रकारेणैव) अद्वैतविद्याचार्याणामप्पय्य-दीक्षितेन्द्राणामासीन्निरवधिकं प्राबल्यम् । दीक्षितैस्तावन्मध्वमतखण्डनं बहुशोऽकारि ॥

प्रथमं व्यासराजशिष्या विजयीन्द्रतीर्थाः पश्चात् सुरेन्द्रतीर्थशिष्यतां प्राप्ताः सुरेन्द्रसाम्राज्यपीठाभिषिक्ताः, मध्वराद्धान्तप्रतिष्ठापने, परमतनिरसने, "न भूतो न भविष्यती'ति कामपि निरतिशयां विश्वातिशायिनीं प्रथामवापुः ॥

यथा कृष्णदेवरायसकाशाद्रत्नाभिषेकमवापुर्व्यासयोगिनः, तथैव रामरायसकाशाद्रत्नाभिषेकं प्रापुर्विजयीन्द्रयोगीन्द्राः ॥

"चतुःषष्टिकलापूर्णश्चतुरधिकशतग्रन्थरत्नप्रणेता"

इत्यादिबिरुदानुवाचनेन, शिबिकायां राजमार्गे प्रचलत्सु, बन्दिभिर्येषां दिगन्तविश्रान्तकीर्तिः प्रकट्यकारि त इमे लोकोत्तरसामर्थ्यवन्तः, अष्टाङ्गयोगसाधनसमधिगतसकलसिद्धिभाजः परमपावने वृन्दावने श्रीकुम्भघोणक्षेत्रे, अद्यापि विराजन्ते ॥

चतुरधिकशतप्रबन्धेषु अद्य यावत्, त्रिषष्टि(६३)ग्रन्थानां नामान्युपलभ्यन्ते । अन्येषां प्रत्येकं नामापि न श्रूयते ॥

पञ्चषाः प्रबन्धा मुद्रिताः । अमुद्रिताः केचन बहुश्रमपूर्वकं संपादिताः, मत्सकाशे वर्तन्ते ॥

गुरुभक्तिपूर्वकं व्यासत्रयव्याख्यानानि चक्रुः । न केवलं व्याख्यानमात्रं दृश्यते प्रबन्धेष्वेतेषु, किं तु समावितसकलप्रकरणेषु परमतखण्डनमप्यस्ति ॥ आहुश्च—

"व्याख्यानव्याजतोऽन्योक्तदूषणानामलभ्यताम् ।
प्रदर्श्य गुरुपादोक्तिमहिमात्र प्रकाश्यते ॥"

इति ।

न्यायामृताऽऽमोद इति न्यायामृत-विवरणस्य नाम । व्याख्यान-द्वयं श्रूयते । एकस्य नाम लघ्वामोद इति । अन्यस्य तु गुर्वामोद इति । संप्रति गुर्वामोदो नोपलभ्यते ॥

न्यायमौक्तिकमाला—तात्पर्यचन्द्रिका-व्याख्यानरूपा । ग्रन्थेऽस्मिं-स्तत्र तत्र शिवार्कमणिदीपिकानुवादपूर्वकं खण्डनानि दृश्यन्ते ॥

युक्तिरत्नाकर इति तर्कताण्डव-व्याख्याया नाम । यामधिकृत्य राघवेन्द्रतीर्था आहुः—

"गुरुपादकृताप्यस्ति व्याख्या साऽत्यन्तविस्तरा ।
व्याख्येयं मन्दबोधाय क्रियतेऽशेषगोचरा ॥"

इति ।

मध्वतन्त्रमुखभूषणं तावद्दीक्षितेन्द्रकृतमध्वतन्त्रमुखमर्दनस्य खण्ड-नरूपम् ।

मध्वाध्वकण्टकोद्धारस्तु, मध्वमतविध्वंसनस्य खण्डनं भवति ।

उपसंहारविजयस्तु, उपक्रमपराक्रमस्य खण्डनं द्रष्टव्यम् ।

परतत्त्वप्रकाशिकायां शिवकर्णामृतस्य, शिवतत्त्वविवेकस्य च विमर्शो दृश्यते ।

अद्वैत(ति)शिक्षायां—भेदधिक्कारादिखण्डनमस्ति ।

भेदविद्याविलासस्तु—भेदधिक्कारखण्डनार्थमेव प्रवृत्त. ।

विधितत्त्वप्रकाशिका—विधिरसायन-विमर्शनार्थं प्रवृत्ता ।

चक्रमीमांसा—तप्तमुद्राङ्कनाचारसाधुत्वसमर्थपरा ।

पिष्टपशुमीमांसा—यागीयसाक्षात्पशुहिंसाखण्डनपरा ।

किं बहुना ! विजयीन्द्रतीर्थग्रन्थानां साकल्येन नामनिर्देशोऽपि कर्तुं न शक्येतास्मिन्नुपोद्घाते । परं तु पर्याप्तं यावत्सूचितमिति विरम्यते । विजयी-न्द्रसमकालीना विस्मयवशमापन्ना. केचनाहु.—

" स्वदर्शनोक्तदूषणं निराकरिष्णुरञ्जसा ।
जयीन्द्रयोगिरूपतोऽवतीर्ण एव पूर्णधी. ॥"—इति

## विद्याधीशतीर्थाः

वाक्यार्थचन्द्रिका—न्यायसुधा—पञ्चाधिकरणीविवरणरूपैतद्रचितग्रन्थेषु मुख्या ।

## वादिराजतीर्थाः

रजतपीठपुरनिराजमानमठाष्टकान्यतमसोधे मठाधीशा इमे श्रीहयग्रीवोपासनालब्धलोकविलक्षणाऽमानुषशक्तयो विंशत्यधिकप्रबन्धनिर्मातार. ।

**युक्तिमल्लिका**—परमतखण्डनपरो वादग्रन्थ· । सौरभपञ्चकात्मक । प्रथमे **गुणसौरभे**-निर्गुणत्वनिराकरणेन ब्रह्मण सगुणत्वस्थापनं कृतम्। द्वितीये **शुद्धिसौरभे**-ब्रह्मणो मायाशबलत्वादि निराकृतम् । तृतीये **भेदसौरभे**-भेदस्य समर्थनं प्रपञ्चितम् । चतुर्थे **विश्वसौरभे**-विश्वसत्यवादि स्थापितम् । पञ्चमे **फलसौरभे**-मुक्तिविचारो विद्यते । एकोनाऽशीत्यधिकपञ्चसहस्रत्रिशत(५३७९)श्लोकात्मकोऽयं नितरा प्रसिद्ध । अस्मिन् ग्रन्थे शास्त्रीयप्रक्रिया लौकिकयुक्तिसन्निवेशेति विशेषो द्रष्टव्य ।

**न्यायरत्नावली**ति वादग्रन्थस्यान्यस्य नाम । पञ्चसरात्मकोऽय प्रबन्ध । ग्रन्थकारैरेवमुपश्लोकितम्

" वादिराजेन रचिता न्यायरत्नावलीमिमाम् ।
सगृह्णत सभामध्ये वाग्दारिद्र्यं न विद्यते ॥ " इति ।

## राघवेन्द्रतीर्थाः

विजयीन्द्रतीर्थाना प्रशिष्या इमे सप्रति तुङ्गभद्रानदीतीरस्थपरमरमणीयमन्त्रालयक्षेत्रे वृन्दावनस्था विराजन्ते ।

चत्वारिंशदधिकग्रन्थकर्तार **परिमलाचार्या** इति व्यपदिश्यन्ते । **न्यायसुधापरिमळः** (परिमळ इत्यपि) न्यायसुधाव्याख्यानरूपोऽयं ग्रन्थो गद्यरेखया राघवेन्द्रतीर्थानां परिमळाचार्या इति नामान्तरम् ।

चन्द्रिकाप्रकाश इति तात्पर्यचन्द्रिकाव्याख्यानस्य नाम ।

तर्कताण्डवविवृतिरिति तर्कताण्डवव्याख्यानस्य नाम । तत्र तत्र "विस्तरस्तु गुरुपादकृतकण्टकोद्धारे द्रष्टव्यः" इति विजयीन्द्रग्रन्थपरामर्शः कृतो दृश्यते ।

गीताविवृतिरिति परमसुन्दरगीताव्याख्यानस्य नाम ।

उपनिषत्खण्डार्थाः एतद्विरचिताः परमोपकारका वर्तन्ते मध्वोक्तोपनिषदर्थावबोधने ।

भाट्टसंग्रहे, भाट्टमीमांसायां चैतेषां निरवधिकमीमांसादर्शननैपुण्यमाविष्कृतम् ।

टिप्पणीचतुरचक्रवर्तीति सकलैः श्लाघ्यन्ते राघवेन्द्रयतीन्द्राः ।

## श्रीनिवासतीर्थाः

श्रीनिवासतीर्थाः (वंशवल्ली—भाषायां विदरहळ्ळी) पञ्चविंशत्यधिकटिप्पणीकाराः ।

## सत्यनाथतीर्थाः

अभिनवचन्द्रिका एतैः कृता तत्त्वप्रकाशिकाव्याख्या सहृदयहृदयङ्गमाभाति ।

अभिनवामृतं प्रमाणपद्धतिव्याख्यानं भवति ।

अभिनवताण्डवं (तर्कताण्डवं) न्याय—वैशेषिक—रामानुजादिमतप्रक्रियाखण्डनपरम् ।

अभिनवगदा अप्पय्यदीक्षितेन्द्रकृतमध्वतन्त्रमुखमर्दनादिखण्डनपरा ।

परशुसंज्ञकटिप्पण्यः खण्डनत्रयसुधासंबद्धा अपि प्रसिद्धाः ।

## कुण्डलगिरि-आचार्याः

भट्टोजिकुट्टनं (अद्वैतकौस्तुभखण्डनम्) प्रसिद्धमेतत्कृतम् ।

कण्टकोद्धारः परमतखण्डनपरो वादग्रन्थः ।

## पैपणी-नारायणाचार्याः

अद्वैतकालानलः मध्वमतखण्डनखण्डनपरः ।

## सत्यधर्मतीर्थाः

वात्या अद्वैतकालानलव्याख्यानमेतत्प्रबन्धेषु मुख्यतमम् ।

## न्यायामृत-वादप्रस्थानम्

न्यायामृतं व्यासराजकृतं मधुसूदनसरस्वतीभिः अद्वैतसिद्धिनामके वादग्रन्थे खण्डितम् ।

न्यायामृत-तरङ्गिणी रामाचार्यैः कृता अद्वैतसिद्धिखण्डनरूपा । लघुचन्द्रिकायां, तथा गुरुचन्द्रिकायां, ब्रह्मानन्दसरस्वतीभिः, तरङ्गिणीखण्डन कृतम् ।

न्यायामृत-तरङ्गिणी-सौरभाभिधे वादप्रबन्धे वनमालिमिश्राः गुरुचन्द्रिका-खण्डन नक्रु ॥

मध्वमुखालङ्कार-चण्डमारुतादिपरमप्रौढवादग्रन्थकर्तार,
वनमालिमिश्राः, मध्वसिद्धान्तसमर्थनबद्धदीक्षा बभूवु ॥

## अन्ये ग्रन्था

भट्टोजिकुट्टनं छलारिनृसिंहाचार्यकृतम् ।

द्वैतद्युमणिः गुरुब्रह्मानन्दीयखण्डनं श्रियप्पाचार्यरचितम् ।

मध्वसिद्धान्तसारः वेदगर्भ पद्मनाभाचार्यकृत ।

वादरत्नावळी विष्णुदासाचार्यकृता ।

न्यायसिद्धान्तभञ्जनम् आनन्दजयदासाचार्यविरचितम् ।

इत्येवं द्वैतसिद्धान्तसमर्थनपराणा प्रबन्धाना मात्रया निरूपण कृतम् । अन्ये टिप्पणीव्याख्यानादिप्रणेतार पर परश्शत महीमण्डलमलचक्रुर्येषा ग्रन्थास्तत्र तत्र कोशागारेषु सुखसुप्तिमनुभवन्त्यद्यापि ॥

## रघूत्तमतीर्थाः

संप्रति श्रीरघूत्तमतीर्थानां चरित्रं संग्रहेण निरूप्यते। श्रीमन्मध्वाचार्य-परम्परायां त्रयोदश(१३)पीठाधिपतयो रघुवर्यतीर्थाः आसन्।

कदाचित् तेषां स्वप्ने तत्करार्चितः श्रीरामचन्द्रो भगवानाविर्भूय, "स्वर्णवाटीग्रामे त्वदीयभाविशिष्यो जनिष्यतिनिर्ऋतिदिक्पालकांशेन। तं माठपत्ये द्वैतसाम्राज्ये निवेशय" इत्याज्ञाप्यान्तर्दधे॥

क्रमशः स्वर्णवाटीं प्राप्ता रघुवर्याः सुब्बुभट्टाख्येन धनिकेन, तद्धर्म-पत्न्या गङ्गा-नाम्न्या साकं भिक्षास्वीकरणार्थं याचिताः, "अपुत्रयोः युवयोः सकाशाद्भिक्षा न स्वीकार्या" इति प्रत्यूचुः॥

जायापतिभ्यां बहुशोऽभ्यर्थिताः रघुवर्याः, भगवदाज्ञास्मरणपूर्वकम-ब्रुवन् "युवयोः पुत्रो भविता। स च मह्यं समर्पणीयः। पश्चादन्योऽपि वंशकरो भविता" इति॥

रघुवर्याऽऽज्ञानुरोधेन शिष्याः केचन समुचितसमये भट्ट-भवनं गत्वा भूस्पर्शमन्तरा, शिशुर्हेमपात्रे ग्राह्य इति व्यवस्थां चक्रुः॥

श्रीरामचन्द्रदैनंदिनाभिषेकक्षीराहारपरिवर्धितः शिशुः शशीव शुक्लपक्षे ववृधे। तस्य रामचन्द्र इति नाम रघुवर्याश्चक्रुः। बालकस्य तृतीये (अथवा चतुर्थे) वर्षे रघुवर्यतीर्थेषु शकटमारुह्य गच्छत्सु, असुरः कोऽपि शकटस्यैकं चक्रं विश्लिष्य, पृथक् क्षिप्त्वा, बालकमपहर्तुं यावत् प्रायतत, तावत् पादप्रहारेणासुरं शिशुर्जघान। शकटस्तु विनैव चक्रं सुखं चलन्नेवासीत्। असुरहननं निश्चक्रश कटक्रमणं चाभिवीक्ष्य विस्मयस्य परां काष्ठामापन्नाः रघुवर्याः, नूनं देवांशयुक्त शिशुरिति भाविशिष्यमाहात्म्यं चिन्तयन्नासन्॥

सप्तमे वयसि रामचन्द्रो ब्रह्मचर्याश्रममवाप। अष्टम एव हायने प्रथमादेव तुरीयाश्रमभागभवत्॥

द्वैतसाम्राज्यमभिषिक्ताना तेषां रघूत्तमतीर्था इति गुरुभिर्नाम दत्तम्।

शिष्यमेवमभिषिच्य निजपीठे रघुवर्यतीर्थाः वर्षत्रिमितकालानन्तरं वृन्दावनस्था बभूवुः॥

गुरुकृतव्यवस्थानुसारेण वरदराजाचार्य-नामकविपश्चिन्निकटे रघूत्तमतीर्था विद्याभ्यसमकुर्वन् ॥

एवं प्रचलति काले कदाचिदल्पद्वादशी संप्राप्ता । रघूत्तमतीर्थेषु अनुष्ठानपरेषु भिक्षार्थमागमने विलम्बः समजनि ॥

पाण्डित्यगर्वाभिभूताः वरदराजाचार्याः रघूत्तमागमनप्रतीक्षणं विना द्वादशीपारणां चक्रुः ॥

इतिकर्तव्यताप्रज्ञाप्रमोषविमनसो रघूत्तमतीर्थाः निराराध्यरामचन्द्रध्यानपराः द्वादश्यां तस्यां भिक्षां न स्वीचक्रुः ॥

प्रसन्नो भगवानर्कं रघुवर्यरूपेण स्वप्ने आगत्य रघूत्तमतीर्थरसनायां सारस्वतबीजाक्षरं विलिख्य, "इतः परं त्वया कस्यापि पण्डितस्य निकटे विद्याभ्यासो न कार्यः । सर्वविद्याप्रतिफलनं तव बुद्धौ भविष्यति । शिष्येभ्यो निरशङ्कं त्वमेव पाठोपदेशादि कुरु" इति कृपयानुगृह्यान्तर्दधे ॥

स्वप्नप्रबुद्धा रघूत्तमतीर्थाः अनुपदमेव सकलशास्त्रप्रवचनादिकमारेभिरे । तेषां विचित्रं पाण्डित्यं, प्रवचनचातुरींच रहसि वरदराजाचार्या अनुभूय साष्टाङ्गं तान् प्रणम्य क्षमामभ्यर्थयामासुः ॥

रघूत्तमतीर्थास्तु "यतो यूयं विद्यामदाभिभूताः, युष्माकं वंशे विद्याविहीना एव जायेरन्" इति प्रत्यब्रुवन् ॥

एतदारभ्य रघूत्तमतीर्थाः मठपत्याविनाभूतगजतुरगशिबिकादिसकलसामग्रीमनाथा भूत्वा राजेव तत्र तत्र संचारं पुण्यक्षेत्रयात्राद्यकुर्वन् ॥

परिणतवयसि वर्तमानेषु व्यासयोगीन्द्रेषु केचन शिष्यास्तद्रचिततात्पर्यचन्द्रिका परकीयैर्दूषितेत्येतदुक्त्वा तद्दूषणनिराकरणं करणीयमिति प्रार्थयामासुः ॥

व्यासयोगीन्द्रास्तु रघूत्तमतीर्थाः कर्तव्यं कुर्युरित्यभिधाय निजपरिणतवयसि नूतनग्रन्थरचनं न सुशकमिति शिष्यांस्तान्, रघूत्तमतीर्थसकाशं प्रेषयामासुरिति किंवदन्ती ॥

कदाचित् रघूत्तमतीर्थेषु बद्धवैराः केचन पाषण्डिनः, मध्येमार्गं, यतिवर्यान् हिंसितुं यावत् प्रवृत्तास्तावदग्निज्वालामालापरिवृता दह्यमानाः परमदीनस्वराश्चुक्रुशुः। योगीन्द्रकृपया शान्ताऽग्निज्वाला। कृतज्ञाः पाषण्डिनः शिष्यतां प्राप्ता इति वदन्ति ॥

एवं यात्राक्रमेण, पुराणप्रसिद्धे, पञ्चकृष्णारण्यक्षेत्रे, गालवमहर्षिवासस्थानभूते पदे यावन्न्यदधुस्तावद्योगप्रभावेण सन्निहितमात्मभौतिकदेहावसानं विज्ञाय सप्तचत्वारिंशद्वर्षे (४७) श्रीसीतासमेतरामचन्द्रध्यानपरा भूत्वा वृन्दावनस्थादिक्पालकभावमवापुः ॥

**श्रीरघूत्तमतीर्थानां** वृन्दावनं (तिरुक्कोविलूर्-समीप-मणम्पूण्डिग्रामे) दक्षिणपिनाकिन्या उत्तरे तीरे विराजते ॥

१५१७-तमे शके मन्मथवत्सरे पुष्यशुक्लैकादश्यां **रघूत्तमतीर्थानां** निर्याणमिति निर्णीतं वर्तते ॥

अद्यापि सेवाकर्तॄणामाध्यात्मिकादितापोपशमनं निजयोगसामर्थ्येन कुर्वाणाः परमपावनवृन्दावने सन्निहिताः श्रीरघूत्तमतीर्थाः जाज्वल्यमाना विराजन्ते ॥

## भावबोधकाराः

एतद्विरचितप्रबन्धेषु भावबोधपञ्चकं प्रसिद्धम्। अत एव **भावबोधकारा** इति व्यपदिश्यन्त इमे। ते च —

**भावबोधाख्या** गीताभाष्य-टीका।

**भावबोधाख्या** न्यायविवरण-टीका।

**भावबोधाख्या** विष्णुतत्त्वनिर्णय-टीका।

**भावबोधाख्या** बृहदारण्यकभाष्य-टीका।

**भावबोधाख्या** तत्त्वप्रकाशिका-टीका संप्रति मुद्राप्य प्रकाश्यमाना।

## तत्त्वप्रकाशिका-भावबोधः

भावबोधस्येमे विशेषाः प्रतिभान्ति—

(१) ग्रन्थस्य शैली तावल्ललिता, मनोहरा, क्वचित् सर्वसुगमा क्वचिद्विदुषामपि दुरधिगमार्था ॥

(२) प्रत्यधिकरणं कृता तदर्थचिन्ता किमपि निरुपमरामणीयकं धत्ते।

(३) पादावसानेषु सर्वत्राधिकरणेषु विद्यमानानामर्थजातानां पेटिका-सङ्गतिमुखेन प्रतिपादनं महतीमावहति शोभाम् ॥

(४) एवमेव प्रतिसूत्रं सङ्ख्यानिर्देशेन तत्तत्सूत्रसाध्यार्थविवरणं यत्कृतं, तदतीवोपकारकमिति न कदापि विस्मर्तव्यं भवति।

(५) भाष्य–न्यायविवरण–वाक्यार्थयोजनाप्रकाराष्टीकाप्रतीकपदर्शन-पूर्वकं सर्वत्र कमनीयया रीत्या प्रतिपादिताः "भावबोध" संज्ञामन्वर्थां कुर्वन्ति॥

(६) तत्र तत्र संभावितप्रकरणेषु पद-वाक्य-प्रमाणज्ञता प्राकाशि।

(७) परमतनिरासप्रणाळिकाऽन्तर्विलीना गूढा चकास्ति ।

(८) अधिकरणविन्यासौचित्यविचारोऽपि प्रौढस्तत्र तत्र वर्तते।

(९) अवतारिकासन्निवेशादिग्रन्थग्रन्थिविमोचनादि सर्वं, विचित्रधी-विनिर्मितं विभाति॥

(१०) सर्वत्र परमपरिशुद्धदार्शनिकी रीतिरवलम्बिता दरीदृश्यते॥

अत्रेदमालोचनीयम्—कश्चिदनाघ्रातवेदान्तगन्धः, निजशंकर-रामानुजपूर्णप्रमति प्रभृतिसकलदर्शनाचार्यावतारत्वोद्घोषणविरचितनिखिलजनबाधिर्यः प्रललाप—मध्वसिद्धान्तोऽप्यद्वैतमेवेति, तदतितुच्छतया, प्रामाणिकैर्निग्रहानर्हतयोपेक्षणीयमेव ।

परतत्त्वनिर्णयः सर्वत्र प्रमाणविरोधं विनैव कर्तव्यमिति किमु विशिष्य वक्तव्यम् ?

यदि जीवब्रह्मैक्यमेव परमं तत्त्वं स्यात्तर्हि तयोर्भेदः प्रमाणविरुद्धतया निरसनीय एव भवेत् ॥

एवमपि यदि जीवब्रह्मभेद एव परमं तत्त्वं स्यात्तर्हि तयोरैक्यं-प्रमाण-विरुद्धतया निरसनीयमेव स्यात् ॥

भेदाऽभेदयोः परस्परपरिहारेणैवानुभूयमानत्वात् । तथैव प्रमाणप्रतिपन्नत्वाच्च॥

यदि स्वतन्त्रतत्त्वस्यैकस्यैवाभ्युपगमेन मध्वमतमद्वैतं स्यात् हन्त? व्यावहारिकभेदप्रपञ्चाभ्युपगमेन शंकरमतं द्वैतं स्यादिति प्रतिबन्दी केन निवार्येत?

तस्माद्भगवदाज्ञया पाश्चात्यदेशेषु वेदान्तप्रचारार्थमवतीर्णा वयमिति दुरभिमानप्रमूढचेतसां पण्डितम्मन्यानामेतादृशा आक्षेपाः, अन्यथाप्रतीतयश्च प्रमाणैकशरणैः संप्रदायविद्भिः पारमार्थिकवेदान्ततत्त्वार्थविमर्शकैरुपेक्षणीया इति सिद्धम्॥

स्यादेतत्। एतदुपोद्घातोक्तग्रन्थपर्यालोचनेन को हि नाम सचेतनो न विजानीयान्मध्वदर्शनस्य तावदस्ति प्राधान्यं यावदस्ति शंकर—रामानुज दर्शनयोरिति॥

अपि च मध्वमतमधिकृत्य वेदान्तदेशिका एवमाहुः—

"मत्सन्निकृष्टमथवा मतमाश्रयध्वं प्रच्छन्नबौद्धविजये सततं यतध्वम्"

इति। सन्निकृष्टं मतं मध्वमतमेव।

मध्वमतविध्वंसनादिग्रन्थनिर्मातारोऽप्यप्पय्यदीक्षितेन्द्रा एवमाहुः—

"आनन्दतीर्थमुनि-लक्ष्मणदेशिकेन्द्रश्रीकण्ठयोगिपदवीरदवीयसीर्नः"

इति। तस्मान्निस्संशयं ज्ञायते मध्वमतस्य परमाभ्यर्हितत्वम्, परमोत्कृष्टत्वं च॥

कैश्चित् स्वमतानुसारेण शारीरकसूत्रानुगुण्यवर्णनं कृतम् अन्यैश्च निजमतानुसारेण सूत्राक्षरस्वारस्यादिनिरूपणं कृत तत्र तत्र वादप्रबन्धेषु दृश्यते॥

तत्सर्वमधिकृत्य श्रीमन्त्रालययोगीन्द्रा राघवेन्द्रतीर्थाः तात्पर्यचन्द्रिकाप्रकाशे तत्कृतव्याख्याने एवमाहुः—"यत्तु केनचित् सूत्रानुगुण्यं प्रदर्शितं, सूत्राक्षरस्वारस्यवर्णनं कृतं तदुभयमापातरमणीयं, चन्द्रिकोक्तदूषणगणलङ्घनजङ्घालं न भवतीति ग्रन्थगौरवभीरुभि, नाऽस्माभिस्तत्र पराक्रान्तम्। विस्तरस्तु गुरुपादकृतकण्टकोद्धारे द्रष्टव्य" इति। उक्तं च कण्टकोद्धारे—

"यद्यप्यानंदतीर्थीयभाष्यमेवोपपत्तिमत्।
न तु भाष्यान्तराणीति दर्शितं मम देशिकैः॥ १॥
तथाप्याधुनिकोक्तानां दूषणानामलग्नताम्।
प्रदर्श्य गुरुपादोक्तिमहिमात्र प्रकाश्यते"॥ २॥—इति।

—श्रीविजयीन्द्रतीर्थाः

एवं च मादृशैर्नाधिकं किमपि लेखनीयं विद्यत इति सर्वं समञ्जस-मशेषमतिमङ्गळम् ॥

उपोद्घातो जीयात् प्रचुरमतिसिद्धान्तविलस-
त्प्रबन्धप्रख्यातप्रचयचरिताख्यानचतुरः ।
जगज्जन्मस्थेमप्रलयमुखभावाष्टककर-
प्रभोर्लक्ष्मीशस्यामलतमकृपापूरितदृशा ॥ १ ॥

श्रीमद्रघूत्तमगुरूत्तमभावबोध-
मुद्रापणे कृतमतिर्विबुधः स्वयं यत् ।
श्रीचन्द्रशेखर-सुहृत्सकलाभिवाञ्छा-
लाभाधिपोऽस्तु गुरुराजदयाविशेषात् ॥ २ ॥

सत्यप्रमोद-गुरुराडनुभूयमान-
पूर्णप्रबोध-जनमोहनराज्यलक्ष्मीः ।
एधैधतां मम कृतिर्ललिता यथा सा
श्रीवेङ्कटेशगुणवर्णनवाग्विलासा ॥ ३ ॥

श्रीचेन्नपत्तन-सभाजितराजकीय-
मुद्राप्यमाणवरवाङ्मयमालिकायाम् ।
श्रीमद्रघूत्तमगुरूत्तमभावबोध-
रम्यारविन्दमिदमप्रतिमाभिरामम् ॥ ४ ॥

महामहोपाध्यायश्री-रामचन्द्रार्यसूनुना ।
नागेनायमुपोद्घातो रचितः श्रीशतुष्टये ॥ ५ ॥

॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

इति

पारमार्थिकविद्वद्विमर्शकसमुदायदासः

रा. नागराजशर्मा

॥ श्रीः ॥

## कालनिर्णयः

( सर्वत्र क्रैस्ताब्दात् परम् )

श्रीमध्वाचार्याः १९१९–१२७८ इति केचित् ।

१२३८–१३१८ इति अन्ये ।

पद्मनाभतीर्थाः १३१८–१३२४–( माठपत्यम् ) ।

नरहरितीर्थाः १३२४–१३३३–( माठपत्यम् ) ।

माधवतीर्थाः १३३३–१३५०–( माठपत्यम् ) ।

अक्षोभ्यतीर्थाः १३५०–१३६७–( माठपत्यम् ) ।

जयतीर्थाः १३१८–१३८८

व्यासराजतीर्थाः १४४६–१५३९ ।

विजयीन्द्रतीर्थाः १५१४–१५९५ ।

राघवेन्द्रतीर्थाः १६०१–१६७१ ।

विद्याधीशतीर्थाः १६१९–१६३१–( माठपत्यम् ) ।

रघुनाथतीर्थाः १६९५–१७४२–( माठपत्यम् ) ।

वादिराजतीर्थाः १५१२–१५९७ ।

रघूत्तमतीर्थाः १५४८–१५९५ ।

अत्र वर्षसंख्यानिर्देशस्सर्वत्र किंचिन्न्यूनाधिकः
इति वेदितव्यम् ।

---

॥ श्री ॥

॥ श्रीमद्धनुमद्भीम-मध्वान्तर्गतराम-कृष्ण-वेद
व्यासात्मक-लक्ष्मीहयग्रीवाय नमः ॥

# ॥ श्रीमत्तत्वप्रकाशिकाभावबोधः ॥

## विषयाः

## ॥ प्रथमाध्यायः ॥


| अधि. संख्या | | पत्र संख्या |
|---|---|---|
| | ॥ प्रथमः पादः ॥ | |
| १ | जिज्ञासाधिकरणम् । | १ |
| २ | जन्माद्यधिकरणम् । | २३ |
| ३ | शास्त्रयोनित्वाधिकरणम् । | २६ |
| ४ | समन्वयाधिकरणम् । | ३० |
| ५ | ईक्षत्यधिकरणम् । | ३३ |
| ६ | आनन्दमयाधिकरणम् । | ४० |
| ७ | अन्तस्थत्वाधिकरणम् । | ५३ |
| ८ | आकाशाधिकरणम् । | ५६ |
| ९ | प्राणाधिकरणम् । | ५८ |
| १० | ज्योतिरधिकरणम् । | ६० |
| ११ | गायत्र्यधिकरणम् । | ६१ |
| १२ | (अन्तिम) अन्तर्यामि-प्राणाधिकरणम् । | ७० |
| | ॥ द्वितीयः पादः ॥ | |
| १३ | सर्वगतत्वाधिकरणम् | ७६ |
| १४ | अतृत्वाधिकरणम् । | ८१ |
| १५ | गुहाधिकरणम् । | ८४ |
| १६ | अन्तराधिकरणम् । | ८७ |
| १७ | अन्तर्याम्यधिकरणम् । | ९३ |
| १८ | अदृश्यत्वाधिकरणम । | ९६ |
| १९ | वैश्वानराधिकरणम् । | ९९ |
| | ॥ तृतीयः पादः ॥ | |
| २० | द्युभ्वाद्यधिकरणम् । | १०५ |
| २१ | भूमाधिकरणम् । | ११२ |
| २२ | अक्षराधिकरणम् । | ११६ |
| २३ | सदधिकरणम् । | १२० |
| २४ | दहराधिकरणम् । | १२२ |
| २५ | अनुकृत्यधिकरणम् । | १३२ |
| २६ | वामनाधिकरणम् । | १३५ |
| २७ | देवताधिकरणम् । | १४२ |
| २८ | अपशूद्राधिकरणम् । | १४८ |
| २९ | कम्पनाधिकरणम् । (वज्राधिकरणम्) | १५४ |
| ३० | जीवज्योतिरधिकरणम् । | १५६ |
| ३१ | अव्याकृताकाशाधिकणरम् । | १६० |
| ३२ | सुषुप्त्यधिकरणम् । | १६२ |
| ३३ | परयधिकरणम् । | १६४ |

| अधि संख्या | पत्र संख्या | अधि संख्या | पत्र संख्या |
|---|---|---|---|
| ॥ चतुर्थः पादः ॥ | | ३७ कारणत्वाधिकरणम् (कारणत्वेनचाकाशाधिकरणम्) | १८० |
| ३४ आनुमानिकाधिकरणम् । | १६९ | ३८ समाकर्षाधिकरणम् | १८२ |
| ३५ ज्योतिरधिकरणम् । (कर्मज्योतिरधिकरणम्) | १७५ | ३९ प्रकृत्यधिकरणम् | १८५ |
| ३६ न सङ्ख्योपसङ्ग्रहाधिकरणम् । | १७८ | ४० एतेन सर्वेव्याख्याताधिकरणम् । (सर्वव्याख्याताधिकरणम्) | १८७ |

॥ इति प्रथमाध्यायः ॥

## ॥ अथ द्वितीयोऽध्यायः ॥

| | | | |
|---|---|---|---|
| ॥ प्रथमः पादः ॥ | | ५४ अभ्युपगमाधिकरणम् । | २२५ |
| ४१ स्मृत्यधिकरणम् । | १८९ | ५५ पुरुषाश्माधिकरणम् । | २२६ |
| ४२ न विलक्षणत्वाधिकरणम् | १९४ | ५६ अन्यथानुमित्यधिकरणम् । | २२७ |
| ४३ अभिमान्यधिकरणम् । | १९७ | ५७ वैशेषिकाधिकरणम् । | २२८ |
| ४४ असदधिकरणम् । | २०० | ५८ समुदायाधिकरणम् । | २३२ |
| ४५ भोक्त्रापत्त्यधिकरणम । | २०५ | ५९ शून्याधिकरणम् । | २३७ |
| ४६ तदनन्यत्वा (आरम्भणा) धिकरणम् । | २०८ | ६० अनुपलब्ध्यधिकरणम् । | २३९ |
| ४७ इतरव्यपदेशाधिकरणम् । | २१३ | ६१ नैकस्मिन्नधिकरणम् । | २४० |
| ४८ श्रुतिशब्दमूलत्वाधिकरणम् | २१५ | ६२ पत्युरधिकरणम् । | २४२ |
| ४९ नप्रयोजनवत्त्वाधिकरणम् । | २१७ | ६३ उत्पत्त्यधिकरणम् । | २४३ |
| ५० वैषम्यनैर्घृण्याधिकरणम् । | २१८ | ॥ तृतीयः पादः ॥ | |
| ५१ सर्वधर्मोपपत्त्यधिकरणम् । | २२० | ६४ वियदधिकरणम् । | २४६ |
| ॥ द्वितीयः पादः ॥ | | ६५ मातरिश्वाधिकरणम् । | २५१ |
| ५२ रचनाधिकरणम् । | २२२ | ६६ असम्भवाधिकरणम् । | २५३ |
| ५३ अन्यत्राभावाधिकरणम् । | २२४ | ६७ तेजोऽधिकरणम् । | २५५ |
| | | ६८ अबधिकरणम् । | २५७ |

| अधि. संख्या | | पत्र संख्या | अधि. संख्या | | पत्र संख्य |
|---|---|---|---|---|---|
| ६९ | पृथिव्यधिकरणम् । | २५८ | ८२ | अदृष्टाधिकरणम् । | २८८ |
| ७० | तदभिध्यानाधिकरणम् । | २६० | | ॥ चतुर्थः पादः ॥ | |
| ७१ | विपर्ययाधिकरणम् । | २६२ | ८३ | प्राणोत्पत्यधिकरणम् । | २९१ |
| ७२ | अन्तरा-धिकरणम् । (अन्तरा विज्ञानाधिकरणम्) | २६४ | ८४ | तत्प्रागधिकरणम् । | २९३ |
| | | | ८५ | तत्पूर्वकत्वाधिकरणम् । | २९५ |
| | | | ८६ | सप्तगत्यधिकरणम् । | २९८ |
| ७३ | नात्माधिकरणम् । | २६६ | ८७ | अण्वधिकरणम् । | ३०० |
| ७४ | ज्ञाधिकरणम् । | २६७ | ८८ | श्रेष्ठाधिकरणम् । | ३०२ |
| ७५ | उत्क्रांत्यधिकरणम् । | २६९ | ८९ | चक्षुराद्यधिकरणम् । | ३०४ |
| ७६ | व्यतिरेकाधिकरणम् । | २७३ | ९० | पंचवृत्यधिकरणम् । | ३०५ |
| ७७ | पृथगधिकरणम् । | २७४ | ९१ | अणुश्चाधिकरणम् । | ३०७ |
| ७८ | यावदधिकरणम् । | २७६ | ९२ | ज्योतिराद्यधिकरणम् । | ३०८ |
| ७९ | पुंस्त्वाधिकरणम् । | २७८ | ९३ | त इन्द्रियाधिकरणम् । | ३१० |
| ८० | कर्तृत्वाधिकरणम् । | २८१ | ९४ | संज्ञाधिकरणम् । | ३११ |
| ८१ | अंशाधिकरणम् । | २८३ | ९५ | मांसाधिकरणम् । | ३१३ |


॥ इति द्वितीयोऽध्यायः ॥

---

## ॥ अथ तृतीयोऽध्यायः ॥


| | | | | | |
|---|---|---|---|---|---|
| | ॥ प्रथमः पादः ॥ | | १०२ | भाक्ताधिकरणम् । | ३२६ |
| ९६ | तदन्तराधिकरणम् । | ३१५ | १०३ | कृतात्ययाधिकरणम् । | ३२९ |
| ९७ | त्र्यात्मकत्वाधिकरणम् । | ३१७ | १०४ | यथेताधिकरणम् । | ३३१ |
| ९८ | प्राणगत्यधिकरणम् । | ३१८ | १०५ | चरणाधिकरणम् । | ३३२ |
| ९९ | अग्न्यधिकरणम् । (अग्न्यादिगत्यधि-करणम्) | ३२० | १०६ | अनिष्टाधिकरणम् । | ३३५ |
| | | | १०७ | अपिसप्ताधिकरणम् । | ३३८ |
| | | | १०८ | तत्राप्यधिकरणम् । | ३३९ |
| १०० | प्रथमेऽश्रवणाधिकरणम् । | ३२० | १०९ | विद्याधिकरणम् । | ३४० |
| १०१ | अश्रुतत्वाधिकरणम् । | ३२३ | ११० | न तृतीयाधिकरणम् । | ३४२ |

| अधि संख्या | | पत्र सख्या |
|---|---|---|


| अधि संख्या | | पत्र सख्या |
|---|---|---|
| १११ | तत्स्वाभाव्याधिकरणम्। | ३४५ |
| ११२ | नातिचिरेणाधिकरणम्। | ३४६ |
| ११३ | अन्याधिकरणम्। | ३४७ |
| ११४ | रेतोधिकरणम्। | ३४९ |
| ११५ | योन्यधिकरणम्। | ३५१ |
| | ॥ द्वितीयः पादः ॥ | |
| ११६ | सन्ध्यधिकरणम्। | ३५५ |
| ११७ | पराभिध्याधिकरणम्। | ३६० |
| ११८ | देहयोगाधिकरणम् | ३६१ |
| ११९ | तदभावाधिकरणम्। | ३६३ |
| १२० | (अत)प्रबोधाधिकरणम् | ३६५ |
| १२१ | कर्मानुस्मृत्यधिकरणम् | ३६६ |
| १२२ | (स)मुग्धाधिकरणम्। | ३६८ |
| १२३ | न स्थानतोधिकरणम्। | ३७० |
| १२४ | अरूपाधिकरणम्। | ३७४ |
| १२५ | अत एवाधिकरणम्। | ३७७ |
| १२६ | अम्बुवदधिकरणम्। | ३८० |
| १२७ | वृद्धिह्रासाधिकरणम्। | ३८१ |
| १२८ | प्रकृतैतावत्त्वाधिकरणम् | ३८३ |
| १२९ | तदव्यक्ताधिकरणम्। | ३८४ |
| १३० | अहिकुण्डलाधिकरणम्। | ३८७ |
| १३१ | परमतोधिकरणम्। | ३८९ |
| १३२ | स्थानविशेषाधिकरणम। | ३९१ |
| १३३ | तथान्यदधिकरणम्। | ३९२ |
| १३४ | अनेनसर्वगतत्वाधिकरणम्। | ३९३ |
| १३५ | फलाधिकरणम्। | ३९५ |
| | ॥ तृतीयः पादः ॥ | |
| १३६ | सर्ववेदान्ताधिकरणम्। | ३९८ |
| १३७ | उपसंहाराधिकरणम्। | ४०१ |
| १३८ | प्राप्त्यधिकाणम्। | ४०४ |
| १३९ | सर्वाभेदाधिकरणम्। | ४०५ |
| १४० | आनन्दाद्यधिकरणम्। | ४०६ |
| १४१ | प्रियशिरस्त्वाधिकरणम् | ४०७ |
| १४२ | इतराधिकरणम। | ४०८ |
| १४३ | आध्यानाधिकरणम्। | ४१० |
| १४४ | आत्मगृहीत्यधिकरणम् | ४१२ |
| १४५ | अन्वयाधिकरणम्। | ४१३ |
| १४६ | कार्याधिकरणम। | ४१४ |
| १४७ | समानाधिकरणम्। | ४१६ |
| १४८ | न वा विशेषाधिकरणम् | ४१८ |
| १४९ | सम्भृत्यधिकरणम्। | ४२१ |
| १५० | पुरुषविद्याधिकरणम्। | ४२२ |
| १५१ | वेधाद्यधिकरणम्। | ४२३ |
| १५२ | हान्यधिकरणम। | ४२५ |
| १५३ | छन्दाधिकरणम्। | ४२७ |
| १५४ | अनियमाधिकरणम्। | ४२९ |
| १५५ | यावदधिकाराधिकरणम् | ४३० |
| १५६ | इयदामननाधिकरणम्। | ४३२ |
| १५७ | व्यतिहाराधिकरणम्। | ४३३ |
| १५८ | सत्याधिकरणम्। | ४३४ |
| १५९ | कामाधिकरणम्। | ४३५ |
| १६० | निर्धारणाधिकरणम्। | ४३७ |
| १६१ | प्रदानाधिकरणम्। | ४३८ |
| १६२ | लिङ्गभूयस्त्वाधिकरणम् | ४४० |

| अधि संख्या | | पत्र संख्या |
|---|---|---|
| १६३ | पूर्वविकल्पाधिकरणम्। | ४४० |
| १६४ | विद्यैवाधिकरणम्। | ४४३ |
| १६५ | श्रुत्याद्यधिकरणम्। | ४४४ |
| १६६ | अनुबन्धाधिकरणम्। | ४४५ |
| १६७ | प्रज्ञान्तराधिकरणम्। | ४४७ |
| १६८ | नसामान्याधिकरणम्। | ४४९ |
| १६९ | परेणाधिकरणम्। | ४५१ |
| १७० | एकाधिकरणम्। | ४५२ |
| १७१ | अङ्गावबद्धाधिकरणम्। | ४५४ |
| १७२ | भूमज्यायस्त्वाधिकरणम् | ४५६ |
| १७३ | नानाशब्दाधिकरणम्। | ४५७ |
| १७४ | विकल्पाधिकरणम्। | ४५८ |
| १७५ | काम्याधिकरणम्। | ४५९ |
| १७६ | अङ्गाधिकरणम्। | ४६१ |
| १७७ | नवाधिकरणम्। | ४६२ |


॥ चतुर्थः पादः ॥


| अधि. संख्या | | पत्र संख्या |
|---|---|---|
| १७८ | पुरुषार्थाधिकरणम्। | ४६५ |
| १७९ | असार्वत्रिक्यधिकरणम्। | ४६८ |
| १८० | नाऽविशेषाधिकरणम्। | ४६९ |
| १८१ | स्तुत्यधिकरणम्। | ४७० |
| १८२ | उभयलिङ्गाधिकरणम्। | ४७७ |
| १८३ | आधिकारिकाधिकरणम् | ४८० |
| १८४ | फलश्रुत्यधिकरणम्। | ४८३ |
| १८५ | कृत्स्नभावाधिकरणम्। | ४८५ |
| १८६ | अनाविष्काराधिकरणम् | ४८६ |
| १८७ | ऐहिकाधिकरणम्। | ४८९ |
| १८८ | मुक्तिफलाधिकरणम्। | ४८९ |


॥ इति तृतीयोऽध्यायः ॥

## ॥ अथचतुर्थोऽध्यायः ॥

॥ प्रथमः पादः ॥


| | | |
|---|---|---|
| १८९ | आवृत्त्यधिकरणम्। | ४९२ |
| १९० | आत्माधिकरणम्। | ४९५ |
| १९१ | प्रतीकाधिकरणम्। | ४९६ |
| १९२ | ब्रह्मदृष्ट्यधिकरणम्। | ४९८ |
| १९३ | आदित्याधिकरणम् | ५०० |
| १९४ | आसीनाधिकरणम्। | ५०१ |
| १९५ | आप्रायणाधिकरणम्। | ५०५ |
| १९६ | तदधिगमाधिकरणम्। | ५०६ |


॥ द्वितीयः पादः ॥


| | | |
|---|---|---|
| १९७ | वागधिकरणम्। | ५११ |
| १९८ | मन प्राणाधिकरणम्। | ५१४ |
| १९९ | अध्यक्षाधिकरणम्। | ५१५ |
| २०० | भूताधिकरणम्। | ५१६ |
| २०१ | नैकस्मिन् दर्शयतोधिकरणम्। | ५१८ |
| २०२ | समनाधिकरणम्। | ५२० |
| २०३ | तानिपरेधिकरणम्। | ५२३ |
| २०४ | अविभागाधिकरणम्। | ५२४ |
| २०५ | तदोकाधिकरणम्। | ५२५ |

| | अध्यायाः | पादाः | नामानि |
|---|---|---|---|
| (४) | चतुर्थः | प्रथमः | कर्मक्षयपादः । |
| | ,, | द्वितीयः | उत्क्रांतिपादः । |
| | ,, | तृतीयः | मार्गपादः । |
| | ,, | चतुर्थः | भोगपादः । |

॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

---

॥ श्रीः ॥

# ब्रह्म-सूत्राधिकरण सूची

| अध्याय | पाद १ | पाद २ | पाद ३ | पाद ४ |
|---|---|---|---|---|
| १ | १२ | ७ | १४ | ७ |
| २ | ११ | १२ | १९ | १३ |
| ३ | २० | २० | ४२ | ११ |
| ४ | ८ | १० | ६ | ११ |

## मिलित-सूची

| | | |
|---|---|---|
| प्रथमाध्याये | अधिकरणानि | ४० |
| द्वितीयाध्याये | ,, | ५५ |
| तृतीयाध्याये | ,, | ९३ |
| चतुर्थाध्याये | ,, | ३५ |

सर्वं मिलित्वा २२३ अधिकरणानि

---

## सूत्रसूची

| अध्याय | पाद १ | पाद २ | पाद ३ | पाद ४ |
|---|---|---|---|---|
| १ | ३१ | ३२ | ४३ | २९ |
| २ | ३८ | ४५ | ५३ | २३ |
| ३ | २९ | ४२ | ६८ | ५१ |
| ४ | १९ | २२ | १६ | २३ |

| | | |
|---|---|---|
| प्रथमाध्याये | सूत्राणि | १३५ |
| द्वितीयाध्याये | ,, | १५९ |
| तृतीयाध्याये | ,, | १९० |
| चतुर्थाध्याये | ,, | ८० |
| | सर्व मिळित्वा | ५६४ सूत्राणि |

## फलित-सूची

| अध्याय | अधिकरण | सूत्र |
|---|---|---|
| १ | ४० | १३५ |
| २ | ५५ | १५९ |
| ३ | ९३ | १९० |
| ४ | ३५ | ८० |
| ४ | २२३ | ५६४ |

॥ श्रीहयग्रीवार्पणमस्तु ॥

॥ श्रीः ॥
॥ श्रीवेदव्यासाय नमः ॥

# ॥ विषयाः ॥

॥ श्रीमध्वभाष्यरीत्या-ब्रह्म-सूत्राधिकरणानि सूत्राणि च ॥

---

## ॥ प्रथमोऽध्यायः ॥ १ ॥

### ॥ प्रथमः पादः ॥ १ ॥


| अधिकरण नाम | पत्र संख्या |
|---|---|
| (१) जिज्ञासाधिकरणम् | १ |
| अथाऽतो ब्रह्मजिज्ञासा ॥ १ ॥ | |
| (२) जन्माद्यधिकरणम् | २३ |
| जन्माद्यस्य यत ॥ २ ॥ | |
| (३) शास्त्रयोनित्वाधिकरणम् | २६ |
| शास्त्रयोनित्वात् ॥ ३ ॥ | |
| (४) समन्वयाधिकरणम् | ३० |
| तत्तु समन्वयात् ॥ ४ ॥ | |
| (५) ईक्षत्यधिकरणम् | ३३ |
| ईक्षतेर्नाऽशब्दम् ॥ ५ ॥ | |
| गौणश्चेन्नात्मशब्दात् ॥ ६ ॥ | |
| तन्निष्ठस्य मोक्षोपदेशात् ॥ ७ ॥ | |
| हेयत्वावचनाच्च ॥ ८ ॥ | |
| स्वाप्ययात् ॥ ९ ॥ | |
| गतिसामान्यात् ॥ १० ॥ | |
| श्रुतत्वाच्च ॥ ११ ॥ | |

अधिकरण नाम पत्र संख्या

(६) आनन्दमयाधिकरणम् ४०

अनन्दमयोभ्यासात् ॥ १२ ॥
विकारशब्दान्नेतिचेन्न प्राचुर्यात् ॥ १३ ॥
तद्धेतुव्यपदेशाच्च ॥ १४ ॥
मान्त्रवर्णिकमेव च गीयते ॥ १५ ॥
नेतरोऽनुपपत्तेः ॥ १६ ॥
भेदव्यपदेशाच्च ॥ १७ ॥
कामाच्चनानुमानापेक्षा ॥ १८ ॥
अस्मिन्नस्य च तद्योगं शास्ति ॥ १९ ॥

(७) अन्तस्थत्वाधिकरणम् ५३

अन्तस्तद्धर्मोपदेशात् ॥ २० ॥
भेदव्यपदेशाच्चान्यः ॥ २१ ॥

(८) आकाशाधिकरणम् ५६

आकाशस्तल्लिङ्गात् ॥ २२ ॥

(९) प्राणाधिकरणम् ५८

अत एव प्राणः ॥ २३ ॥

(१०) ज्योतिरधिकरणम् ६०

ज्योतिश्चरणाभिधानात् ॥ २४ ॥

(११) गायत्र्यधिकरणम् ६१

छन्दोभिधानान्नेतिचेन्न तथा चेतोर्पणनिगदात्तथा हि दर्शयति ॥ २५ ॥
भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ २६ ॥
उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॥ २७ ॥

(१२) अन्तर्यामि(अन्तिम)प्राणाधिकरणम् ७०

प्राणस्तथानुगमात् ॥ २८ ॥
नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमाह्यस्मिन् ॥ २९ ॥
शास्त्रदृष्ट्यातूपदेशोवामदेववत् ॥ ३० ॥

अधिकरण नाम पत्र संख्या

जीवमुख्यप्राणलिङ्गान्नेतिचेन्नोपासात्रैविध्यादाश्रितत्वादिह-
तद्योगात ॥ ३१ ॥

॥ इति प्रथमः पादः ॥ १ ॥

---

## ॥ अथद्वितीयः पादः ॥ २ ॥

(१) सर्वत्रप्रसिद्धा(सर्वगतत्वा)धिकरणम् ७६

सर्वत्रप्रसिद्धोपदेशात ॥ १ ॥
विवक्षितगुणोपपत्तेश्च ॥ २ ॥
अनुपपत्तेस्तु न शारीरः ॥ ३ ॥
कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥
शब्दविशेषात् ॥ ५ ॥
स्मृतेश्च ॥ ६ ॥
अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥
संभोगप्राप्तिरितिचेन्नवैशेष्यात् ॥ ८ ॥

(२) अत्तृत्वाधिकरणम् ८१

अत्ताचराचरग्रहणात् ॥ ९ ॥
प्रकरणाच्च ॥ १० ॥

(३) गुहाधिकरणम् ८४

गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ ११ ॥
विशेषणाच्च ॥ १२ ॥

(४) अन्तराधिकरणम् ८७

अन्तर उपपत्तेः ॥ १३ ॥
स्थानादिव्यपदेशाच्च ॥ १४ ॥
सुखविशिष्टाभिधानादेवच ॥ १५ ॥
श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १६ ॥
अनवस्थितेरसंभवाच्चनेतर ॥ १७ ॥

अधिकरण नाम पत्र संख्या

(५) अन्तर्याम्यधिकरणम् ९३

अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥

न च स्मार्तमतद्धर्माभिलापात् ॥ १९ ॥

शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ २० ॥

(६) अदृश्यत्वाधिकरणम् ९६

अदृश्यत्वादिगुणको धर्मोक्तेः ॥ २१ ॥

विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥

रूपोपन्यासाच्च ॥ २३ ॥

(७) वैश्वानराधिकरणम् ९९

वैश्वानरः साधारणशब्दविशेषात् ॥ २४ ॥

स्मर्यमाणमनुमानं स्यात् (स्यादिति) ॥ २५ ॥

शब्दादिभ्योन्तः प्रतिष्ठानान्नेति चेन्न तथा दृष्ट्युपदेशादसंभवा-
-त्पुरुषविधमपि चैनमधीयते ॥ २६ ॥

अत एव न देवता भूतं च ॥ २७ ॥

साक्षादप्यविरोधं जैमिनिः ॥ २८ ॥

अभिव्यक्तेरित्याश्मरथ्यः ॥ २९ ॥

अनुस्मृतेर्बादरिः ॥ ३० ॥

सम्पत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥

आमनन्ति चैनमस्मिन् ॥ ३२ ॥

॥ इति द्वितीयः पादः ॥ २ ॥

---

॥ अथ तृतीयः पादः ॥

(१) द्युभ्वाद्यधिकरणम् १०५

द्युभ्वाद्यायतनं स्वशब्दात् ॥ १ ॥

मुक्तोपसृप्यव्यपदेशात् ॥ २ ॥

नानुमानमतच्छब्दात् ॥ ३ ॥

प्राणभृच्च ॥ ४ ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| भेदव्यपदेशात् ॥ ५ ॥ | |
| प्रकरणात् ॥ ६ ॥ | |
| स्थित्यदनाभ्यां च ॥ ७ ॥ | |
| (२) भूमाधिकरणम् | ११२ |
| भूमासंप्रसादादध्युपदेशात् ॥ ८ ॥ | |
| धर्मोपपत्तेश्च ॥ ९ ॥ | |
| (३) अक्षराधिकरणम् | ११६ |
| अक्षरमंबरान्तधृतेः ॥ १० ॥ | |
| सा च प्रशासनात् ॥ ११ ॥ | |
| अन्यभावव्यावृत्तेश्च ॥ १२ ॥ | |
| (४) सदधिकरणम् | १२० |
| ईक्षतिकर्मव्यपदेशात्सः ॥ १३ ॥ | |
| (५) दहराधिकरणम् | १२२ |
| दहर उत्तरेभ्यः ॥ १४ ॥ | |
| गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च ॥ १५ ॥ | |
| धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः ॥ १६ ॥ | |
| प्रसिद्धेश्च ॥ १७ ॥ | |
| इतरपरामर्शात्स इति चेन्ना संभवात् ॥ १८ ॥ | |
| उत्तराच्चेदाविर्भूत स्वरूपस्तु ॥ १९ ॥ | |
| अन्यार्थश्च परामर्शः ॥ २० ॥ | |
| अल्पश्रुतेरिति चेत्तदुक्तम् ॥ २१ ॥ | |
| (६) अनुकृत्यधिकरणम् | १३२ |
| अनुकृतेस्तस्य च ॥ २२ ॥ | |
| अपि स्मर्यते ॥ २३ ॥ | |
| (७) वामनाधिकरणम् | १३५ |
| शब्दादेवप्रमितः ॥ २४ ॥ | |
| हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ | |

अधिकरण नाम | पत्र संख्या

(८) देवताधिकरणम् १४२

तदुपर्यपि बादरायणः संभवात् ॥ २६ ॥

विरोधः कर्मणीति चेन्नाऽनेकप्रतिपत्तेर्दर्शनात् ॥ २७ ॥

शब्द इति चेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम् ॥ २८ ॥

अत एव च नित्यत्वम् ॥ २९ ॥

समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्च ॥ ३० ॥

मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ ३१ ॥

ज्योतिषि भावाच्च ॥ ३२ ॥

भावं तु बादरायणोऽस्ति हि ॥ ३३ ॥

(९) अपशूद्राधिकरणम् १४८

शुगस्यतदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥

क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥

श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥

(१०) कंपना(वज्रा)धिकरणम् १५४

कंपनात् ॥ ३९ ॥

(११) जीवज्योतिर(ज्योति)धिकरणम् १५६

ज्योतिर्दर्शनात् ॥ ४० ॥

(१२) अव्याकृताकाशाधिकरणम् १६०

आकाशोर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

(१३) सुषुप्त्यधिकरणम् १६२

सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ ४२ ॥

(१४) पत्यधिकरणम् १६४

पत्यादिशब्देभ्यः ॥ ४३ ॥

॥ इति तृतीयः पादः ॥ ३ ॥

अधिकरण नाम | पत्र संख्या

॥ अथ चतुर्थः पादः ॥ ४ ॥

(१) आनुमानिकाधिकरणम् १६९

आनुमानिकप्येकेषामिति चेन्न शरीररूपक-
विन्यस्तगृहीतेर्दर्शयति च ॥ १ ॥
सूक्ष्मं तु तदर्हत्वात् ॥ २ ॥
तदधीनत्वादर्थवत् ॥ ३ ॥
ज्ञेयत्वावचनाच्च ॥ ४ ॥
वदतीति चेन्न प्राज्ञो हि ॥ ५ ॥
प्रकरणात् ॥ ६ ॥
त्रयाणामेवचैवमुपन्यासः प्रश्नश्च ॥ ७ ॥
महद्वच्च ॥ ८ ॥
चमसवदविशेषात् ॥ ९ ॥

(२) ज्योतिरुपक्रमा(कर्मज्योतिर)धिकरणम् १७५

ज्योतिरुपक्रमात्तु तथाह्यधीयत एके ॥ १० ॥
कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ ११ ॥

(३) नसंख्योपसंग्रहाधिकरणम् १७८

नसंख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १२ ॥
प्राणादयोवाक्यशेषात् ॥ १३ ॥
ज्योतिषैकेषामसत्यन्ने ॥ १४ ॥

(४) कारणत्वेनाधिकरणम् १८०

कारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेः ॥ १५ ॥

(५) समाकर्षाधिकरणम् १८२

समाकर्षात् ॥ १६ ॥
जगद्वाचित्वात् ॥ १७ ॥
जीवमुख्यप्राणलिङ्गादिति चेत्तद्व्याख्यातम् ॥ १८ ॥
अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १९ ॥

अधिकरण नाम पत्र संख्या

वाक्यान्वयात् ॥ २० ॥
प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्य ॥ २१ ॥
उत्क्रमिष्यत एव भावादित्यौडुलोमि ॥ २२ ॥
अवस्थितेरिति काशकृत्स्न ॥ २३ ॥

(६) प्रकृत्यधिकरणम् १८५
प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ २४ ॥
अभिध्योपदेशाच्च ॥ २५ ॥
साक्षाच्चोभयाम्नानात् ॥ २६ ॥
आत्मकृते परिणामात् ॥ २७ ॥
योनिश्च हि गीयते ॥ २८ ॥

(७) एतेनसर्वेव्याख्याता(सर्वेव्याख्याता)धिकरणम् १८७
एतेन सर्वेव्याख्याता व्याख्याता ॥ २९ ॥

॥ इति चतुर्थ पाद ॥ ४ ॥
॥ इति प्रथमाध्याय समाप्त ॥

---

॥ श्री ॥
॥ वेदव्यासाय नम ॥

॥ द्वितीयोध्यायः ॥ २ ॥

॥ अथ प्रथमः पादः ॥

(१) स्मृत्यधिकरणम् १८९
स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नाऽन्यस्मृत्यनवकाशदोष प्रसङ्गात् ॥ १ ॥
इतरेषा चाऽनुपलब्धे ॥ २ ॥
एतेन योग प्रत्युक्त ॥ ३ ॥

(२) न विलक्षणत्वाधिकरणम् १०४
न विलक्षणत्वादस्य तथात्व च शब्दात् ॥ ४ ॥
दृश्यते तु ॥ ५ ॥

अधिकरण नाम पत्र संख्या

(३) अभिमान्यधिकरणम् १९७

अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ६ ॥

दृश्यते च ॥ ७ ॥

(४) असदधिकरणम् २००

असदिति चेन्न प्रतिषेधमात्रपरत्वात् ॥ ८ ॥

अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ९ ॥

न तु दृष्टान्तभावात् ॥ १० ॥

स्वपक्षदोषाच्च ॥ ११ ॥

तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यनिर्मोक्ष प्रसङ्गः ॥ १२ ॥

एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः ॥ १३ ॥

(५) भोक्त्रापत्त्यधिकरणम् २०५

भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १४ ॥

(६) तदनन्यत्वाधिकरणम् २०८

तदनन्यत्वमारंभणशब्दादिभ्यः ॥ १५ ॥

भावे चोपलब्धेः ॥ १६ ॥

सत्त्वाच्चावरस्य ॥ १७ ॥

असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १८ ॥

युक्तेः शब्दांतराच्च ॥ १९ ॥

पटवच्च ॥ २० ॥

यथाप्राणादिः ॥ २१ ॥

(७) इतरव्यपदेशाधिकरणम् २१३

इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २२ ॥

अधिकं तु भेदनिर्देशात् ॥ २३ ॥

अश्मादिवच्च तदनुपपत्तिः ॥ २४ ॥

उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २५ ॥

देवादिवदपि लोके ॥ २६ ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| कृत्स्नप्रसक्तिर्निरवयवशब्दकोपो वा ॥ २७ ॥ | |
| (८) श्रुतिशब्दमूलत्वाधिकरणम् | २१५ |
| श्रुतेस्तु शब्दमूलत्वात् ॥ २८ ॥ | |
| आत्मनि चैवं विचित्राश्च हि ॥ २९ ॥ | |
| स्वपक्षदोषाच्च ॥ ३० ॥ | |
| सर्वोपेता च तद्दर्शनात् ॥ ३१ ॥ | |
| विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३२ ॥ | |
| (९) न प्रयोजनवत्त्वाधिकरणम् | २१७ |
| न प्रयोजनवत्त्वात् ॥ ३३ ॥ | |
| लोकवत्तु लीलाकैवल्यम् ॥ ३४ ॥ | |
| (१०) वैषम्यनैर्घृण्याधिकरणम् | २१८ |
| वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३५ ॥ | |
| न कर्माविभागादिति चेन्नाऽनादित्वात् ॥ ३६ ॥ | |
| उपपद्यते चाप्युपलभ्यते च ॥ ३७ ॥ | |
| (११) सर्वधर्मोपपत्त्यधिकरणम् | २२० |
| सर्वधर्मोपपत्तेश्च ॥ ३८ ॥ | |
| ॥ इति प्रथमः पादः ॥ १ ॥ | |
| ॥ अथ द्वितीयः पादः ॥ २ ॥ | |
| (१) रचनानुपपत्त्यधिकरणम् | २२२ |
| रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ | |
| प्रवृत्तेश्च ॥ २ ॥ | |
| पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥ | |
| व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥ | |
| (२) अन्यत्राभावाधिकरणम् | २२४ |
| अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥ | |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| (३) अभ्युपगमाधिकरणम् | २२५ |
| अभ्युपगमेऽप्यर्थाभावात् ॥ ६ ॥ | |
| (४) पुरुषाश्माधिकरणम् | २२६ |
| पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥ | |
| अङ्गित्वानुपपत्तेः ॥ ८ ॥ | |
| (५) अन्यथानुमित्यधिकरणम् | २२७ |
| अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥ | |
| विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥ | |
| (६) वैशेषिकाधिकरणम् | २२८ |
| महद्दीर्घवद्वाह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ | |
| उभयथापि न कर्मातस्तदभावः ॥ १२ ॥ | |
| समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥ | |
| नित्यमेव च भावात् ॥ १४ ॥ | |
| रूपादिमत्वाच्च विपर्ययो दर्शनात् ॥ १५ ॥ | |
| उभयथा च दोषात् ॥ १६ ॥ | |
| अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥ | |
| (७) समुदायाधिकरणम् | २३२ |
| समुदाय उभयहेतुकेऽपि तदप्राप्तिः ॥ १८ ॥ | |
| इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥ | |
| उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥ | |
| असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥ | |
| प्रतिसङ्ख्याऽप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥ | |
| उभयथा च दोषात् ॥ २३ ॥ | |
| आकाशे चाविशेषात् ॥ २४ ॥ | |
| अनुस्मृतेश्च ॥ २५ ॥ | |
| (८) शून्याधिकरणम् | २३७ |
| नासतोऽदृष्टत्वात् ॥ २६ ॥ | |

| अधिकरण नाम | पत्र संख्या |
| --- | --- |
| उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥ | |
| नाभाव उपलब्धेः ॥ २८ ॥ | |
| वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥ | |
| (९) अनुपलब्ध्यधिकरणम् | २३० |
| न भावोऽनुपलब्धेः ॥ ३० ॥ | |
| क्षणिकत्वाच्च ॥ ३१ ॥ | |
| सर्वथानुपपत्तेश्च ॥ ३२ ॥ | |
| (१०) नैकस्मिन्नधिकरणम् | २४० |
| नैकस्मिन्नसंभवात् ॥ ३३ ॥ | |
| एवं चात्माकात्स्न्र्यम् ॥ ३४ ॥ | |
| न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ ३५ ॥ | |
| अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ ३६ ॥ | |
| (११) पत्युरधिकरणम् | २४२ |
| पत्युरसामञ्जस्यात् ॥ ३७ ॥ | |
| संबधानुपपत्तेश्च ॥ ३८ ॥ | |
| अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥ | |
| करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥ | |
| अंतवत्त्वमसर्वज्ञता वा ॥ ४१ ॥ | |
| (१२) उत्पत्त्यधिकरणम् | २४३ |
| उत्पत्त्यसंभवात् ॥ ४२ ॥ | |
| न च कर्तुः करणम् ॥ ४३ ॥ | |
| विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥ | |
| विप्रतिषेधाच्च ॥ ४५ ॥ | |

॥ इति द्वितीयः पादः ॥ २ ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| ॥ अथ तृतीयः पादः ॥ | |
| (१) वियदधिकरणम् | २४६ |
| न वियदश्रुतेः ॥ १ ॥ | |
| अस्ति तु ॥ २ ॥ | |
| गौण्यसंभवात् ॥ ३ ॥ | |
| शब्दाच्च ॥ ४ ॥ | |
| स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥ | |
| प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥ | |
| यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥ | |
| (२) मातरिश्वाधिकरणम् | २५१ |
| एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ | |
| (३) असंभवाधिकरणम् | २५३ |
| असंभवस्तु सतोऽनुपपत्तेः ॥ ९ ॥ | |
| (४) तेजोधिकरणम् | २५६ |
| तेजोतस्तथाह्याह ॥ १० ॥ | |
| (५) अबधिकरणम् | २५७ |
| आपः ॥ ११ ॥ | |
| (६) पृथिव्यधिकरणम् | २५८ |
| पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ १२ ॥ | |
| (७) तदभिध्यानाधिकरणम् | २६० |
| तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ १३ ॥ | |
| (८) विपर्ययाधिकरणम् | २६२ |
| विपर्ययेण तु क्रमोऽत उपपद्यते च ॥ १४ ॥ | |
| (९) अंतराविज्ञाना(अन्तरा)धिकरणम् | २६४ |
| अंतराविज्ञानमनसीक्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥ | |
| चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तः तद्भावभावित्वात् ॥१६॥ | |

अधिकरण नाम | पत्र संख्या

(१०) नात्माधिकरणम् — २६६

नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥

(११) ज्ञाधिकरणम् — २६७

ज्ञोऽत एव ॥ १८ ॥

युक्तेश्च ॥ १९ ॥

(१२) उत्क्रांत्यधिकरणम् — २६९

उत्क्रांतिगत्यागतीनाम् ॥ २० ॥

स्वात्मना चोत्तरयोः ॥ २१ ॥

नाऽणुरतच्छ्रुतेरिति चेन्नेतराधिकारात ॥ २२ ॥

स्वशब्दोन्मानाभ्यां च ॥ २३ ॥

अविरोधश्चन्दनवत ॥ २४ ॥

अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २५ ॥

गुणाद्वालोकवत् ॥ २६ ॥

(१३) व्यतिरेकाधिकरणम् — २७३

व्यतिरेको गंधवत्तथाच दर्शयति ॥ २७ ॥

(१४) पृथगधिकरणम् — २७४

पृथगुपदेशात् ॥ २८ ॥

तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत ॥ २९ ॥

(१५) यावदधिकरणम् — २७६

यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

(१६) पुंस्त्वाधिकरणम् — २७८

पुंस्त्वादिवत्वस्य सतोऽभिव्यक्तियोगात्त ॥ ३१ ॥

नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमोवाऽन्यथा ॥ ३२ ॥

(१७) कर्तृत्वाधिकरणम् — २८१

कर्ता शास्त्रार्थवत्वात् ॥ ३३ ॥

विहारोपदेशात ॥ ३४ ॥

अधिकरण नाम पत्र संख्या

उपादानात् ॥ ३५ ॥

व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

उपलब्धिवदनियमः ॥ ३७ ॥

शक्तिविपर्ययात् ॥ ३८ ॥

समाध्यभावाच्च ॥ ३९ ॥

यथा च तक्षोभयथा ॥ ४० ॥

परात्तु तच्छ्रुतेः ॥ ४१ ॥

कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

(१८) अंशाधिकरणम् २८३

अंशो नानाव्यपदेशादन्यथाचापि दाशकितवा-
दित्वमधीयत एके ॥ ४३ ॥

मंत्रवर्णात् ॥ ४४ ॥

अपि स्मर्यते ॥ ४५ ॥

प्रकाशादिवन्नैवं परः ॥ ४६ ॥

स्मरंति च ॥ ४७ ॥

अनुज्ञापरिहारौ देहसम्बन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

असंततेश्चाव्यतिकरः ॥ ४९ ॥

आभास एव च ॥ ५० ॥

(१९) अदृष्टाधिकरणम् २८८

अदृष्टानियमात् ॥ ५१ ॥

अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

॥ इति तृतीयः पादः ॥ ३ ॥

---

अधिकरण नाम पत्र संख्या

॥ अथ चतुर्थः पादः ॥ ४ ॥

(१) प्राणोत्पत्त्यधिकरणम् २९१

तथा प्राणाः ॥ १ ॥

गौण्यसंभवात् ॥ २ ॥

प्रतिज्ञानुपरोधाच्च ॥ ३ ॥

(२) तत्प्रागधिकरणम् २९३

तत्प्राक्श्रुतेश्च ॥ ४ ॥

(३) तत्पूर्वकत्वाधिकरणम् २९५

तत्पूर्वकत्वाद्वाचः ॥ ५ ॥

(४) सप्तगत्यधिकरणम् २९८

सप्तगतेर्विशेषितत्वाच्च ॥ ६ ॥

हस्तादयस्तु स्थितेऽतो नैवउ ॥ ७ ॥

(५) अण्वधिकरणम् ३००

अणवश्च ॥ ८ ॥

(६) श्रेष्ठाधिकरणम ३०२

श्रेष्ठश्च ॥ ९ ॥

न वायुक्रिये पृथगुपदेशात् ॥ १० ॥

(७) चक्षुराद्यधिकरणम् ३०४

चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्य. ॥ ११ ॥

अकरणत्वाच्च नदोपस्तथाहि दर्शयति ॥ १२ ॥

(८) पञ्चवृत्त्यधिकरणम् ३०५

पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १३ ॥

(९) अण्व(अणुश्चा)धिकरणम् ३०७

अणुश्च ॥ १४ ॥

(१०) ज्योतिराद्यधिकरणम् ३०८

ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १५ ॥

अधिकरण नाम पत्र संख्या

प्राणवताशब्दात् ॥ १६ ॥

तस्य च नित्यत्वात् ॥ १७ ॥

(११) त इन्द्रियाधिकरणम् ३१०

तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १८ ॥

भेदश्रुतेः ॥ १९ ॥

वैलक्षण्याच्च ॥ २० ॥

(१२) संज्ञाधिकरणम् ३११

संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २१ ॥

(१३) मांसाधिकरणम् ३१३

मांसादि भौमं यथाशब्दमितरयोश्च ॥ २२ ॥

वैशेष्यात्तु तद्वादस्तद्वादः ॥ २३ ॥

॥ इति चतुर्थः पादः ॥ ४ ॥

॥ इति द्वितीयाध्यायः समाप्तः ॥

---

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

॥ तृतीयोध्यायः ॥ ३ ॥

॥ अथ प्रथमः पादः ॥ ॥ १ ॥

(१) तदन्तरधिकरणम् ३१५

तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥

(२) त्र्यात्मकत्वाधिकरणम् ३१७

त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ २ ॥

(३) प्राणगत्यधिकरणम् ३१८

प्राणगतेश्च ॥ ३ ॥

(४) अग्न्य(अग्न्यादिगत्य)धिकरणम् ३२०

अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥

अधिकरण नाम पत्र संख्या

(५) प्रथमेश्रवणाधिकरणम् ३२०

प्रथमेश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ५ ॥

(६) अश्रुतत्वाधिकरणम् ३२२

अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥

(७) भाक्ताधिकरणम् ३२६

भाक्तंवाऽनात्मवित्त्वात्तथा हि दर्शयति ॥ ७ ॥

(८) कृतात्ययाधिकरणम् ३२९

कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ८ ॥

(९) यथेताधिकरणम् ३३१

यथेतमनेवं च ॥ ९ ॥

(१०) चरणाधिकरणम् ३३२

चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ १० ॥

आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ११ ॥

सुकृतदुष्कृते एवेति तु बादरिः ॥ १२ ॥

(११) अनिष्टाधिकरणम् ३३५

अनिष्टादिकारिणामपि च श्रुतम् ॥ १३ ॥

संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १४ ॥

स्मरंति च ॥ १५ ॥

(१२) अपिसप्ताधिकरणम् ३३८

अपि सप्त ॥ १६ ॥

(१३) तत्राप्यधिकरणम् ३३९

तत्रापि च तद्व्यापारादविरोधः ॥ १७ ॥

(१४) विद्याधिकरणम् ३४०

विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १८ ॥

(१५) न तृतीयाधिकरणम् ३४२

न तृतीये तथोपलब्धेः ॥ २०, ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| स्मर्यतेऽपि च लोके ॥ २० ॥ | |
| दर्शनाच्च ॥ २१ ॥ | |
| तृतीये शब्दावरोधः संशोकजस्य ॥ २२ ॥ | |
| स्मरणाच्च ॥ २३ ॥ | |
| (१६) तत्स्वाभाव्याधिकरणम् | ३४५ |
| तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ २४ ॥ | |
| (१७) नातिचिरेणाधिकरणम् | ३४६ |
| नातिचिरेण विशेषात् ॥ २५ ॥ | |
| (१८) अन्याधिकरणम् | ३४७ |
| अन्याधिष्ठिते पूर्ववदभिलापात् ॥ २६ ॥ | |
| अशुद्धमिति चेन्न शब्दात् ॥ २७ ॥ | |
| (१९) रेतोधिकरणम् | ३४९ |
| रेतस्सिग्योगोऽथ ॥ २८ ॥ | |
| (२०) योन्यधिकरणम् | ३५१ |
| योनेः शरीरम् ॥ २९ ॥ | |

॥ इति प्रथमः पादः ॥ १ ॥

॥ अथ द्वितीयः पादः ॥ २ ॥

| | |
|---|---|
| (१) सन्ध्यधिकरणम् | ३५५ |
| सन्ध्ये सृष्टिराह हि ॥ १ ॥ | |
| निर्मातारं चैके पुत्रादयश्च ॥ २ ॥ | |
| मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥ | |
| सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥ | |
| (२) पराभिध्यानाधिकरणम् | ३६० |
| पराभिध्यानात्तु तिरोहितं ततोह्यस्य बंधविपर्ययौ ॥ ५ ॥ | |

अधिकरण नाम पत्र संख्या

(३) देहयोगाधिकरणम् ३६१

देहयोगाद्वासोपि ६ ॥

(४) तदभावाधिकरणम् ३६३

तदभावो नाडीषु तच्छ्रुतेरात्मनि हि ॥ ७ ॥

(५) अतः प्रबोधाधिकरणम् ३६५

अतः प्रबोधोऽस्मात् ॥ ८ ॥

(६) कर्माऽनुस्मृत्यधिकरणम् ३६६

स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

(७) (सं)मुग्धाधिकरणम् ३६८

मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

(८) नस्थानतोऽधिकरणम् ३७०

न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

अपि चैवमेके ॥ १३ ॥

(९) अरूपवदधिकरणम् ३७४

अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

आह च तन्मात्रम् ॥ १६ ॥

दर्शयति चाथोऽपि स्मर्यते ॥ १७ ॥

(१०) अतएवाधिकरणम् ३७७

अत एव चोपमासूर्यकादिवत् ॥ १८ ॥

(११) अम्बुवदधिकरणम् ३८०

अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

(१२) वृद्धिह्रासाधिकरणम् ३८१

वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥

दर्शनाच्च ॥ २१ ॥

अधिकरण नाम | पत्र संख्या

(१३) प्रकृतैतावत्त्वाधिकरणम् ३८३

प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

(१४) तदव्यक्ताधिकरणम् ३८४

तदव्यक्तमाह हि ॥ २३ ॥

अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

प्रकाशवच्चावैशेष्यम् ॥ २५ ॥

प्रकाशश्च कर्मण्यभ्यासात् ॥ २६ ॥

अतोऽनन्तेन तथा हि लिङ्गम्॥ २७ ॥

(१५) अहिकुण्डलाधिकरणम् ३८७

उभयव्यपदेशात्तु अहि कुण्डलवत् ॥ २८ ॥

प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २९ ॥

पूर्ववद्वा ॥ ३० ॥

प्रतिषेधाच्च ॥ ३१ ॥

(१६) परमतोधिकरणम् ३८९

परमत सेतून्मानसंबंधभेदव्यपदेशेभ्य ॥ ३२ ॥

दर्शनात् ॥ ३३ ॥

बुद्धयर्थ पादवत् ॥ ३४ ॥

(१७) स्थानविशेषाधिकरणम् ३९१

स्थानविशेषात्प्रकाशादिवत ॥ ३५ ॥

उपपत्तेश्च ॥ ३६ ॥

(१८) तथान्यदधिकरणम् ३९२

ताथान्यत्प्रतिषेधात् ॥ ३७ ॥

(१९) अनेनसर्वगतत्वाधिकरणम् ३९३

अनेनसर्वगतत्वमायामयशब्दादिभ्य ॥ ३८ ॥

(२०) फलाधिकरणम् ३९५

फलमत उपपत्ते ॥ ३९ ॥

श्रुतत्वाच ॥ ४० ॥

धर्मं जैमिनिरत एव ॥ ४१ ॥

पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४२ ॥

॥ इति द्वितीयः पादः ॥ २ ॥

---

## ॥ अथ तृतीयः पादः ॥ ३ ॥

(१) सर्ववेदान्ताधिकरणम् ३९८

सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

भेदान्नेति चेदेकस्यामपि ॥ २ ॥

स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॥ ३ ॥

सलिलवच्च तन्नियमः ॥ ४ ॥

दर्शयति च ॥ ५ ॥

(२) उपसंहाराधिकरणम् ४०१

उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ६ ॥

अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॥ ७ ॥

न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ८ ॥

संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ९ ॥

(३) प्राप्त्यधिकरणम् ४०४

प्राप्तिश्च समञ्जसम् ॥ १० ॥

(४) सर्वाऽभेदाधिकरणम् ४०५

सर्वाभेदादन्यत्रेमे ॥ ११ ॥

(५) आनन्दाद्यधिकरणम् ४०६

आनन्दादयः प्रधानस्य ॥ १२ ॥

(६) प्रियशिरस्त्वाधिकरणम् ४०७

प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १३ ॥

(७) इतराधिकरणम् ४०८

इतरे त्वर्थसामान्यात् ॥ १४ ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| (८) आध्यानाधिकरणम् | ४१० |
| आध्यानाय प्रयोजनाभावात् ॥ १५ ॥ | |
| आत्मशब्दाच्च ॥ १६ ॥ | |
| (९) आत्मगृहीत्यधिकरणम् | ४१२ |
| आत्मगृहीतिरितरवदुत्तरात् ॥ १७ ॥ | |
| (१०) अन्वयाधिकरणम् | ४१३. |
| अन्वयादिति चेत् स्यादवधारणात् ॥ १८ ॥ | |
| (११) कार्याख्यानाधिकरणम् | ४१४ |
| कार्याख्यानादपूर्वम् ॥ १९ ॥ | |
| (१२) समानाधिकरणम् | ४१६ |
| समान एवं चाभेदात् ॥ २० ॥ | |
| सम्बन्धादेवमन्यत्रापि ॥ २१ ॥ | |
| (१३) नवाविशेषाधिकरणम् | ४१८ |
| न वा विशेषात् ॥ २२ ॥ | |
| दर्शयति च ॥ २३ ॥ | |
| (१४) सम्भृत्यधिकरणम् | ४२१ |
| सम्भृतिद्युव्याप्त्यपि चातः ॥ २४ ॥ | |
| (१५) पुरुषविद्याधिकरणम् | ४२२ |
| पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॥ २५ ॥ | |
| (१६) वेधाद्यधिकरणम् | ४२३ |
| वेधाद्यर्थभेदात् ॥ २६ ॥ | |
| (१७) हान्यधिकरणम् | ४२५ |
| हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॥ २७ ॥ | |
| सांपरायेतर्तव्याभावात्तथाह्यन्ये ॥ २८ ॥ | |

अधिकरण नाम पत्र

(१८) छन्दाधिकरणम्

छन्दत उभयाविरोधात् ॥ २९ ॥

गतेरर्थवत्त्वमुभयथान्यथा हि विरोध ॥ ३० ॥

उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३१ ॥

(१९) अनियमाधिकरणम् ८

अनियमस्सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॥ ३२ ॥

(२०) यावदधिकरणम् ६

यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३३ ॥

अक्षरधिया त्वविरोधस्सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३४ ॥

(२१) इयदामननाधिकरणम् ४

इयदामननात् ॥ ३५ ॥

अन्तराभूतग्रामवदिति चेत्तदुक्तम् ॥ ३६ ॥

अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशवत् ॥ ३७ ॥

(२२) व्यतिहाराधिकरणम् ४

व्यतिहारो विशिंषंति हीतरवत् ॥ ३८ ॥

(२३) सत्याधिकरणम् ४३

सैव हि सत्यादय ॥ ३९ ॥

(२४) कामाधिकरणम् ४३

कामादीतरत्र तत्र चायतनादिभ्य ॥ ४० ॥

आदरादलोप ॥ ४१ ॥

उपस्थितेस्तद्वचनात् ॥ ४२ ॥

(२५) निर्धारणाधिकरणम् ४३८

तन्निर्धारणार्थनियमस्तद्दृष्टे पृथग्घ्य प्रतिबन्ध फलम् ॥ ४३ ॥

| अधिकरण नाम | पत्र संख्या |
| --- | --- |
| (२७) लिङ्गभूयस्त्वाधिकरणम् | ४४० |
| लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४५ ॥ | |
| (२८) पूर्वविकल्पाधिकरणम् | ४४० |
| पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॥ ४६ ॥ | |
| अतिदेशाच्च ॥ ४७ ॥ | |
| (२९) विद्याधिकरणम् | ४४३ |
| विद्यैव तु निर्धारणात् ॥ ४८ ॥ | |
| दर्शनाच्च ॥ ४९ ॥ | |
| (३०) श्रुत्याद्यधिकरणम् | ४४४ |
| श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ५० ॥ | |
| (३१) अनुबन्धाधिकरणम् | ४४५ |
| अनुबन्धादिभ्यश्च ॥ ५१ ॥ | |
| (३२) प्रज्ञान्तराधिकरणम् | ४४७ |
| प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॥ ५२ ॥ | |
| (३३) न सामान्याधिकरणम् | ४४९ |
| न सामान्यादप्युपलब्धेर्मृत्युवन्नहि लोकापत्तिः ॥ ५३ ॥ | |
| (३४) परेणाधिकरणम् | ४५१ |
| परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ५४ ॥ | |
| (३५) एकाधिकरणम् | ४५२ |
| एक आत्मनः शरीरेभावात् ॥ ५५ ॥ | |
| व्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॥ ५६ ॥ | |
| (३६) अङ्गावबद्धाधिकरणम् | ४५४ |
| अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ५७ ॥ | |
| मन्त्रादिवद्वाऽविरोधः ॥ ५८ ॥ | |
| (३७) भूमज्यायस्त्वाधिकरणम् | ४५६ |
| भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॥ ५९ ॥ | |

अधिकरण नाम — पत्र संख्या

(३८) नानाशब्दाधिकरणम् — ४५७

नानाशब्दादिभेदात् ॥ ६० ॥

(३९) विकल्पाधिकरणम् — ४५८

विकल्पो विशिष्टफलत्वात् ॥ ६१ ॥

(४०) काम्याधिकरणम् — ४५९

काम्यास्तु यथाकामं समुच्चीयेरन्नवा पूर्वहेत्वभावात् ॥ ६२ ॥

(४१) अङ्गाधिकरणम् — ४६१

अङ्गेषु यथाश्रयभावः ॥ ६३ ॥
शिष्टेश्च ॥ ६४ ॥
समाहारात् ॥ ६५ ॥
गुणसाधारण्यश्रुतेश्च ॥ ६६ ॥

(४२) नवाधिकरणम् — ४६२

न वा तत्सहभावाश्रुतेः ॥ ६७ ॥
दर्शनाच्च ॥ ६८ ॥

इति तृतीयः पादः ॥ ३ ॥

---

अथ चतुर्थः पादः ॥ ४ ॥

(१) पुरुषार्थाधिकरणम् — ४६५

पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥
शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥
आचारदर्शनात् ॥ ३ ॥
तच्छ्रुतेः ॥ ४ ॥
समन्वारम्भणात् ॥ ५ ॥
तद्वतो विधानात् ॥ ६ ॥
नियमाच्च ॥ ७ ॥

| अधिकरण नाम | पत्र संख्या |
|---|---|
| अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥ | |
| तुल्यं तु दर्शनम् ॥ ९ ॥ | |
| (२) असार्वत्रिक्यधिकरणम् | ४६८ |
| असार्वत्रिकी ॥ १० ॥ | |
| विभागः शतवत् ॥ ११ ॥ | |
| अध्ययनमात्रवतः ॥ १२ ॥ | |
| (३) नाऽविशेषाधिकरणम् | ४६९ |
| नाविशेषात् ॥ १३ ॥ | |
| (४) स्तुत्यधिकरणम् | ४७० |
| स्तुतयेऽनुमतिर्वा ॥ १४ ॥ | |
| कामकारेण चैके ॥ १५ ॥ | |
| उपमर्दं च ॥ १६ ॥ | |
| ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥ | |
| परामर्शं जैमिनिरचोदनाचापवदति हि ॥ १८ ॥ | |
| अनुष्ठेयंबादरायणस्साम्यश्रुते ॥ १९ ॥ | |
| विधिर्वा धारणवत ॥ २० ॥ | |
| स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥ | |
| भावशब्दाच ॥ २२ ॥ | |
| पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥ | |
| तथाचैकवाक्योपबन्धात ॥ २४ ॥ | |
| अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २५ ॥ | |
| सर्वापेक्षाचयज्ञादिश्रुतेरश्ववत् ॥ २६ ॥ | |
| शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २७ ॥ | |
| सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात ॥ २८ ॥ | |
| अबाधाच ॥ २९ ॥ | |
| अपि स्मर्यते ॥ ३० ॥ | |

अधिकरण नाम | पत्र संख्या

शब्दश्चातोऽकामचारे ॥ ३१ ॥
विहितत्वाच्चाश्रमकर्मापि ॥ ३२ ॥
सहकारित्वेन च ॥ ३३ ॥

(५) उभयलिङ्गाधिकरणम् ४७७

सर्वथापि तु त एवोभयलिङ्गात् ॥ ३४ ॥
अनभि भवंच दर्शयति ॥ ३५ ॥
अन्तराचापि तु तद्दृष्टेः ॥ ३६ ॥
अपिस्मर्यते ॥ ३७ ॥
विशेषानुग्रहं च ॥ ३८ ॥
अतस्त्वितरज्जायोलिङ्गाच्च ॥ ३९ ॥
तद्भूतस्य तु त द्भावो जैमिनेरपिनियमातद्रूपाभावेभ्यः ॥ ४० ॥

(६) आधिकारिकाधिकरणम् ४८०

न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॥ ४१ ॥
उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॥ ४२ ॥
बहिस्तुभयथापि स्मृतेराचाराच्च ॥ ४३ ॥

(७) स्वाम्य(फलश्रुत्य)धिकरणम् ४८३

स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४४ ॥
आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रियते ॥ ४५ ॥
सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४६ ॥

(८) कृत्स्नभावाधिकरणम् ४८५

कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४७ ॥
मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥

(९) अनाविष्काराधिकरणम् ४८६

अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥

(१०) ऐहिकाधिकरणम् ४८९

ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥

अधिकरण नाम पत्र संख्या

(११) मुक्तिफलाधिकरणम् ४८९

एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥

इति चतुर्थः पादः ॥ ४ ॥

॥ इति तृतीयाध्यायः समाप्तः ॥ ३ ॥

---

## ॥ चतुर्थोऽध्यायः ॥

### ॥ अथ प्रथमः पादः ॥ १ ॥

(१) आवृत्त्यधिकरणम् ४९२

आवृत्तिरसकृदुपदेशात् ॥ १ ॥

लिङ्गाच्च ॥ २ ॥

(२) आत्माधिकरणम् ४९५

*आत्मेति तूपगच्छन्ति ग्राहयंति च ॥ ३ ॥*

(३) प्रतीकाधिकरणम् ४९६

न प्रतीके न हि सः ॥ ४ ॥

(४) ब्रह्मदृष्ट्यधिकरणम् ४९८

*ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥*

(५) आदित्याधिकरणम् ५००

आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥

(६) आसीनाधिकरणम् ५०१

*आसीनस्संभवात् ॥ ७ ॥*

ध्यानाच्च ॥ ८ ॥

अचलत्वं चापेक्ष्य ॥ ९ ॥

*स्मरंति च ॥ १० ॥*

यत्रैकाग्रता तत्राविशेषात् ॥ ११ ॥

अधिकरण नाम पत्र संख्या

(७) आम्रायणाधिकरणम् ५०५

आम्रायणात्तत्रापि हि दृष्टम् ॥ १२ ॥

(८) तदधिगमाधिकरणम् ५०६

तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ १३ ॥

इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥

अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥

अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥

अतोऽन्यदपि ह्येकेषामुभयोः ॥ १७ ॥

यदेव विद्ययेति हि ॥ १८ ॥

भोगेन त्वितरे क्षपयित्वाथ संपत्स्यते ॥ १९ ॥

॥ इति प्रथम पादः ॥ १ ॥

॥ अथ द्वितीयः पादः ॥ २ ॥

(१) वागधिकरणम् ५११

वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥

अत एव च सर्वाण्यनु ॥ २ ॥

(२) मनः प्राणाधिकरणम् ५१४

तन्मनः प्राण उत्तरात् ॥ ३ ॥

(३) अध्यक्षाधिकरणम् ५१५

सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

(४) भूताधिकरणम् ५१६

भूतेषु तच्छ्रुतेः ॥ ५ ॥

(५) नैकस्मिन्नधिकरणम् ५१७

नैकस्मिन्दर्शयतो हि ॥ ६ ॥

(६) समनाधिकरणम् ५२०

समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥

अधिकरण नाम पत्र संख्या

तदपीतेः संसारव्यपदेशात् ॥ ८ ॥

सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥

नोपमर्देनात ॥ १० ॥

अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥

प्रतिषेधादिति चेन्न शारीरात् ॥ १२ ॥

स्पष्टोह्येकेषाम् ॥ १३ ॥

स्मर्यते च ॥ १४ ॥

(७) तानिपराधिकरणम् ५२३

तानिपरे तथाह्याह ॥ १५ ॥

(८) अविभागाधिकरणम् ५२४

अविभागो वचनात् ॥ १६ ॥

(९) तदोकोधिकरणम् ५२५

तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृति-
योगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥

रश्म्यनुसारी ॥ १८ ॥

निशि चेति चेन्न संबन्धात् ॥ १९ ॥

यावद्देहभावित्वाद्दर्शयति च ॥ २० ॥

अतश्चायनेपि हि दक्षिणे ॥ २१ ॥

(१०) योग्यधिकरणम् ५२७

योगिन. प्रतिस्मर्यते स्मार्ते चैते ॥ २२ ॥

॥ इति द्वितीयः पादः ॥ २ ॥

॥ अथ तृतीयः पादः ॥ ३ ॥

(१) अर्चिरधिकरणम् ५३१

अर्चिरादिना तत्प्रथितेः ॥ १ ॥

(२) वायुशब्दाधिकरणम् ५३२

वायुशब्दादविशेषविशेषाभ्याम् ॥ २ ॥

अधिकरण नाम | पत्र संख्या

(३) तटिदधिकरणम् ५३४

तटितोऽधिवरुणस्सम्बन्धात् ॥ ३ ॥

(४) आतिवाहिकाधिकरणम् ५३५

आतिवाहिकस्तल्लिंङ्गात् ॥ ४ ॥

उभयव्यामोहात्तत्सिद्धे. ॥ ५ ॥

(५) वैद्युताधिकरणम् ५३६

वैद्युतेनैवततस्तच्छ्रुते. ॥ ६ ॥

(६) कार्याधिकरणम् ५३७

कार्यं बादरिरस्यगत्युपपत्ते ॥ ७ ॥

विशेषितत्वाच्च ॥ ८ ॥

सामीप्यात्तु तद्व्यपदेश ॥ ९ ॥

कार्यात्यये तदध्यक्षेण सहात परमभिधानात् ॥ १० ॥

स्मृतेश्च ॥ ११ ॥

पर जैमिनिर्मुख्यत्वात् ॥ १२ ॥

दर्शनाच्च ॥ १३ ॥

न च कार्ये प्रत्यभिसन्धि ॥ १४ ॥

अप्रतीकालम्बनान्नयतीति बादरायण उभयथाच दोषात्तत्क्रतुश्च ॥ १५ ॥

विशेष च दर्शयति ॥ १६ ॥

॥ इति तृतीयः पाद ॥ ३ ॥

---

॥ अथ चतुर्थः पादः ॥ ४ ॥

(१) सपद्याधिकरणम् ५४२

संपद्याविर्भावस्वेनशब्दात् ॥ १ ॥

(२) मुक्ताधिकरणम् ५४३

मुक्त. प्रतिज्ञानात् ॥ २ ॥

अधिकरण नाम — पत्र संख्या

(३) आत्माधिकरणम् ५४५

आत्माप्रकरणात् ॥ ३ ॥

(४) अविभागाधिकरणम् ५४६

अविभागेन दृष्टत्वात् ॥ ४ ॥

(५) ब्राह्मेणाधिकरणम् ५४७

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥

चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥

एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥

(६) संकल्पाधिकरणम् ५४९

सकल्पादेव च तच्छ्रुते ॥ ८ ॥

(७) अनन्याधिपत्यधिकरणम् ५५०

अत एव चानन्याधिपतिः ॥ ९ ॥

(८) अभावाधिकरणम् ५५१

अभावं बादरिराह ह्येवम् ॥ १० ॥

भावं जैमिनिर्विकल्पाम्नानात् ॥ ११ ॥

द्वादशाहवदुभयविधं बादरायणोऽतः ॥ १२ ॥

तन्वभावे सन्ध्यवदुपपत्ते. ॥ १३ ॥

भावे जाग्रद्वत् ॥ १४ ॥

प्रदीपवदावेशस्तथा हि दर्शयति ॥ १५ ॥

स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ १६ ॥

(९) जगद्व्यापाराधिकरणम् ५५४

जगद्व्यापारवर्जम् ॥ १७ ॥

प्रकरणादसन्निहितत्वाच्च ॥ १८ ॥

प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १९ ॥

विकारावर्ति च तथा हि दर्शयति ॥ २० ॥

अधिकरण नाम | पत्र संख्या

(१०) स्थित्यधिकरणम् ५५६

स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २१ ॥
भोगमात्रसाम्यलिङ्गाच्च ॥ २२ ॥

(११) अनावृत्त्यधिकरणम् ५५८

अनावृत्तिश्शब्दादनावृत्तिश्शब्दात् ॥ २३ ॥

इति चतुर्थः पादः ॥ ४ ॥

चतुर्थाध्यायः समाप्तः ॥ ४ ॥

॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

---

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

# ॥ अधिकरणानुक्रमणिका ॥


| अधिकरण नाम | पत्र संख्या |
|---|---|
| **अ** | |
| अंशाधिकरणम् | २८३ |
| अग्न्यधिकरणम् | ३२० |
| अङ्गाधिकरणम् | ४६१ |
| अङ्गावबद्धाधिकरणम् | ४५४ |
| अण्वधिकरणम् | ३०० |
| अणुश्चाधिकरणम् | ३०७ |
| अत एवाधिकरणम् | ३७७ |
| अत्तृत्वाधिकरणम् | ८१ |
| अदृश्यत्वाधिकरणम् | ९६ |
| अदृष्टाधिकरणम् | २८८ |
| अध्यक्षाधिकरणम् | ५१५ |
| अनन्याधिपत्यधिकरणम् | ५५० |
| अनाविष्काराधिकरणम् | ४८६ |
| अनावृत्यधिकरणम् | ५५८ |
| अनियमाधिकरणम् | ४२९ |
| अनिष्टाधिकरणम् | ३३५ |
| अनुकृत्यधिकरणम् | १३२ |
| अनुपलब्ध्यधिकरणम् | २३९ |
| अनुबन्धाधिकरणम् | ४४५ |
| अनेन सर्वगत्वाधिकरणम् | ३९३ |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| अन्तराधिकरणम् | ८७ |
| अन्तराविज्ञानाधिकरणम् | २६४ |
| अन्तर्याम्यधिकरणम् | ९३ |
| अन्तस्थत्वाधिकरणम् | ५३ |
| अन्तिमप्राणाधिकरणम् | ७० |
| अन्यत्राभावाधिकरणम् | २२४ |
| अन्यथानुमित्यधिकरणम् | २२७ |
| अन्याधिकरणम् | ३४७ |
| अन्वयाधिकरणम् | ४१३ |
| अपशूद्राधिकरणम् | १४८ |
| अपिसप्ताधिकरणम् | ३३८ |
| अब्धिकरणम् | २५७ |
| अभावंबादरिरधिकरणम् | ५५१ |
| अभिमान्यधिकरणम् | १९७ |
| अभ्युपगमाधिकरणम् | २२५ |
| अम्बुवदधिकरणम् | ३८० |
| अरूपाधिकरणम् | ३७४ |
| अर्चिराद्यधिकरणम् | ५३१ |
| अविभागाधिकरणम् | ५२४ |
| अविभागेनाधिकरणम् | ५४६ |
| अव्याकृताकाशाधिकरणम् | १६० |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| अश्रुतत्वाधिकरणम् | ३२३ |
| असदधिकरणम् | २०० |
| असम्भवाधिकरणम् | २५३ |
| असार्वत्रिक्यधिकरणम् | ४६८ |
| अहिकुण्डलाधिकरणम् | ३८७ |
| अक्षराधिकरणम् | ११६ |
| **आ** | |
| आकाशाधिकरणम् | ५६ |
| आतिवाहिकाधिकरणम् | ५३५ |
| आत्मगृहीत्यधिकरणम् | ४१२ |
| आत्माधिकरणम् | ४९५ |
| आत्मप्रकरणाधिकरणम् | ५५५ |
| आदित्याधिकरणम् | ५०० |
| आधिकारिकाधिकरणम् | ४८० |
| आध्यानायाधिकरणम् | ४१० |
| आनन्दमयाधिकरणम् | ४० |
| आनन्दाद्यधिकरणम् | ४०६ |
| आनुमानिकाधिकरणम् | १६९ |
| आप्रायणाधिकरणम् | ५०५ |
| आरम्भणाधिकरणम् | २०८ |
| आवृत्त्यधिकरणम् | ४९२ |
| आसीनाधिकरणम् | ५०१ |
| **इ** | |
| इतरव्यपदेशाधिकरणम् | २१३ |
| इतराधिकरणम् | ४०८ |
| इयदामननाधिकरणम् | ४३२ |
| **ई** | |
| ईक्षत्यधिकरणम् | ३३ |
| **उ** | |
| उत्क्रान्त्यधिकरणम् | २६९ |
| उत्पत्त्यधिकरणम् | २४३ |
| उपसंहाराधिकरणम् | ४०१ |
| उभयलिङ्गाधिकरणम् | ४७७ |
| **ए** | |
| एकाधिकरणम् | ४५२ |
| एतेन सर्वे व्याख्याताधिकरणम् | १८७ |
| **ऐ** | |
| ऐहिकाधिकरणम् | ४८९ |
| **क** | |
| कंपनाधिकरणम् | १५४ |
| कर्तृत्वाधिकरणम् | २८१ |
| कर्मानुस्मृत्यधिकरणम् | ३६६ |
| कृतात्ययाधिकरणम् | ३२९ |
| कृत्स्नभावाधिकरणम् | ४८५ |
| कामाधिकरणम् | ४३५ |
| काम्याधिकरणम् | ४५९ |
| कारणत्वेन चाकाशाधिकरणम् | १८० |
| कार्याख्यानाधिकरणम् | ४१४ |
| कार्याधिकरणम् | ५३७ |
| **ग** | |
| गायत्र्यधिकरणम् | ६१ |
| गुहाधिकरणम् | ८४ |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| **च** | |
| चरणाधिकरणम् | ३३२ |
| चक्षुराद्यधिकरणम् | ३०४ |
| **छ** | |
| छान्दाधिकरणम् | ४२७ |
| **ज** | |
| जगद्व्यापाराधिकरणम् | ५५४ |
| जन्माद्यधिकरणम् | २३ |
| जिज्ञासाधिकरणम् | १ |
| जीवज्योतिरधिकरणम् | १५६ |
| ज्योतिरधिकरणम् | ६० |
| ज्योतिराद्यधिकरणम् | ३०८ |
| ज्योतिरुपक्रमाधिकरणम् | १७५ |
| **त** | |
| त इन्द्रियाधिकरणम् | ३१० |
| तडिदधिकरणम् | ५३४ |
| तत्पूर्वकत्वाधिकरणम् | २०५ |
| तत्प्रागधिकरणम् | २९३ |
| तत्राप्यधिकरणम् | ३३९ |
| तत्स्वाभाव्याधिकरणम् | ३४५ |
| तथान्यत्वाधिकरणम् | ३९२ |
| तदधिगमाधिकरणम् | ५०६ |
| तदन्तराधिकरणम् | ३१५ |
| तदभावाधिकरणम् | ३६३ |
| तदभिध्यानाधिकरणम् | २६० |
| तदव्यक्ताधिकरणम् | ३८४ |
| तदोकाधिकरणम् | ५२५ |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| तानिपराधिकरणम् | ५२३ |
| तेजोधिकरणम् | २५५ |
| त्र्यात्मकत्वाधिकरणम् | ३१७ |
| **द** | |
| दहराधिकरणम् | १२२ |
| देवताधिकरणम् | १४२ |
| देहयोगाधिकरणम् | ३६१ |
| द्युभ्वाद्यधिकरणम् | १०५ |
| **न** | |
| नतृतीयाधिकरणम् | ३४२ |
| न प्रयोजनवत्त्वाधिकरणम् | २१७ |
| न वाधिकरणम् | ४६२ |
| न वा विशेषाधिकरणम् | ४१८ |
| न विलक्षणत्वाधिकरणम् | १९४ |
| न स्थानतोधिकरणम् | ३७० |
| न सामान्याधिकरणम् | ४४९ |
| न संख्योपसंग्रहाधिकरणम् | १७८ |
| नातिचिरेणाधिकरणम् | ३४६ |
| नात्माधिकरणम् | २६६ |
| नानाशब्दाधिकरणम् | ४५७ |
| नाविशेषाधिकरणम् | ४६९ |
| निर्धारणाधिकरणम् | ४३७ |
| नैकस्मिन्नधिकरणम् | २४० |
| नैकस्मिन्दर्शयतोधिकरणम् | ५१८ |
| **प** | |
| पञ्चवृत्त्यधिकरणम् | ३०५ |
| पत्युरधिकरणम् | २४२ |

| अधिकरण नाम | पत्र संख्या | अधिकरण नाम | पत्र संख्या |
|---|---|---|---|
| परमतोधिकरणम् | ३८९ | ब्रह्मदृष्ट्यधिकरणम् | ४०.८ |
| पराभिध्याधिकरणम् | ३६० | ब्राह्माधिकरणम् | ५४७ |
| परेणाधिकरणम् | ४५१ | भ | |
| पुरुषविद्याधिकरणम् | ४२२ | भाक्ताधिकरणम् | ३२६ |
| पुरुषार्थाधिकरणम् | ४६५ | भूताधिकरणम् | ५१६ |
| पुरुषाश्माधिकरणम् | २२६ | भूमज्यस्त्वधिकरणम् | ४५६ |
| पूर्वविकल्पाधिकरणम् | ४४० | भूमाधिकरणम् | ११२ |
| पुंस्त्वाधिकरणम् | २७८ | भोक्त्रापत्त्यधिकरणम् | २०५ |
| पृथगधिकरणम् | २७४ | म | |
| पृथिव्यधिकरणम् | २५८ | मनःप्राणाधिकरणम् | ५१४ |
| प्रकृतैतावत्त्वाधिकरणम् | ३८३ | मातरिश्वाधिकरणम् | २५१ |
| प्रकृत्यधिकरणम् | १८५ | मांसाधिकरणम् | ३१३ |
| प्रतीकाधिकरणम् | ४९६ | मुक्ताधिकरणम् | ५४३ |
| प्रथमेश्रवणाधिकरणम् | ३२० | मुक्तिफलाधिकरणम् | ४८९ |
| प्रदानाधिकरणम् | ४३८ | य | |
| प्रबोधाधिकरणम् | ३६५ | यथेनाधिकरणम् | ३३१ |
| प्रज्ञान्तराधिकरणम् | ४४७ | यावदधिकरणम् | २७६ |
| प्राणगत्यधिकरणम् | ३१८ | यावदधिकाराधिकरणम् | ४३० |
| प्राणाधिकरणम् | ५८ | योग्यधिकरणम् | ५२८ |
| प्राणोत्पत्त्यधिकरणम् | २९१ | योन्यधिकरणम् | ३५१ |
| प्राप्त्यधिकरणम् | ४०४ | र | |
| प्रियशिरस्त्वाधिकरणम् | ४०७ | रचनाधिकरणम् | २२२ |
| फ | | रेतोधिकरणम् | ३४९ |
| फलश्रुत्यधिकरणम् | ४८३ | ल | |
| फलाधिकरणम् | ३९५ | लिङ्गभूयस्त्वाधिकरणम् | ४४० |
| ब | | व | |
| ब्रह्मणा(पत्य)धिकरणम् | १६४ | वागधिकरणम् | ५११ |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| वामनाधिकरणम् | १३५ |
| वायुशब्दाधिकरणम् | ५३२ |
| विकल्पाधिकरणम् | ४५८ |
| विद्याधिकरणम् | ३४० |
| विद्यैवाधिकरणम् | ४४३ |
| विपर्ययाधिकरणम् | २६२ |
| वियदधिकरणम् | २४६ |
| वृद्धिह्रासाधिकरणम् | ३८१ |
| वेधाद्यधिकरणम् | ४२३ |
| वैद्युताधिकरणम् | ५३६ |
| वैशेषिकाधिकरणम् | २२८ |
| वैश्वानराधिकरणम् | ९९ |
| वैषम्यनैर्घृण्याधिकरणम् | २१८ |
| व्यतिरेकाधिकरणम् | २७३ |
| व्यतिहाराधिकरणम् | ४३३ |
| **श** | |
| शास्त्रयोनित्वाधिकरणम् | २६ |
| शून्याधिकरणम् | २३७ |
| श्रुतिशब्दमूलत्वाधिकरणम् | २१५ |
| श्रुत्याद्यधिकरणम् | ४४४ |
| श्रेष्ठाधिकरणम् | ३०२ |
| **स** | |
| सङ्कल्पाधिकरणम् | ५४९ |
| सत्याधिकरणम् | ४३४ |
| सदधिकरणम् | १२० |

| अधिकरण नाम | पत्र संख्या |
|---|---|
| सन्ध्यधिकरणम् | ३५५ |
| सप्तगत्यधिकरणम् | २९८ |
| समन्वयाधिकरणम् | ३० |
| समनाधिकरणम् | ५२० |
| समाकर्षाधिकरणम् | १८२ |
| समानाधिकरणम् | ४१६ |
| समुदायाधिकरणम् | २३२ |
| सम्पद्याधिकरणम् | ५४२ |
| सम्भृत्यधिकरणम् | ४२१ |
| सर्वगतत्वाधिकरणम् | ७६ |
| सर्वधर्मोपपत्त्यधिकरणम् | २२० |
| सर्ववेदान्ताधिकरणम् | ३९८ |
| सर्वाभेदाधिकरणम् | ४०५ |
| सुषुप्त्यधिकरणम् | १६२ |
| संमुग्धाधिकरणम् (स) | ३६८ |
| सञ्ज्ञाधिकरणम् | ३११ |
| स्तुत्यधिकरणम् | ४७० |
| स्थानविशेषाधिकरणम् | ३९१ |
| स्थित्यधिकरणम् | ५५६ |
| स्मृत्यधिकरणम् | १८९ |
| **ह** | |
| हान्यधिकरणम् | ४२५ |
| **ज्ञ** | |
| ज्ञाधिकरणम् | २६७ |

॥ श्रीलक्ष्मीनृसिंहार्पणमस्तु ॥

॥ अधिकरणानुक्रमणिका समाप्ता ॥

॥ श्रीः ॥

॥ श्री गुरुभ्यो नमः ॥

# ॥ तत्त्वप्रकाशिकाव्याख्या भावबोधः ॥

## ॥ प्रथमाध्यायस्य प्रथमः पादः ॥

### (१) ॥ जिज्ञासाधिकरणम् ॥

### ॐ अथातो ब्रह्मजिज्ञासा ॐ ॥ १ ॥

प्रणम्य कल्याणगुणं रमेश-
मगाधबोधं जययोगिवर्यम् ।
गुरोर्गुरुं गुरुमार्यांश्च तत्त्व-
प्रकाशिकाभावमहं प्रवक्ष्ये[1] ॥

---

॥ श्रीः ॥

१. लक्ष्म्या सशङ्कसरसीरुहलोचनाभ्यां
दृष्टं चतुर्मुखमुखाऽखिलदेववन्द्यम् ।
प्रह्लादरक्षणपराङ्मुखविश्वकार्यं
लक्ष्मीनृसिंहमनिशं प्रणमामि भक्त्या ॥ १ ॥

सोऽहंभावमदाभिभूतमनसं मत्तोऽस्ति कोऽन्यो जग-
त्कर्तेति प्रसभं हिरण्यकशिपुं पृच्छन्तमार्यं सुतम् ।
दासोऽहं मतिपूर्णभक्तिभरितप्रह्लादपालो मम
स्तम्भादेत्य रिपुं निगृह्य विजयी लक्ष्मीनृसिंहो गतिः ॥ २ ॥

आनन्दतीर्थगुरुमण्डलसार्वभौमं
श्रीमज्जयार्यमतुलं वचनादिशुद्ध्यै ।
श्रीव्यासराज-विजयीन्द्रयतीन्द्रसिद्धौ
भक्त्या नमामि सततं गुरुराघवेन्द्रम् ॥ ३ ॥

रघूत्तम-गुरूत्तम-प्रभवभावबोध-प्रभा
विभाति विमलात्मधीतिमिरनाशविद्योतिनी ।
पदादिगतिसंगतिप्रचुरमार्गसंदर्शिनी
तनोतु विदुषां मुदं विगतमत्सराणां चिरम् ॥ ४ ॥

अर्थे—' ग्रन्थोऽयमपि बह्वर्थो भाष्यं चात्यर्थविस्तरम् ।
बहुज्ञा एव जानन्ति विशेषेणार्थमेतयोः ' ॥
(Anuvyakhyana P. 10)

---

श्रीमध्वो व्याससूत्राणां चक्रे भाष्यमनुत्तमम्
जयतीर्थस्तस्य टीकां नाम्ना तत्त्वप्रकाशिकाम् ॥ ५ ॥

तत्त्वप्रकाशिकाव्याख्यां भावबोध इतीरिताम् ।
इय रघूत्तमगुरुश्चकाराशेषतोपदाम् ॥ ६ ॥

भावबोधप्रभा-नाम्नी नागराजेन तन्यते ।
सत्सम्प्रदायकिरणा पदार्थादिप्रकाशिनी ॥ ७ ॥

रघूत्तम गुरुप्रौढवाक्यार्थादिविवेचने ।
मादृशोऽज्ञ क्व शक्त क्षम्यतां साहस बुधैः ॥ ८ ॥

तथाप्यानन्दतीर्थार्यगुरुकारुण्यपात्रता ।
ममास्तीति मति कापि साहसे प्रेरयत्यलम् ॥ ९ ॥

सर्वतन्त्रस्वतन्त्रश्रीरघूत्तमतीर्थाः, विघ्नविघातप्रारिप्सितपरिसमाप्तिप्रचयादिसिद्धये शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकं मङ्गलाचरणं शिष्यशिक्षार्थं स्वकीयतत्त्वप्रकाशिका भावबोधाख्यग्रन्थादौ निबध्नन्ति—**प्रणम्य** इति । कल्याणगुणं रमेशम्, अगाधबोधं जययोगिवर्यं, गुरोर्गुरुं, गुरुं, आर्यांश्च प्रणम्य, अहं, **तत्त्वप्रकाशिका**-भाव प्रवक्ष्ये इत्यन्वयः

**रमेशम्**—इत्यनेन सकलवाङ्मनोनियामकभूताखिललोकमातृलक्ष्मीप्रणामोऽप्यकारीति सूचितं भवति ।

**कल्याणगुणम्**—इति रमेशविशेषणेन भगवतः श्रीपतेः श्रुत्यादिनिराबाधप्रमाणप्रतिपन्नसकलकल्याणगुणपरिपूर्णत्वमभिहितं वेदितव्यम् ।

सकलकल्याणगुणपूर्णत्वप्रतिपादनेन, समन्वयाध्यायार्थस्य, गुणपूर्णत्वस्य च सकलदोषाभावं विनाऽसिद्धेः, तादृशदोषाभावसूचितदुष्टदर्शननिरसनघटिताऽविरोधाध्यायार्थस्य कल्याणगुणेष्वन्यतमस्य, मुक्तियोग्याधिकारिवर्गमुक्तिदायकत्वस्य सूचनेन, मुक्तेश्च विहितसाधनानुष्ठानं विना लब्धुमशक्यत्वाच्च, साधनाध्यायोक्तार्थस्य, मुक्तिरूपफलसूचनेन फलाध्यायार्थस्य च मात्रया मङ्गलाचरणपद्यमुखेन सूचनं कृतमिति द्रष्टव्यम् । शिष्टं सुगमम् ।

१ **अथेति**—भगवत्पादैरनुव्याख्याने, भाष्यस्य, बहुविचित्रदुर्गमार्थवत्त्वस्य कण्ठतः प्रतिपादितत्वेन, तादृशे भाष्ये कथं लोकानां विश्वासो भूयादिति शङ्का स्यात् । तच्छङ्कोन्मूलनाय, भाष्ये लोकानां विश्वासाभिरुच्यादिजननायावश्यं प्रयतितव्यं टीकाकारैः । प्रयतितं च तथैव जयतीर्थगुरुपादैः ।

इत्याचार्योक्तौ लोकानां विश्वासमुपजनयंस्तत्कृतसूत्रभाष्यस्य व्याख्यानं चिकीर्षुः श्रीमज्जयतीर्थचरणो भाष्याद्यपद्यस्थविशेषणपदार्थप्रपञ्चनपूर्वकं मङ्गलमाचरति—**शुद्धेति**। अत्र शुद्धत्वमानन्दस्य, उरुत्वं संविद्द्युतिबलानां, P. 1
बहुलत्वमौदार्यवीर्यादेर्विशेषणम्। तत्र शुद्धत्वमानन्दस्य दुःखासम्भिन्नत्वादि। संविद उरुत्वम्, ईश्वरादिगताशेषविशेषविषयत्वम्। द्युतेरुरुत्वम् 'तमेव भान्तम्' इति श्रुत्युक्तप्रकारेण सकलप्रकाशकत्वमन्यनिष्ठप्रकाशनियामकत्वञ्च। बलस्य त्वप्रतिबन्धत्वम्। औदार्यस्य बहुलत्वं मोक्षादिसमस्तपुरुषार्थसम्बन्धित्वम्। वीर्यस्य त्वारब्धसकलकार्यनिष्पत्तिहेतुत्वमिति द्रष्टव्यम्। *'गुणैरुदीर्णम्' इत्युक्त्या* प्राप्तगुणगुणिभेदशङ्कानिरासार्थं वीर्यादिस्वरूपदेहमित्युक्तम्। देहस्य परमात्मना सहाभेदस्य 'यदात्मको भगवांस्तदात्मिकी व्यक्तिः' इत्यादिना प्रमितत्वाच्छङ्कानिरासः। 'दोषवर्जितम्' इत्येतद्दोषस्वरूपप्रदर्शनेन'अशेष''अति'पदाभ्यां च विवृतम्। 'ज्ञेयम्' इत्यत्र ज्ञातृप्रदर्शनं सद्भिरिति। ज्ञातृकथनेन वैराग्याद्युपायकथनेन वेदान्तवेद्यमिति ज्ञानकरणकथनेन च विवृतम्। श्रुतिमती श्रवणमनने।

---

माध्वसंप्रदाये निरुपपद**टीकाकारा** इति जयतीर्थगुरुपादा एव व्यपदिश्यन्ते। टीकासहायमन्तरा पूर्णप्रमतिविरचितानां प्रबन्धानां, पारमार्थिकभावस्य ज्ञानं दुर्लभमिति विदितचरमेव। मध्वग्रन्थव्याख्याने टीकाकाराणामेव मुख्याधिकार इति मध्वाचार्या एव व्यवातिष्ठिपन्। तथा हि—जन्मान्तरे इन्द्रो वृषभरूपं धृत्वा मध्वपुस्तकभारवाही तत्र तत्र तदीयदिग्विजययात्रासुताननुजगाम। प्रत्यहं पूर्णप्रज्ञे शिष्येभ्यो निजग्रन्थतत्त्वार्थोपदेशं कुर्वति वृषभोऽयमेकाग्रचित्तेन तदुपदेशं शुश्राव। आचार्या अपि प्रवचनसमये वृषभमभिमुखीकृत्य गभीरं, दुरूहं च निजग्रन्थाभिप्रायं प्रत्यपीपदन्।

आचार्यकृतमसहमानाः शिष्याः पर्यपृच्छन्—गुरो! महाप्रभो! भवद्ग्रन्थभावं व्याख्यानद्वारा को वा प्रकाशयेदिति।

आचार्याः प्रत्यूचुः—'व्याख्यास्यत्येष गोराट्' इति। कुपिताः शिष्याः शेपुः गोराट् "प्रवचनसमये सर्पदष्टो म्रियेत" इति।

सकलजगज्जीवननियामकमुख्यप्राणावतारभूता आनन्दतीर्थाः करुणामृतवर्षेण वृषभमुज्जीवयामासुः।

*पुनर्जन्मान्तरे वृषभः (इन्द्रः) जयतीर्थरूपेण महीमलञ्चकार। साक्षान्मध्वमुखतः,* तद्ग्रन्थरहस्यार्थं श्रुतवतां जयतीर्थगुरुपादानामेव मध्वप्रबन्धटीकारचने मुख्याधिकार इति साधु संगच्छते। 'जयतीर्थविजये' कथेयं विस्तरशो वर्णिता विलोक्यताम्।

सर्वस्यास्याऽनुसन्धानं—**लोकेति**।

नियतध्यानं=स्वयोग्योपासनम् । ज्ञानमपरोक्षम् । योगस्त[ल्लक्षणोपायः]ल्लक्षण उपायः । 'ज्ञेयम्' 'गम्यम्' इत्यत्र गमने ज्ञानस्य हेतुत्वमस्तीति दर्शयितुं ज्ञानयोगाद्गम्यमित्युक्तम् । विशेष्याकाङ्क्षायां ब्रह्मेत्युक्तम् । मायावादिरीत्या मुकुन्दाभिधस्य[1] निर्गुणाऽभिन्नमन्दोपास्यमायाशबलत्वशङ्कानिरासार्थम् अमलम् इत्युक्तम् । शुद्धमित्यर्थः । गुणैः सर्वैरुदीर्णमित्यादिपदचतुष्टयस्य क्रमेणाद्याध्यायाद्यर्थप्रतिपादकत्वज्ञापनाय तद्विवरणपरम्पद्यगतविशेषणपदेषु तत्तदध्यायनिर्णीतानन्दादिगुणचिन्तादिदोषराहित्यवैराग्यादिसाधनगमनरूपफलोपन्यासः कृतः ।

व्याचिख्यासितभाष्यमूलसूत्रप्रामाण्यं सूचयन् तत्कर्तृत्वेनोपाधिना वेदव्यासं प्रणमति— याच्ञेति । अत्र 'यत उदैद्विधिरेन्दिरा' इत्यादिना वक्त्रानुकूल्यम्, 'निर्जर' इत्यादिना[2] श्रोत्रानुकूल्यम्, 'याच्ञा' इत्यनेन प्रसङ्गानुकूल्यञ्च दर्शयता—

'वक्तृश्रोतृप्रसक्तीनां यदाप्तिरनुकूलता' ।
(Anuvyakhyana P–1)

इत्यनुव्याख्यानोक्ता आप्तिमूलता सूत्राणां सूचिता । ब्रह्मसूत्रपदेन ब्रह्मपरश्रुतिव्याख्यानरूपत्वाच्छ्रुतिमूलत्वं सूत्रपदेनैव न्यायव्युत्पादकत्वोक्त्या युक्तिमूलत्वञ्च सूचितम् । विद्याया लक्ष्म्यभिमन्यमानत्वाल्लक्ष्मीत्वेन, भारतस्य धर्माद्यशेषपुरुषार्थदातृत्वात् पारिजातत्वेन, ब्रह्मसूत्रस्य स्वश्रवणरूपसेवनवतां मोक्षहेतुत्वादमृतत्वेन, पुराणानां विष्ण्वादितत्त्वप्रकाशकत्वान्मणित्वेन, शुकस्य सज्जनाह्लादकरत्वादिन्दुत्वेनोत्प्रेक्षा युक्तेति द्रष्टव्यम् ॥

१ मुकुन्दाभिधस्येति—निर्गुणाऽभिन्नत्व—मन्दोपास्यत्व– मायाशबलत्वशङ्का इति वर्तितव्यमिति भाति । निर्गुणस्य कथमप्युपास्यत्वाभावात्, मन्दस्योपासनाया सर्वथाऽधिकाराभावात्, मायाशबलस्य मोक्षदातृत्वाभावात्, अधिकारि-विषय-प्रयोजन सबन्धाख्यानुबन्धचतुष्टयाभावात् ब्रह्ममीमासाशास्त्रारम्भो न स्यादिति भाव ।

२. निर्जरेत्यादिनेति— न केवलं मनुष्याः किं तु देवा अपि ब्रह्मविद्यायामधिकारिण इति स्पष्ट भवति । प्रतिपादितश्चायमर्थ "भाव तु बादरायणोऽस्ति हि" इति सूत्रयता भगवता बादरायणेन ।

व्याख्येयत्वप्रयोजकसफलत्वगम्भीरत्वादि दर्शयन् भाष्यकृतं प्रणमति—**स्वान्तेति**। वैकर्तनांशुव्रजादेः स्वान्तध्वान्तनिकृन्तनादावशक्तत्वादेव भाष्येण जितत्वम्। जितमहावैकर्तनांशुव्रजत्वे जितचन्द्रचन्द्रिकत्वे हेत्वन्तरं **निर्दोषमिति**। वैकर्तनांशुव्रजचन्द्रिकयोर्ह्रासादिदोषयुक्तत्वादिति। जितसिन्धुराजत्वे **हेतुरमितमिति**। अर्थतो अमितत्वं द्रष्टव्यम्। ग्रन्थस्य परिमितत्वात्। अत्र भाष्यस्य जितमहावैकर्तनांशुव्रजत्वजितचन्द्रचन्द्रिकत्वोक्त्या तद्विशिष्टाचार्यमुखस्य सूर्यचन्द्रबिम्बा(दावा)धिक्यं[1] ध्वनितम्। **कृपालव इति**[2]। यद्यपि 'स्पृहिगृही' त्यादिना कृपेराल्लुच्प्रत्ययो न विहितः, स्तथापि 'लुशमविधायाल्लुच्करणमन्यत्रापि यथा स्यात्। तेन कृपालुरित्यादि सिध्येत्' इति वैयाकरणवचनादेस्तत्साधुता। अत एव कौमुद्याम् 'हरे कृपालो नः पाहि' इत्युक्तम्।

यद्वा कलशवाची अयमालुशब्दः। 'कर्कर्यालुर्गलन्तिका' इत्यभिधानात्। तथाच कृपापूर्णकलशा इत्यर्थः। कृपाऽऽलव इत्यपि क्वचित् पाठः। **तत्कृपया** तेषां मुकुन्दादीनां नमस्कृतानां कृपया। **रथ्याद्भिरिति**। समासान्तो विधिरनित्य इत्यभिप्रेत्यैवमुक्तम्। अत एव महाभाष्ये 'शुष्यन्ति तटाकानि' इति प्रयोगः। रथ्यापैरित्यपि क्वचित् पाठ। **सङ्गम्यन्त** इति। वाचो विशुद्धीत्युक्तत्वान्मदीयया वाचा इति अर्थसिद्धत्वान्नोक्तम्। **अथाविद्येति**। मङ्गलग्रन्थारम्भयोः कृतत्वेनाथशब्दो भाष्यस्थप्रतिग्रन्थव्याख्यानारम्भार्थो बोद्धव्यः। **फलसाधनतासिद्ध्यर्थमिति**। फलसाधनतासिद्धिरर्थः प्रयोजनं यस्य नमस्कारस्येति विग्रहः। मङ्गलयुक्तस्यैव ग्रन्थादे फलहेतुत्वादिति भावः। निरन्तरायपरिसमाप्त्याद्यर्थमित्यत्रापि पूर्ववद्विग्रहः। प्रथमस्य शिष्यशिक्षार्थस्य वक्ष्यमाणत्वेन फलसाधनतासिद्ध्यादिफलकत्वाभावात्। **पुरुषार्थो भवतीति सूचित इति**। अतः शब्दोक्तपुरुषार्थं प्रति विहितब्रह्मजिज्ञासायाः साक्षाद्धेतु- P. 2
त्वासम्भवेन जिज्ञासाजन्यज्ञानजप्रसादस्यार्थसिद्धत्वादिति भावः। **विशिष्टगुणानाचष्ट** इति। अत्र गुणशब्दो गुणोदीर्णत्वदोषवर्जितत्वज्ञेयत्वगम्यत्वरूपधर्म-

---

१. **चन्द्रबिम्बाधिक्यमिति** — संसृतिसंतरणोपायभूतब्रह्मविद्योपदेशजनिताऽऽह्लादकरत्वेन, अज्ञानान्धकारनिवर्तकत्वेन चाधिक्यं वेदितव्यम्।

२. **कृपालव इति**—"दयालव इत्यपि क्वचित् पाठः" इति **भावदीप**काराः।

परः । अनेन नारायणशब्दस्याध्यायचतुष्टयप्रतिपाद्यगुणोदीर्णत्वादिप्रतिपादकत्वप्रदर्शनेन तद्वाच्यस्य ब्रह्मणोऽधिकृतत्वरूपं नम्यत्वे निमित्तमुक्तं भवति[1] ।

नरसम्बन्धित्वादित्यत्र नराः सज्जना विवक्षिताः । **न रीयत इति** । नञ उपपदाद्रीङ्क्षय इत्यस्माद्धातोः करणे डप्रत्यये प्रज्ञादित्वात् स्वार्थिकाण्प्रत्यये च कृते नारमिति रूपसिद्धिरिति द्रष्टव्यम् । अरमणं दुःखम् । **निर्दोषवेदोत्पन्नत्वादिति** । निर्दोषवेदवाचकान्नारशब्दात् 'तस्येदम्' इत्यणि कृते नारशब्दो वेदजन्यज्ञानवाचीति भाव. ॥

ननु अरविरुद्धगुणाश्रय इति निर्वचने अरशब्दस्य विरुद्धार्थकनञ्समासे अरशब्दवाच्यदोषाश्रयो न भवतीति निर्वचने अरायणशब्दस्यान्यार्थकनञ्समासे नारमणं. येनेत्यादिनिर्वचनेनारशब्दस्याभावार्थकनञ्समासे च 'नञो नलोप.' इति नलोपे 'तस्मान्नुडचि' इति नुडागमे चानरायण इति भवेत् । कथं नारायण इतीत्यत आह—**नगनाकादिशब्दवदिति** । 'न भ्राड्' इत्यादिसूत्रद्वयेऽयमपि शब्द उपसङ्ख्येय । उक्तनिर्वचनानुसारेणापि नारायणशब्दप्रयोगस्य प्रमाणसिद्धत्वादिति भाव । 'पूर्वपदात् सज्ञायामग' इति णत्वम् । ल्युटः टित्करणसामर्थ्यात् अयनशब्दोऽधिकरणे त्रिलिङ्ग इति पुँल्लिङ्गत्वञ्च युक्तम् । ननु देवतासमुच्चायक'च'शब्दसद्भावात्'अपि'शब्द किमर्थ इत्यतआह—**स्वस्येति** । कथम्'अपि'पदेनारुचि. सूचितेत्यत आह—**यद्यपीति** । अनेन'अपि' इत्येतद्यथापीति व्याख्यातं भवति । **नतिरितीति** । प्रकारवाचि'इति'शब्दस्येत्यरुचिं सूचयतीत्यन्वयो द्रष्टव्य ॥

ननु ग्रन्थस्य फलसाधनतादेर्नमस्कारेणैव सिद्धेर्ग्रथनं व्यर्थम् । एवमधिकारादिसूचनस्य प्रवृत्त्यङ्गतया कर्तव्यत्वेऽपि न महाफलार्थे तत्कार्यम् । तत्स्मरणेनैव[2] फलसिद्धेरित्यत आह—**नमस्काराधिकार्यादीति** । अधिकार-

---

१. **निमित्तमुक्तं भवति इति**—"अथातो ब्रह्मजिज्ञासा" इति सूत्रस्थब्रह्मशब्दप्रतिपाद्योनारायण एव सकलकल्याणगुणपरिपूर्ण । चतुर्लक्षणी च तत्प्रतिपादनैकपरा । अतो नारायणस्यैव नम्यत्वम् । तस्यैव जिज्ञासाविषयत्वादिति भाव ।

२ **स्मरणेनैव इति**—स्मरणस्याऽन्यनिष्ठत्वेन शिष्यानुशासनार्थं प्रबन्धग्रथनाधिकारसूचनादीनामवश्यकर्तृत्वमिति बोध्यम् ।

सूचनमेवोपपादयति—**तथा हीति । अनन्यार्थतयेति ।** प्रातीतिकार्थभाष्यकारान्तरोक्तविरुद्धार्थपरं न भवतीत्यनेन प्रकारेणेत्यर्थः । प्राधान्येनेति वार्थः । **प्रायस्तदेवोपादेयमिति ।** अप्रमाणत्वादिना निश्चितस्यापि ख्यात्याद्यर्थं व्याख्यानोपादानदर्शनात् प्राय इत्युक्तम् । अत्युपादेयमित्यर्थः । अत एव ब्रह्मसूत्राणाम् 'अत्युपादेयत्वात्' इति वक्ष्यति । एवञ्च 'यदुपादेयम्' इत्येतत् यदत्युपादेयमिति व्याख्येयम् । एवमुपादेयताया इत्येतदपि । 'तन्निर्णयाय'इति भाष्ये तच्छब्देन ज्ञानपरामर्शः । तस्य प्रमाणत्वमोक्षहेतुत्वादिना निर्णयस्तन्निर्णयः । अत एवेदमदो वेत्यादिना ज्ञानविषयकसंशयविपर्ययौ दर्शितौ । द्वापरे अवततारेत्यन्वये स्वरूपकथनमेव स्यात् । अत आवश्यकं यथा स्यात् तथाऽऽह—**आकुलीभावेति ।** 'अथेष्टानिष्ट'इति भाष्ये 'अथ'शब्द अवतारानन्तर्यार्थिकः सन् व्यासावतारस्य मुख्यतो वेदोद्धारादिप्रयोजनकत्वमाह—'अथ' इत्यस्यावतारानन्तरमेव ; न तु परोपदेशमपेक्ष्य येन स्वतः सार्वज्ञ्यं न स्यादित्यर्थ इति **चन्द्रिकायाम्**[1] । 'वेदमुत्सन्नमित्यादेः' इत्यस्य 'इत्यर्थः' इति वक्ष्यमाणेनान्वयः । 'उत्सन्न'शब्दस्य नष्टार्थत्वं निवारयन्नाह—**अपपाठादिनेति ।** व्यासावतारात् प्राग्वेदानामविभक्तत्वं निराकुर्वन् 'व्यभजत्' इत्यस्य विवक्षितमर्थमाह—**प्रागेवेति । अवान्तरवेदादीति ।** 'अवान्तरवेद'पदादुद्धृतो वेदः (अवान्तरवेदपदेन) ग्राह्यः[2] । 'आदि'पदेन चतुर्विंशत्यादिशाखा ग्राह्याः । **अयं भाव** इत्यत्र नारायणावतार इत्यनेन '*नारायणो व्यासत्वेनावततार*' इत्येतदुक्तार्थम् । नारायणावतारस्य अमाद्यसम्भवं प्रत्यप्रयोजकत्वं परिहरति—**भगवत्त्वादेवेति ।** अन्यथा तन्न स्यादित्यर्थ । अनेन 'भगवान्' इत्येतदुक्तभावम् । **ब्रह्मादिश्रोतृष्विति ।** अनेन 'ब्रह्मरुद्रेन्द्रादिभिः'इत्येतदुक्ताभिप्रायम् । **अज्ञाननिर्बर्हणस्येति ।** एतेन 'तन्निर्णयायार्थितः' इत्येतदुक्ततात्पर्यकम् । **श्रुतिनिर्णायकत्वेनेति ।** अमुना 'तदर्थनिर्णयाय' इत्युक्ता- P. 3

---

१. **चन्द्रिकायमिति—भावबोध**कारास्तत्र तत्र श्रीव्यासराजविरचित**तात्पर्यचन्द्रिका**परामर्शं कुर्वन्ति । **भावदीप**कारास्तु "तात्पर्यचन्द्रिका "माहात्म्यमेवमुपवर्णयन्ति—" सत्यप्रकाशिकाऽऽकृतं चन्द्रिकात. प्रकाशितम्" इति ।

२. **ग्राह्य इति**—नित्यस्य वेदस्य शाखादिविभागोऽपि नित्य इति ज्ञेयम् ।

शयम्। निर्णयायेति सूत्राणां निर्णायकत्वोक्त्या युक्तिमूलकत्वस्याप्युक्तत्वात्। **इष्टानिष्टप्राप्तिपरिहारेति।** अनेन 'तज्ज्ञापनार्थम्' इति 'तदर्थनिर्णयाय' इति चोक्ततात्पर्यकम्। तदर्थनिर्णयायेत्यत्र तच्छब्देन तज्ज्ञापनार्थमित्युक्तिलब्धेष्टानिष्टप्राप्तिपरिहारसाधनवेदनकरणरूपवेदपरामर्शादिति बोद्धव्यम्। निष्पन्नज्ञानस्य त्रेतादावपि स्थितत्वेन कृतग्रहणं किमर्थमित्यत आह—**यथोत्पन्नमिति।** ज्ञानस्य प्रकारान्तरेण विक्रियमाणत्वाभावात् 'अन्यथा जातम्' इति पदं व्याचष्टे—**इदमदो वेत्तीति।** दृष्टं विषयीकृतम्। **अज्ञानमितीति।** सम्यग्ज्ञानं न भवतीति विपरीतप्रतीतिविषयतामित्यर्थः। ब्रह्मादिदेवव्यतिरिक्तसकललोकानां[1] गौतमहृतगोनिर्मातृत्वाभावात्तेषां सर्वेषां कथं साकल्येन सम्यग्ज्ञानान्यथात्वमित्यत आह—**लोकस्य चेति।** बहुवचनप्रयोगेऽपीति। 'उत्सन्नान् भगवान् वेदान्' इत्यत्रेत्यर्थः। **यावदक्षरतामिति।** यावदक्षरतां विना विवक्षितार्थाऽसिद्धिस्तदर्थप्रतिपादनाय ततोऽधिकाक्षरानुपादानमल्पाक्षरत्वमित्यर्थः। अतो नाऽस्तोभत्वेन सह साङ्कर्यम्। **बहुशाखानिर्णायकत्वमिति।** महाव्याकरणसूत्रादेरपि बहुशाखागतपदस्वरादिनिर्णायकत्वेन न तत्राऽव्याप्तिरिति[2] बोध्यम्। 'निर्विशेषितसूत्रत्वम्' इति मूले 'अत'शब्देन निर्विशेषितसूत्रत्वे हेतुरुच्यत इति प्रतीयते। अत कथमवतारिका? न चैतदनुसारेण मुख्यसूत्रत्वेन निर्विशेषितसूत्रत्वं साधयतीति कुतो नावतारितमिति वाच्यम्। यद्यत्र निर्विशेषितं तत्तत्र मुख्यमिति व्याप्तौ यथा व्यासत्वमिति दृष्टान्तकथनायोगात्। वेदनिर्णयाय[3] सूत्रान्तरैरलमिति शङ्कायां 'सूत्रेषु येषु' इति वक्ष्यमाणरीत्या मुख्यसूत्रत्वोक्त्यैव परिहारेण तेन निर्विशेषितसूत्रत्वसाधनस्यासङ्गतत्वाच्च। यथाश्रुतोऽपिशब्दः सूत्रान्तरस्य निर्विशेषितसूत्रत्वं समुच्चिनोतीति च प्रतीयते। 'च'शब्दश्च किमर्थमित्यतो वाक्यं योजयति—

---

१ **गौतमेति**—गौतमदत्तशापकथा **तत्त्वप्रदीपे** विस्तरशो निरूपिता। न्यरूपि च **भावदीप**कारैः स्वग्रहेण।

२ **नाऽव्याप्तिरिति**—महाव्याकरणसूत्रादेरपि न सूत्रलक्षणबहिर्भाव इति ज्ञातव्यम्।

३. **वेदेति**—वेदार्थनिर्णयायेति भावः।

यत इत्यादिना । [1]पर्वतस्य (धूमवत्त्वं) वह्निमत्त्वं कुत इति प्रश्ने व्यापकीभूतवह्निमत्त्व एव प्रमाणसिद्धधूमत्वं सम्भवतीत्यभिप्रायेणात एवाग्निमत्त्वादेव धूमवत्त्वमित्युक्ते तथा धूमवत्त्वस्य वह्निमत्त्वे हेतुत्वमिति गम्यते। तथा प्रकृतेऽपि निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वे हेतुत्वलाभः। अत एव हेतोरन्यथासिद्धिनिरासार्थमवधारणार्थः 'च' शब्दो 'अत एवेति' योजितः। 'अपि'-शब्दस्तु मुख्यत्वरूपसाध्यसमुच्चायकः। हेतुसिद्ध्यर्थमुक्तम्—**पुराणादाविति**[2]।

'निर्विशेषितशब्दात् वै ब्रह्मेति हरिरुच्यते।
*यथा सूत्रेति शब्देन ब्रह्मसूत्रं निगद्यते॥'*

इत्यादावित्यर्थः। निर्विशेषितसूत्रत्वन्तु निरुपपदसूत्रशब्दवाच्यत्वमिति द्रष्टव्यम्। **निर्विशेषितव्यासत्वमिति**। व्यासत्वमित्येवोक्तत्वादन्ये विशेषणाद्व्यासा इत्युक्तत्वाच्चेति भावः। **तन्मुख्यमिति**। अनेनैकस्येति मुख्यस्येति व्याख्यातं भवति। **अमुख्या** इति। तत्रैकस्येत्युक्तत्वात् अत्रामुख्यत्वमर्थलब्धमिति भावः। **विशेषणाद्व्यासा** इति। सोपपदशब्दवाच्या इत्यर्थः। **न मुख्यत्वमिति भाव** इति। अनेन 'सविशेषण' इति मूले 'हि'शब्दो हेत्वर्थः। 'अपराणि' इत्यस्य ब्रह्मसूत्रभिन्नत्वममुख्यत्वञ्चार्थः। निर्विशेषितसूत्रत्वस्य मुख्यसूत्रत्वसमव्याप्तत्वात् तद्व्यापकत्वेन तदभावेन तदभावसाधनं चोपपद्यत इत्युक्तं भवति। **एतदुपपादनायैवेति**। मुख्यस्य निर्विशेषेणेत्यनेन निर्विशेषितत्वहेतोरप्रयोजकत्वशङ्कापरिहारेण पक्षादन्यत्र व्यभिचारशङ्काया अपि तत एव परिहारसम्भवादव्यभिचारप्रदर्शनमुखेनापि तस्य तत्रानुपयोगादिति भावः। **मुख्यस्यैवेति**। अन्यथाशङ्काया अपरिहारात्। एवम् 'विशेषणात्' इत्यत्रापि

---

१. **पर्वतस्येति**—पर्वतस्य वह्निमत्त्वं कुत इति प्रश्ने, व्यापकीभूतधूमवत्त्व एव प्रमाणसिद्धवह्निमत्त्वं भवतीत्यभिप्रायेणात एव धूमवत्त्वादेवाऽग्निमत्त्वमित्युक्ते यथा धूमवत्त्वस्य वह्निमत्त्वे हेतुत्वमिति गम्यते, इति भवितव्यमिति भाति। एवं च, धूम-धूमध्वजव्याप्तिवत् निर्विशेषितसूत्रत्वमुख्यसूत्रत्वयोर्व्याप्तिरिति भावः। (The text is here reconstructed.)

२. *पुराणादाविति*—इतरसंप्रतिपन्नप्रमाणाऽविरोधे सति पुराणानां प्रामाण्यमभ्युपगन्तव्यमेवेति भावः।

'एव' इति योज्यम् । अत्र मुख्यस्य निर्विशेषणशब्दवाच्यत्वे 'इति वेदविद प्राहु' इति वेदस्य वृद्धव्यवहारस्य च प्रमाणीकृतत्वेन विपक्षे प्रामाणिकपरित्याग-प्रसङ्गाभिप्रायाच्छङ्कापरिहार इति भाव ॥

ननु 'सूत्रेषु येषु सर्वेऽपि' इत्यत्र ब्रह्मसूत्राणां सर्वशास्त्रानिर्णायकत्वमुच्यते। कथ तेन ब्रह्मसूत्राणा निर्णायकत्वमुच्यते? कथं तेन ब्रह्मसूत्राणा मुख्यत्ववच-नात् सूत्रान्तर्गतार्थताशङ्कापरिहार इत्यतस्तात्पर्यमाह—**यत्सूत्रधर्मतयेति** । प्रागुक्तमेव मुख्यसूत्रत्व यथा हेतु स्यात् तथाऽनेन वाक्येन विनियत इति भाव । **शब्दसमूहैः क्रियमाण** इति। अनेन 'शब्दजातस्य' इति सम्बन्धे षष्ठी। सम्बन्धश्च जन्यजनकभाव इत्युक्तं भवति । 'शब्दजातस्य' इति षष्ठी कर्तरि; न तु कर्मणीत्यर्थ इति **चन्द्रिकायामुक्तम्** ।

ननु 'एव ज्ञान पुन प्रापुर्देवाश्च ऋषयस्तथा' इति भारततात्पर्यनिर्णये पुनश्शब्दबलाद्देवादीना तिरोहितज्ञानप्रसेराचार्यैरेवोक्तत्वात्तद्बलात् 'ज्ञान सस्थाप्य' इत्यत्रापि तिरोहितमुत्पाद्येत्यर्थ स्यादित्यत आह—**एव ज्ञानमिति** । **अध्यायपादसङ्गतिस्त्विति** । यथा "तद्विजिज्ञासस्व' "यतो वा' इत्यादिब्रह्म-प्रतिपादकवाक्यार्थनिर्णायकन्यायव्युत्पादकतया अधिकरणपञ्चकस्य ब्रह्मविचार-रूपेण शास्त्रेणान्तर्भावलक्षणा सङ्गति, न तथाऽध्यायपादाभ्या समन्वयतद्विरो-धाप्रतिपादकत्वादिति भाव ॥

---

१ **चन्द्रिकायामिति**–भावदीपेऽस्य परामर्श उपलभ्यते ।

२ **अध्यायपादसङ्गतिरिति**—अन्तर्भावरूपा, आनन्तर्यरूपा चेति द्वेधा सगति । तत्र प्रथमा–शास्त्र–अध्याय–पादान्तर्भावरूपेण त्रेधा। द्वितीयापि आक्षेपिकी–आतिदेशिकी औपोद्घातकी-आपवादिकीत्यादिभेदेनाऽनेकरूपा। एवमानन्तर्यसगतेस्तावदनेक-विधत्वम्। उत्तराधिकरणविषयवाक्यस्य पूर्वाधिकरणविषयवाक्येन सगति श्रुतिसगति र्भवति। इति **भावदीप**कारा ।

**चन्द्रिकाकारास्तु**—

'शास्त्रेऽध्याये तथा पादे श्रुत्याऽधिकरणन च ।
सगति पञ्चधा प्रोक्ता सर्वाधिकरणेष्वपि ॥" इत्याहु ।

ननु समन्वयसूत्रे[1] साक्षात् समन्वयस्यैवोक्तेः 'तमेव समन्वयं प्रकटयति' इति भाष्येऽध्यायशेषस्य समन्वयसूत्रोक्तसमन्वयप्रपञ्चकत्वोक्तेः समन्वयसूत्रेणाध्यायशेषस्य प्रपञ्च्यप्रपञ्चकभावसङ्गतिरिति सुधाग्रन्थाच्च तस्यान्तर्भावसत्त्वादीक्षत्यधिकरणे "तदभावे कुतोऽन्वयः' इत्यनुव्याख्यानोक्तरीत्या समन्वयासाधारणहेतुवाच्यत्वसमर्थनेन तस्याध्यायान्तर्भावसम्भवात् कथमानन्दमयाधिकरणमारभ्यैवेत्युक्तमिति चेत्; सत्यम्। वैदिकानां शब्दानां ब्रह्मण्युपक्रमादिप्रमाणकः शक्तितात्पर्यलक्षणः सम्बन्धः समन्वयः। स च न समन्वयसूत्रप्रतिपाद्यः। तत्प्रमाणस्यानुक्तेः। किन्तु व्युत्पादयिष्यमाणः स शास्त्रयोनित्वे हेतुत्वेन सिद्धवदुपन्यस्तः। ईक्षत्यधिकरणेऽध्यवाच्यत्वप्रयुक्ता समन्वयाशङ्कैव निरस्ता। समन्वयस्तु न व्युत्पादित इति न तयोरध्यायान्तर्भावलक्षणा सङ्गतिः। किञ्च, अनयोरधिकरणयोः पादार्थप्रतिपादकत्वेन न पादान्तर्भाव इति सिद्धम्। तथा च कथमध्यायान्तर्भावोऽपि[2] न हि यैवद्विशेषानन्तर्भूतं सामान्यान्तर्भूतं सम्भवतीति। **अध्यायपादपीठत्वादिति।** वक्ष्यमाणक्रमेणैतदधिकरणपञ्चकव्यतिरेकेण समन्वयाद्याकाङ्क्षानुदयात्तदाकाङ्क्षोत्थापकतया ततोऽर्वाक्तनानां पञ्चानामप्यधिकरणानामध्यायपादपीठत्वादित्यर्थः। **नाधिकरणश्रुतिसङ्गती इति।** पूर्वाधिकरणतद्विषयवाक्याभ्यां सङ्गती नेत्यर्थः। **कर्तव्या न वेति।** अत्र वेदार्थनिर्णयकन्यायग्रथनात्मकमिदं शास्त्रमनारम्भणीयमुतारम्भणीयमिति प्रधानचिन्ता, नैतच्छास्त्रमारम्भणीयमित्युपसंहारवाक्यसूचिता द्रष्टव्या। अत एव **सुधायां** तत्र संशयः किमिदमारम्भणीयं नवेति प्रधानचिन्तामुक्त्वा जिज्ञासायाः कर्तव्यत्वाकर्तव्यत्वकोटिका चिन्ता तादर्थ्येनोक्ता। ईदं तदर्थचिन्ताप्रदर्शनं सर्वत्र यथासम्भवं तदर्थचिन्तोहः कर्तव्य इत्युपलक्षणत्वेनेति ज्ञातव्यम्। तथाचात्र किमिदं शास्त्रमनारम्भणीयम्, उत आरम्भणीयमिति चिन्ता। तदर्थमेतच्छास्त्र-

---

१. **न हीति**—समन्वयेक्षत्यधिकरणयोः पादान्तर्भावाभावादेवाध्यायान्तर्भावाभावः। विशेषाः पादाः। सामान्यपदेनाध्यायग्रहणम्। न हि पादेषु क्वापि अलब्धावकाशोऽध्याये लब्धावकाशोभवेदिति हृदयम्।

२. **इदमिति**—सर्वत्राधिकरणेषु तदर्थचिन्ताप्रदर्शनं संभावितसकलकोटिपरामर्शेन निपुणतममुपपादितमिति **भावबोध**काराणां विचारकौशलमतीव चारुतामाधत्त इति विभावनीयम्।

व्युत्पादितन्यायकरणिका जिज्ञासा न कर्तव्या। उत कर्तव्येति तदर्थं जिज्ञासार्थां विषयादिकं न सम्भवति उत सम्भवतीति। तदर्थंविषयभूतं ब्रह्म किं प्रत्यगर्थभूतजीव एव प्रयोजनत्वेनाभिमतो मोक्षश्च कर्मादिसाध्यः ; उत प्रत्यगर्थजीवभिन्नं मोक्षश्च विष्णुज्ञानजप्रसादैकसाध्य इति। तदर्थं ब्रह्मणो जीवभिन्नत्वे मोक्षस्य तादृशविष्णुप्रसादसाध्यत्वे च प्रमाणं नास्ति उतास्तीति। यदि प्रमाणाभावस्तदा ब्रह्ममोक्षयोर्विषयप्रयोजनत्वासम्भवात्त एवाधिकार्याद्यभावाद्विषयादिशून्यत्वेन जिज्ञासाया अकर्तव्यत्वे शास्त्रमनारम्भणीयमिति पूर्वपक्षे प्रमाणसद्भावे च तयोर्विषयप्रयोजनत्वोपपत्तेर्मोक्षकामनया ब्रह्मजिज्ञासोरेवाधिकारित्वादिसम्भवात् सम्बन्धसम्भवाच्च विषयाद्युपेतत्वेन जिज्ञासाया कर्तव्यत्वे शास्त्रमारम्भणीयमिति सिद्धान्ते च फलफलिभाव। एवमुत्तरत्रापि द्रष्टव्यम्। यत्राविशदं तत्र वक्ष्यते। जीवव्यतिरिक्तेश्वराभावात् तस्य च स्वप्रकाशत्वेन नित्यसिद्धत्वान्न जिज्ञास्यतेति न्यायनिरणानुसारेण पूर्वपक्षमाह—**न कर्तव्येत्यादिना**। **न्यायनिरणे** अधिकार्यादिनिरास उपलक्षित इत्यभिप्रेत्य विषयाद्यभावचतुष्टयं पूर्वपक्षयुक्तित्वेनोक्तम्। यथोक्तम् **न्यायनिरणटीकायाम्**—'तथाप्युपलक्षणतया विषयनिराकरणसमर्थनयोरेव विवरण क्रियते' इति। **न तावद् ब्रह्मेति**। नापि प्रयोजनादीति तावच्छब्द, न तु नात्रऽब्रह्मविषयै इति। अब्रह्मणो विषयत्वानिराकरणादिति ध्येयम्। किमनुभवोऽजिज्ञासितग्राह्य, उत जिज्ञासितग्राह्य इति विकल्प हृदि[4] निधायाऽऽद्ये दोषमाह—**तस्यापीति**। द्वितीयं शङ्कते—**जिज्ञासायामेवेति**। जिज्ञासा च न सर्वत्रेति नानवस्थेति भाव। **अनुभव-**

---

१ **ब्रह्मजिज्ञासोरिति**—निर्गुणब्रह्मणो विषयत्वासम्भवेनाधिकार्यभावाज्जिज्ञासोरभावेन शास्त्रमनारम्भणीयमेवेत्यापतति परपक्षे।

२ **यत्रेति**—"यत्र त्वस्पष्टस्तत्र वक्ष्यते" इति **चन्द्रिकाकारा**।

३ **न तु इति**—अब्रह्मण कथमपि नानाऽवसर इति ब्रह्मण एव विषयत्वाभावप्रतिपादन बोध्यम्।

४ **हृदीति**—निधायेति वर्तितव्यम्। अयमेव विचारक्रमो **भावदीपे**ऽपि दृश्यते।

**विरोधादिति ।** ज्ञानस्य सुखदुःखादिवजिज्ञासाभावेऽप्यनुभवात् । अन्यथा जिज्ञासाया ज्ञानाख्यधर्मिज्ञानसाध्यत्वानुभवादनवस्था स्यादिति भावः ॥

ननु न ज्ञानमात्रमजिज्ञासितग्राह्यम्, येनानवस्था । नापि जिज्ञासितग्राह्यम्, येनानुभवविरोधः । किन्तु किञ्चिज्ज्ञानं कदापि न ज्ञायत एवेति न कोऽपि दोष इत्यत आह—**न ह्यज्ञायमानेति ।** अज्ञायमानत्वादेवेति भावः । **संविदात्मकत्वादिति ।** आत्मा न संविदाश्रयतया प्रतीयते । संविदात्मकत्वात् । संविद्वत्, इति प्रयोगो द्रष्टव्यः । न चासिद्धो हेतुः । औत्तरिकानुस्मृत्यैव तस्य सिद्धत्वादिति भावः । 'विषयप्रयोजनाभावादेवाधिकारी च । तदभावादेव सम्बन्धोऽपी'त्याचार्योक्तिं मनसि निधाय अधिकारिसम्बन्धाभावमाह—**विषयप्रयोजनाभावादित्यादिना ।** यत्प्रयोजनमर्थयमानो यद्विषयं जिज्ञासते स तत्राधिकारीति, विषयप्रयोजनयोरधिकारिव्यापकत्वादिति भावः । 'अत एव,' सम्बन्धिनामभावादेवेत्यर्थ. । **तत्परतयेति ।** 'अस्माभिरप्यानन्तर्याभिधेयो 'अर्थशब्दः श्रुत्या मङ्गलप्रयोजनक इत्यङ्गीकृतत्वादि'ति सुधानुसारान्मङ्गलप्रयोजनपरतयेत्यर्थः । न तु तदभिधेयतयेति । अत एव 'तस्याभिधेयमर्थमाहे'ति वक्ष्यति । तथाचा'थ'शब्दो मङ्गलार्थ इति भाष्ये[1] अर्थशब्दो प्रयोजनवचन इति भावः । **मङ्गलोक्त्यादेरिति ।** मङ्गलप्रयोजनका'थ'शब्दो मङ्गलत्वेन विवक्षितः । तस्योक्तिरुच्चारणम् । आदिपदेनाधिकारानन्तर्यादिप्रतिपादनम् । अन्यथा मङ्गलोक्तेरित्यवक्ष्यदिति । **निखिलान्यपीति ।** निखिलान्यपीत्यस्यैव विवरणं नियत्यैवेतीति भावः । **द्वितीयमाक्षिपतीति ।** अवश्यवक्तव्यार्थत्वाधिक्यार्थयोस्तदभावयोश्च शब्दान्तरेषु दर्शनादथशब्दे तत्सन्देहेन प्रश्नमात्रसम्भवेन प्रथमतृतीययोः पृच्छतीत्युक्तम् । द्वितीये तु स्वरूपाधिक्यस्य शब्दान्तरेष्वदर्शनादथशब्दे तदाक्षेप इति भावः । अत एव 'शब्दान्तरस्य' इत्यादिना मूलाभिप्रेतो हेतुः प्रदर्शितः । 'कथं'शब्दः प्रश्नार्थकः । 'उत्तमता'शब्दस्तु उत्तमार्थतार्थक इत्यभिप्रेत्य कथमित्यादि प्रकारान्तरेण व्याचष्टे—

---

१. भाष्य इति—मध्वभाष्ये "अथ" शब्दस्योक्तं मङ्गलार्थवत्त्वमन्यैर्दूषितम् । तस्य सर्वस्य खण्डनं **विजयीन्द्रगुरुपादकृत**"न्यायमौक्तिकमाला"यां द्रष्टव्यमिति "चन्द्रिकाप्रकाशे" राघवेन्द्रतीर्थानामुक्तिः ।

**तृतीये पृच्छतीति । इति न्याय इति ।** अत्र सामान्यव्याप्तिरेवानुसन्धेया । यथा देवेषु चतुर्मुख इति दृष्टान्तसम्भवात् । न तु य शब्द इति विशेषव्याप्ति । दृष्टान्ताभावादिति भाव । [1]अत इत्यस्मात शब्दपरत्वं हेतुपरत्वं 'तृतीयोऽत उदाहृत' इत्यनयोरावृत्तिम् । 'प्राथमिकौ' इत्यस्य वचनव्यत्यासेनानुषङ्गं चाभिप्रेत्य व्याचष्टे—**अतश्च तृतीयत्वेति** । 'अकार सर्ववागात्मा' इत्यत्राकारस्य सर्ववागर्थप्रतिपादकत्वमेव सर्ववागात्मकत्व सर्ववागात्मेत्यस्य हेत्वर्थगर्भत्व चाभिप्रेत्याह—**सर्ववागर्थेति** । अभिधायकत्वयेतीत्थंभूतलक्षणे तृतीया । प्राणशब्दस्य विष्णुपरत्वममप्यभिप्रेत्याह—**भगवद्वाचकाविति** । यद्वा, प्राणश्चात्मा भगवाश्च प्राणात्मानौ, स्वार्थे कप्रत्यय इति भावेन प्राणात्मकावित्येतद्व्याचष्टे—**प्राणदैवत्यौ भगवद्वाचकाविति** । महत्तत्त्वाभिमानिनश्चतुर्मुखादित्यर्थ । **अयं वै लोक प्रथमामहानाम्नीति** । महानाम्नीसञ्ज्ञिका, विदामघवन्नित्यादिका ऋक् पृथिव्यादिलोकस्थविष्णुवाचीत्यर्थ । यथोक्त कर्मनिर्णये—

"[2]प्रथमा या महानाम्नी तद्वाच्य पार्थिवो हरि ।
द्वितीयायास्त्वन्तरिक्षस्तृतीयायाद्युग प्रभु ॥' इति ।

**सच्छूद्रादौ व्याप्तेरिति** । अतिव्याप्तेरित्यर्थ । यद्यपि सच्छूद्रादेर्देहान्तरे वैदिकब्रह्मविद्याधिकारसम्भवेन तेषामपि लक्ष्यत्वान्नाति याप्ति । तथापि वेदविद्याधिकारशून्यतापादकशूद्रादिदेहावच्छिन्नेऽपि तस्मिन् मोक्षयोग्यत्वसत्त्वेनातिव्याप्तिरिति भाव । **प्रायिकत्वादिति** । देवानारभ्य त्रैवर्णिकमनुष्योत्तमपर्यन्तेषु बहुषु मोक्षयोग्येषु वेदविद्याधिकारस्य सत्वेनास्य मोक्षयोग्यत्वस्य प्रायिकत्वादित्यर्थ । **अध्ययनलब्धापीति** । 'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते' इत्यादेरित्यर्थ । **अन्यायाध्ययनेति** । अभक्तैरनधिकारिभिर्वा भक्तादेरप्यसमये [3]अयोग्यपुरुषेभ्यो वा पुस्तकपाठादिना वा कृतत्वमन्यायत्वमध्ययनस्य । **सामान्यतो**

---

१ **अत इति भावदीपे** अयमेव वाक्यक्रमो दृश्यते ।

२ 'प्रथम' इति **ऋक्संहिताया**मित्युदाहृत भगवत्पादै **कर्मनिर्णये** (p. 4.)

३ **'अयोग्य' इति** अभक्तैरनधिकारिभिश्च कृतमध्ययनमन्याय्यमिति **भावदीप** ।

सुघोक्तरीत्या पूर्वाध्यायार्थस्य कारणत्वमेतदध्यायार्थस्य कार्यत्वमिति पूर्वोत्तराध्याययोर्वैपरीत्येन कार्यकारणभावलक्षणासङ्गतिः सूचिता भवति। यौक्तो विरोध आदौ प्रबलतया निरसनीयत्वेन प्राप्तः, अत आदौ प्रथमपादे यौक्तो विरोधः परिह्रियत इत्यर्थकम् "तत्रादौ यौक्तः" इत्यनुव्याख्यानं मनसि निधाय प्रथमपाद इति भाष्याभिप्रायमाह—**तत्र सर्वविरोधानां युक्तिमूलत्वेनेति**। "तत्रापि च स्मृतेः" इत्यनुव्याख्यानगतं तत्र युक्तिविरोधाभावप्रतिपादकेऽपि पाद इत्यनौचित्यशङ्कासूचकमपि मनसि निधायाह—**यद्यपीति**। "तस्याः चतुःस्वरूपत्वात्" इत्यनुव्याख्यानानुसारेण प्रथमत इत्युक्तप्राथम्यमुपपादयति—**स्मृतीनां युक्तिसमयादिरूपत्वेनेति**। पाशुपतादिस्मृतयो हि स्वयमाप्ताभिमतवाक्यतया समयरूपा अपि स्वोक्तार्थे युक्तीः[1] श्रुतीश्च संवादयन्त्यो युक्तिसमयादिविरोधिचतुष्टयरूपा इत्यर्थः। वेदप्रामाण्यवादिस्मृतिविवक्षयैवेदम्। अत एव युक्तिसमयरूपत्वस्य सर्वस्मृतिसाधारण्यात् स्वशब्देनोपादानम्। तदप्रामाण्यत्वादिस्मृतिविवक्षायां युक्तिसमयरूपोभयरूपत्वमेवेति ज्ञातव्यम्। पाशुपतसाङ्ख्यबौद्धार्हतादिस्मृतिविरुद्धत्वादिति सुधोक्तेः। **समस्ताध्यायार्थभूतस्य प्राथम्योपपत्तेरिति**। पादचतुष्टयार्थसङ्गतस्याऽस्य निष्कृष्टपादार्थाभावेन निष्कृष्यैकत्र पादेऽन्तर्भावेऽप्यविरोधाध्यायान्तर्भावेनाध्यायस्यादावन्ते वा निवेशने कर्तव्ये प्रथमातिक्रमे हेत्वभावात् वेदाप्रामाण्यवादिस्मृतेर्युक्तिसमयरूपाया अप्यत्र विरोधपरिहारेणान्ते निवेशनायोगात् युक्तिसमयविरोधापेक्षाया विरोधचतुष्टयात्मकस्मृतिविरोधस्य प्रबलतया प्रथमं निरसनीयत्वादिति भावः। **न कोऽपि दोष इति**। अन्तर्भावरूपसङ्गत्यभावदोषो नेत्यर्थः॥

नन्विदं[2] शास्त्रयोनित्वाधिकरणेन गतार्थम्। रुद्रादेर्जन्मादिकारणत्वस्य तत्रैव निरस्तत्वात्। न च तत्रानुमानावष्टम्भेन पूर्वपक्षे श्रुत्यवष्टम्भेन सिद्धान्तः।

---

१. युक्तीति। विरोधचतुष्टयसमुच्चयः समावेशो वा पाशुपतादिस्मृतिष्विति भावः।

२. नन्विति। रुद्राद्यन्यदेवतानां जगज्जन्मादिकारणत्वं सर्वथा नोपपद्यत इति 'शास्त्रयोनित्वा'धिकरण एव समर्थितत्वात् पुनस्तत्प्रतिपादनस्यात्र कोऽवसर इति शङ्काभिप्राय.।

इह तु पाशुपतादिस्मृत्या पूर्वपक्षे पञ्चरात्रादिस्मृत्या सिद्धान्त इति वाच्यम् ; अनुव्याख्याने

"शैवाद्यागमसम्प्राप्तदृष्टेन फलेन तु'

इत्यादिना स्मृतीनामपि तत्र तस्याः चतुःस्वरूपत्वादित्यनेन युक्तेरप्यत्र पूर्वपक्ष-प्रापकत्वेन भाष्ये च—

"ऋग्यजुःसामाथर्वाश्च भारतं पञ्चरात्रकम्"

इत्यादिना पञ्चरात्रादिस्मृतीनामपि तत्र श्रुतेराधिक्यं सिध्यतीत्यनेन श्रुतेरप्यत्र सिद्धान्तप्रापकत्वेन चोक्तत्वात्। अत एव तत्र सुधायां पाशुपताद्यागमानुमानावष्टम्भेनातिव्याप्तिमाशङ्क्य परिहरतीत्युक्तमिति चेत, उच्यते; पूर्वत्र जन्मादिकारणत्वलक्षणस्य रुद्रादावतिव्याप्तिपरिहारः। अत्र त्वसम्भवपरिहार इति भेदात्। अत एव तत्र **न्यायविवरणे** रुद्रादेः सममेतल्लक्षणमित्युक्तम्। सुधायां च तत्रातिव्याप्तिमाशंक्य परिहरतीत्युक्तम्। अत्र तु शिवप्रभृतीनामेव कारणत्वमित्युक्तम्। टीकायां च तत्र कारणत्वस्य भगवदेकनिष्ठत्वाभावादिति पूर्वपक्षोपसंहारः। अत्र तु न विष्णोर्जगत्कारणत्वं सिध्यतीत्येवं पूर्वपक्षोपसहारः॥ यद्वा[1] शास्त्रयोनित्वाधिकरणे यत्पाशुपतादिस्मृतीनामप्रामाण्यमभिप्रेतं तस्यैवात्र प्रपञ्चनान्न गतार्थता । भाष्यकारीयपाशुपतादिस्मृत्यप्रामाण्यव्युत्पादनं तु "जन्माद्यस्य यतः" इति सूत्रानुसारेण प्रथमाधिकरणे "ब्रह्मशब्दश्च विष्णावेव' इत्यादिव्युत्पादनवदेतदधिकरणानुसारेण शिष्यहितार्थमिति द्रष्टव्यम्। **वेदप्रामाण्येनेति**। "जन्माद्यस्य यत" इत्यादि "एतेन सर्वे व्याख्याता" इत्यन्तसूत्रोपात्त "यतो वा इमानि भूतानि जायन्ते" "असद्वा इदमग्र आसीत्" इत्यादिवेदप्रामाण्येनेत्यर्थ.। तथा च तेनैवानन्तरसङ्गतिरप्युक्ता भवति। **युक्तं न वेति**। अत्र जगज्जन्मादिकर्तृत्वं किं विष्णोर्न युक्तमुत युक्तमिति चिन्ता। तदर्थं पाशुपतादिस्मृतिविरोधेन यतो वेत्यादिश्रुतिबाध उत श्रुतिविरोधेन स्मृतिबाध इति। तदर्थं स्मृतिः प्रबलोत श्रुतिर्वेति।

---

१. **यद्वेति**। शास्त्रयोनित्वनयाभिप्रेतपाशुपतादिस्मृत्यप्रामाण्यमिह प्रपञ्चितमिति, तादृशप्रपञ्चनाख्याधिकप्रयोजनसद्भावेन गतार्थतोद्भावनस्य नावकाश इति भावः।

तदर्थं पाशुपतादिस्मृतिप्रणेतृरुद्रादीनामाप्तत्वमुत श्रुत्यनुकूलपञ्चरात्रादिस्मृतिप्रणेतृविष्ण्वादीनामेवाप्तत्वमिति। तदर्थं रुद्राद्युक्तस्य सवाददर्शनं विष्ण्वाद्युक्तस्य तदभाव उत विष्ण्वाद्युक्तस्य सवाददर्शन रुद्राद्युक्तस्य तदभाव इति। **पाशुपतसांख्ययोगादिस्मृतिविरोधेनाप्रामाण्याख्यदोषप्रसङ्गादिति** ॥ अनेन स्मृतीना पाशुपताद्यागमानामनवकाशत्वेन तद्विरोधे श्रुतेरप्रामाण्याख्यदोषप्रसङ्ग इति सूत्राशयोजना सर्वज्ञाहीत्यादिभाष्येण दर्शितेत्युक्तं भवति। वेदप्रामाण्यवादिनामपि पूर्वपक्षित्वाभिप्रायेणेयं योजना। अत एव साख्यपाशुपतयोगादि इत्येवोक्तम्[1]। तदप्रामाण्यवादिनामपि पूर्वपक्षित्वे च श्रुति प्रमाणमिति शङ्काया तस्या अप्रमाणत्वादित्येव परिहारे वक्तव्ये "श्रुतेर्विष्णोरि"त्याद्युक्तपरिहारस्यासङ्गतत्वात्। सुधाया तु 'इतरेषा चानुपलब्धे" इति सामान्यतो निराकरणं समयाना कृतमित्युत्तरपादीयभाष्यानुरोधेन तेषामपि पूर्वपक्षित्वाभिप्रायेण शिवादीना जगत्कारणत्वाभावे पाशुपतादिस्मृतीनामवकाशाभावेनाप्रामाण्याख्यदोषप्रसङ्ग इति सौत्राक्षेपाशस्य विष्णोर्जगत्कारणत्वानङ्गीकारे पाशुपतादिभ्योऽन्यासा पञ्चरात्रादिस्मृतीनामवकाशान्तराभावेनाप्रामाण्याख्यदोषप्रसङ्गादिति परिहाराशस्य च योजना दर्शिता। अत एव सुधाया पाशुपतसाख्यबौद्धार्हतादिस्मृतिविरुद्धत्वादिति वेदाप्रामाण्यवादिबौद्धार्हतादिग्रहणम्। रुद्रादिवचनविरोधस्याप्रयोजकत्वमाशक्य परिहरति—**न च विरोध इति**। तस्यैवासिद्धि-
६० माशक्य परिहरति—**न च देशकालेति**। **अन्यार्थत्वमप्रामाण्यं वेति**। "औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति श्रुतिविरोधेन "औदुम्बरी वा सर्वा वेष्टयितव्या" इति स्मृतेर्भाट्टैरन्यार्थत्वस्य प्राभाकरैरप्रामाण्यस्य च उक्तत्वादिति भाव.। **विरोधे त्विति**। श्रुतिस्मृत्योर्विरोधेऽसति स्मृतिरनुमान स्वमूलभूतश्रुत्यनुमापिका। तयोर्विरोधेत्वपौरुषेयतया मूलानपेक्ष श्रुतिवचनमेव मान स्यादिति जैमिनिसूत्रार्थ। सौत्रानवकाशपदसूचितासेत्यनुव्याख्यानोक्तयुक्तिमाह—**स्मृतीनाममिति**। तदुपपादकत्वेन सर्वज्ञा हि रुद्रादय इति भाष्य व्याचष्टे—**रुद्रादीनामिति**। "पिपीलिकालिपिनिभा" इत्यनुव्याख्यान मनसि निधायाह—**श्रुतेश्चेति** ॥

---

१ **भाट्टैरिति**। औदुम्बरीस्पर्शश्रुति-सर्ववेष्टनस्मृतिविरोधे सति, स्मृतेरप्रामाण्य प्राभाकरैरन्यार्थता च भाट्टैरभ्युपेयत इति द्रष्टव्यम्।

नन्वेवं स्मृतीनामेव प्राबल्ये कथं सर्ववेष्टनस्मृते श्रुतिविरोधेन स्पर्शनार्थं द्व्यङ्गुलं हित्वा तदितरसर्ववेष्टनरूपार्थान्तरकल्पनमप्रामाण्यं वेत्यत आह— **क्वचिच्छ्रुतिविरोधेनेति।** "आप्तैः प्रत्यक्षतो दृष्ट्वा प्रोक्तमर्थम्" इत्यनुव्याख्यानं मनसि निधायाह—**रुद्रादिप्रत्यक्षस्यैवेति।** श्रुतेराधिक्यं सिध्यतीति भाष्यं सोपस्करं व्याचष्टे—**पञ्चरात्रादिस्मृत्यनुकूलत्वेनेति। विष्ण्वादिभिर्नितरां सर्वज्ञैरिति।** अनेन रुद्रादीनां सकाशात् विष्ण्वादीनामेव आप्तत्वमपि व्याख्यातं भवति। श्रुत्यनुसारित्वादिति **न्यायविवरणं** तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**कुत** इत्यादिना। सूत्राशाक्षराणि योजयन्नुपसंहरति—**अत इति॥**

नन्वयोग्याना प्रत्यक्षानुपलब्धेरभावनिश्चयायोगाद्वाच्ये कथं फलादीनां प्रत्यक्षतोऽनुपलब्धेरित्युक्तमित्यत आह—**प्रत्यक्षयोग्यत्वमिति।** पूर्वसूत्रसन्निधापितरुद्रादिजगत्कारणत्वाद्यतीन्द्रियस्येतरत्वप्रतियोगित्वेन विवक्षितत्वादिति भाव। अत एव प्रागदृष्टादितरेषामित्युक्तम्। **चशब्देन तस्या इति।** अनेनानुपलब्धेश्चेति सौत्र"च"शब्दसम्बन्ध उक्तो भवति। सौत्रातिदेशोपयुक्तामप्यधिकाशङ्कामाह—**नै तथापीति॥**

अत्राद्ये—विष्णोर्जगत्कारणत्वादौ स्मृतिविरोधमाशंक्य तत्परिहारोक्तिः। द्वितीये—आप्तोक्ताना पाशुपतादिस्मृतीना कथमप्रामाण्यमित्याशंकापरिहाराया- सोप्तत्वाभावसिद्ध्यर्थं तदुक्तार्थे संवादाभावोक्ति। तृतीये—योगादिस्मृत्युक्तार्थे द्वितीयसूत्रोक्तसंवादाभावातिदेशेनाप्तोक्तत्वनिरास इति सूत्रक्रम ॥ १ ॥

॥ इति स्मृत्यधिकरणम् ॥ १ ॥

---

१ **अनेनेति।** पञ्चरात्रादिप्रतिपादितार्थे श्रुतिसंवादसद्भावादन्यत्र शैवाद्यागमेषु तदभावादिति भाव।

२ **नेति।** योगस्मृतिप्रामाण्यसंभवादिति शङ्कते। तदुक्तफलोपलब्धेरिति।

## (२) ॥ नविलक्षणत्वाधिकरणम् ॥

## सू० ॥ ओं ॥ नविलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ओं ॥ ४ ॥

" स्मृतियुक्तिश्रुतिगुणयुक्तयो बहुयुक्तय " इत्यनुव्याख्यानानुसारेणाधिकरणोपाधिमाह— **युक्तिविरोधपरिहारादिति । तत्प्रामाण्यस्य च युक्तिविरोध इति** । अनेन 'इतरेषामनुपलब्धे' इत्युक्तसिद्धान्तन्यायेनात्र
1 पूर्वपक्षोत्थानादनन्तरसङ्गति सूचिता भवति । **प्रमाणं न वेति** । अत्र श्रुत्यादिप्रामाण्यात् विष्णोर्जगत्कारणत्व सिध्यतीति वाक्यसूचितश्रुत्यादिसमन्वयेनोक्तं विष्णो कारणत्वादि न युक्तमुत युक्तमिति प्रधानचिन्ता द्रष्टव्या । तदर्थं श्रुत्यादिकमप्रमाणमुत प्रमाणमिति । 'तदर्थं वृष्टिकाम कारीर्या यजेत' इत्यादि वेदवाक्य किं युक्तिविरुद्ध भवत्युत नेति । तदर्थं वेदाद्युक्तकारीर्याद्यनुष्ठानेऽपि वृष्ट्यादिफलानुपलब्धिर्वेदाद्यप्रामाण्यनिबन्धनोत कर्तृवैगुण्यादिनिबन्धनेति । तदर्थं वेदादिप्रामाण्य किं पाशुपतादिस्मृतिवत् फलसवादाधीनज्ञानमुत स्वत इति । तदर्थं वेदादेर्निर्दोषप्रमा न सम्भवत्युत सम्भवतीति । तदर्थं वेदापौरुषेयत्वादौ प्रमाणं नास्त्युतास्तीति । एव श्रुतेस्तदनुसारिस्मृतेश्च तदुक्तानुपलब्धेरप्रामाण्यमिति भाष्याभिप्रायमाह–**कारीर्येत्यादिना** । भाष्यगतै"व"शब्दार्थ पाशुपतादिस्मृतिवदिति । अनेन रुद्रादिस्मृतिसाम्यमिति **न्यायविवरणमपि** व्याख्यातं भवति । नैवमित्यादिभाष्यस्या"स्य न तथात्व"मिति सौत्रप्रतिज्ञाव्याख्यानरूपत्व दर्शयति । अस्य **श्रुतेरित्यादिना** । अनेनान्यस्मृतीस्तुक्त श्रुत्यनुसारिपञ्चरात्रादिस्मृतिस्तत्सन्निधापिता श्रुतिश्च सूत्रेऽस्येति परामृश्यते । " इतरेषा चानुपलब्धे. " इति सूत्रोक्तं " तथात्वम् " इत्यनेन परामृश्यत इत्युक्तम् भवति ।

---

१ तदिति । " वेदादिप्रामाण्यस्य " इति " मध्वविलास " पुस्तकपाठ ।

२. वृष्टिरिति । Text amended

३. अस्येति । श्रुतिप्रामाण्यमत्र समर्थ्यते । स्मृतिभ्यो विलक्षणत्वादिति हेतुना ।

" नित्यत्वात्पुरुषोद्भवैः ।
वर्जितं सर्वदोषैश्च कथं नो मानतां व्रजेत् ॥ "

**इत्यनुव्याख्यानानुसारेण** भाष्याभिप्रायमाह—**वाक्याप्रामाण्यमिति । प्रमाणानुकूलत्वादिति ।** अनेन भाष्ये " नित्यः " इत्यनन्तरम् " तदनुसारिणि च " इति पूरितं भवति । किन्तु साक्षिप्रत्यक्षसाम्यमेव निरपेक्षत्वादिति **न्यायविवरणानुसारेण** भाष्याभिप्रायमाह—**वेदादिप्रामाण्यस्येत्यादिना ॥**

ननु यथार्थज्ञानजनकत्वरूपवेदप्रामाण्यस्य ज्ञानादेव सिद्धिः कथमित्यत आह—**न हीति ।** करणानां तु ज्ञप्तौ स्वतस्त्वं नाङ्गीक्रियत इति सुधोक्तरीत्या करणप्रामाण्यस्य परतस्त्वपक्षे निर्दोषत्वतदनुसारित्वाभ्यामेव यथार्थज्ञानजनकत्वरूपप्रामाण्यानुमानं न संवादेनेत्यर्थः । तेषामपि ज्ञानजनकत्वं येन गृह्यते तत एव यथार्थज्ञानजनकत्वस्य तदीयस्य ग्राह्यत्वं स्वतस्त्वमिति सुधोक्तरीत्या स्वतस्त्वे तु निर्दोषतदनुसारिज्ञानजनकस्वरूपग्रहे यथार्थज्ञानजनकत्वरूपप्रामाण्योपलब्धौ संवादापेक्षा नास्तीत्यर्थः । **सापि न निश्शङ्केति ।** तथा च प्रामाण्याध्यवसायस्य निःशङ्कप्रवृत्तिं प्रत्येव हेतुत्वेन न व्यभिचार इति भावः । **क्वचिन्नोत्पद्यत एवेति ।**[1] व्यासङ्गकोटिस्मरणाभावादिनेति शेषः । [2]**द्वितीयो निरस्तप्राय इति ।** ज्ञानस्याबुभुत्सितग्राह्यतया तीव्रसंवेदनत्वेन ज्ञाते च तस्मिन् प्रामाण्याप्रामाण्यानुपलब्धौ नि शङ्कप्रवृत्तेः प्रामाण्याध्यवसायसाध्यत्वेन तदर्थं प्रामाण्यरूपविशेषजिज्ञासाध्रौव्ये तत एव व्यासङ्गकोटिस्मरणाद्यसम्भवेन शङ्काया आवश्यकत्वादिति भावः । [3]**बाधकवदुभयत्रापीति ।** यथा बाधकस्य प्रामाण्यशङ्कानिरासाप्रामाण्यज्ञापनयोर्व्यापारस्तथा संवादस्य । प्रामाण्यशङ्कानिरासप्रामाण्यज्ञापनयोर्व्यापारः किं न स्यादित्यर्थः । **अप्रामाण्यशङ्काशून्यस्येति ।** सुखादिज्ञाने अप्रामाण्यशङ्काशून्यस्य संवादाभावेऽपि प्रामाण्यस्यानुभूयमानत्वेन व्यतिरेकव्यभिचारान्न संवादस्य

---

१. **क्वचिदिति ।** " उत्पद्यत एव वा " इति " मध्वविलास " पुस्तकपाठः ।

२. **द्वितीय इति ।** Text corrected.

३. **बाधकवदिति ।** " विसंवादादिरूपबाधकस्य " इति भावदीपकारा. ।

प्रामाण्यज्ञापने व्यापार इत्यर्थ । **बाधकेन विनेति** । तथा चानन्यथासिद्धान्वयव्यतिरेकाभ्या बाधकस्याप्रामाण्यज्ञापने व्यापार इति भाव । प्रामाण्यस्यस्वतस्त्वे तत्सशयानुपपत्तेर्बाधकस्य सत्त्वात् कथमनुकूलतर्कशून्यत्वमित्यत आह—**सशयस्य दोषादेवेति** । **सशयदर्शनाच्चेति** । तथा चानुभवसिद्धतत्सशयोपपत्तिवदत्रापि तदुपपत्तिरिति भाव । **अनभ्यासदशायामपीति** । प्रत्यग्रोत्पन्नसुखादिस्थल इत्यर्थ । तथा च भागासिद्धो हेतुरिति भाव । **स्वतःप्रामाण्ये सूत्रसूचितामिति** । अनेन "तथा त्व" च स्वत प्रामाण्यलक्षणवैलक्षण्यम् "च" शब्दात्र चक्षुरिति श्रुतेरिति सूत्राशो भाष्येण व्याख्यात इत्युक्त भवति । **अनेनेति** नैव तदुक्तानुपलब्धेरप्रामाण्यमिति व्याख्याय नित्यत्वरूपविलक्षणत्व "च"शब्दादि व्याख्यानेनेत्यर्थ । "अभिचव" इत्यस्यार्थ सर्वत प्रकाशयेति । "वृष्ण" इत्यस्यार्थो अतिसमर्थयेति । **अनादिनिधनतयेति** । अन्यथा पुनरुक्ति स्यादिति भाव । **श्रुत्युपादानमिति** । स्वत प्रामाण्यनित्यत्वयो सिद्धौ वेद प्रामाण्यसिद्धि । तत्सिद्धौ च प्रमाणभूतवेदेन तत्सिद्धिरित्यन्योन्याश्रय इत्यर्थ । प्रकारान्तरेणान्योन्याश्रय परिहरति । **युक्तेश्चेति** । भाष्ये आप्त्यनिश्चयान्नित्यत्वापेक्षत्वाच्च मूलप्रमाणस्येति देवताधिकरणे वेदनित्यत्वेऽन्यथानवस्थितेरित्यत्र प्रामाण्यस्वतस्त्वे च युक्तेश्चोपन्यस्तत्वादित्यर्थ । तथा च युक्तिसिद्धार्थे श्रुते सवादित्वेनोपन्यासान्नान्योन्याश्रय इति भाव ॥

यद्वा वेदाप्रामाण्यवादिनोऽप्यत्र पूर्वपक्षित्वे त प्रत्याह—**युक्तेश्चेति** । तथा च त प्रत्युपन्यस्तयुक्त्यैव वेदे नित्यत्वादिप्रसाधन न श्रुत्येतिनान्योन्याश्रय प्रसङ्ग इति भाव । **योग्यानामिति** । फले इति शेष । तत्तत्कर्मवैगुण्यादि प्रतिबन्धकशून्याना चेति ग्राह्यम् । प्रतिबन्धकसत्त्वे योग्यानामपि फलादर्शनात् । अत एव भाष्यस्थाधिकारित्वनिर्वचनमेव करिष्यते । **तुशब्दः कर्तृविशेषद्योतक इति** । दृश्यते ह्यधिकारत इति स्मृत्यनुसारेण भाष्ये "तु"शब्दार्थतयाऽधिकारिणामित्युक्तम् । तथा चाधिकारिणामित्येतत्तोत्सूत्रितमिति भाव । अन्यो-

---

१ **तथा चेति** । वेदप्रामाण्यस्य युक्तिभि समयनादिति । भाव । "आपादनमात्रस्य क्रियमाणत्वादिति" तथा च वेदप्रामाण्यस्यैतदधिकरणपूर्वपक्षिणाऽङ्गीकृतत्वा अन्योन्याश्रय इति" फागियूरमठपुस्तकेऽधिक पाठो दृश्यते । रामचन्द्राचार्याणां पुस्तके च ।

पलक्षणमिति । अयोग्यत्वोपलक्षणमित्यर्थः । अत्राद्ये-स्वपक्षसाधनम् । द्वितीये—बाधकोद्धार इति सूत्रक्रमः ॥ २ ॥

॥ इति न विलक्षणत्वाधिकरणम् ॥ २ ॥

---

## (३) ॥ अभिमान्यधिकरणम् ॥

### सू०॥ ओं अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ओं ॥ ६ ॥

नन्विदमधिकरणं व्यर्थम्[1] । अतीताधिकरण एवोपलक्षणत्वेन सकलयुक्तिविरोधानां परिहृतत्वादिति चेत् , न ; 'तथापि मृज्जलादीनां बुद्धिवागादिवाचको दृष्टव्याप्तिविरुद्धत्वात्' इत्यनुव्याख्यानोक्तरीत्याभ्यधिकाशङ्कयैतदधिकरणोत्थानादित्याशयेनोक्तम्—अत्र पुनरिति । अनेनानन्तरसङ्गतिरपि लब्धेति ज्ञातव्यम् ॥

यद्वा न पूर्वाधिकरणे सकलयुक्तिविरोधानामुपलक्ष्यत्वम् किन्तु युक्तिमात्रविरोधपरिहारः पूर्वाधिकरणोपाधिः । दृढयुक्तिपरिहारोऽत्रोपाधिरिति न वैयर्थ्यम् । तदुक्तमनुव्यायाने—

"दृढयुक्तिविरोधे तु सर्वत्र न्याय ईदृश."

इति । युक्तिमात्रविरोधे निरस्ते[2] एव दृढयुक्तिविरोधनिरासावसर इत्येवमप्यनन्तरसङ्गतिरिति ज्ञातव्यम् । प्रमाणं न वेति । अत्र श्रुतिसमन्वयेन जगत्कारणत्वं विष्णोर्न युक्तमुत युक्तमिति प्रधानचिन्ता पूर्ववदेव द्रष्टव्या । तदर्थं वेदः किमप्रमाणमुत प्रमाणमिति । तदर्थं "मृदब्रवीत्" इत्यादिवेदः किं युक्त्यादिविरुद्ध उत नेति । तदर्थं मृदादिशब्दः किं जडपरः किं वाऽभिमानिचेतनपर इति । तदर्थमभिमानिचेतनाः किं न सन्त्युत सन्तीति । तदर्थमभिमन्यमानमृदा-

---

१. व्यर्थमिति । स्वतन्त्राधिकरणोपक्रमोपाध्यभावादिति शङ्कते ।

२. निरस्त इति । omission supplied.

द्यनुगताना विग्रहवतामभिमानिनामनुपलब्धि किं तदभावनिबन्धनोतान्तर्धानादिसामर्थ्यनिबन्धनेति । तदर्थं सामर्थ्यविशिष्टदेवतासत्त्वे प्रमाणं नास्त्युतास्तीति । "मृन्न वदती"त्यादिना मृदादीना वचनाद्यदृष्टि श्रुत्यप्रामाण्यकारणमिति न्यायविवरणमपि उक्ततात्पर्यं भवति । **युक्तेरेवाश्रयणीयत्वादिति** ॥

नन्वादिकालीनमृदादिपक्षीकारे सिद्धसाधनत्वाभावेऽपि तेषा "मृदब्रवीदि" त्यादिश्रुत्येकसमधिगम्यत्वेन धर्मिग्राहकमानबाधो जडत्वहेतोरसिद्धिश्चेति चेत्, न; आदिकालीनमृदादिस्वरूपपरेणा"ग्नेराप" इत्यादिवाक्यान्तरेण दृश्यमानकार्यलिङ्गेन वा धर्मिग्रहोपपत्ते । मृत्त्वादिना जडत्वानुमानाच्चेति भाव । **मृदाद्यभिमानिनीनां देवतानामेवेति** । भाष्ये मृदादीत्यादिपदानुरोधेनाभिमानिदेवतेत्येकवचनान्तप्रयोग समुदायविवक्षयेति भावेन बहुवचनान्तप्रयोग कृत । न तु सूत्रे विग्रहप्रदर्शनार्थम् । वक्ष्यमाणविरोधादिति ज्ञातव्यम् । तथा चाभिमानिदेवतापक्षीकारे हेतोरसिद्धि । अभिमन्यमानपक्षीकारे प्रकृतविरोध इति भाव । न युक्तिविरोधमात्रेण श्रुतेरन्यार्थत्व कल्प्यते । किन्तूपजीव्यप्रत्यक्षविरोधादित्यत आह—**न चोपजीव्येति** । आदिकालीनमृदादीनामेव श्रुत्या वक्तृत्वादिकमुच्यते । तेषाञ्च नास्मदादिप्रत्यक्षत्वमिति न प्रत्यक्षं श्रुत्युपजीव्यमिति प्रागेवोक्तमित्यर्थ । **अन्यार्थकल्पने मुख्यार्थलाभादिति** । "तदधीनत्वात्" इति न्यायेन मृदादिशब्दानामभिमन्यमानापेक्षयाभिमानिष्वेव मुख्यत्वेन मृदादिशब्दाना मुख्यार्थत्वलाभादित्यर्थ । अनेन चेतनविषयतामात्रेण प्रकृतविरोधशान्तावपि वस्तुस्थितिं ज्ञापयिष्यता सूत्रकारेण व्यपदेशस्त्विति "तु"शब्देन मुख्यवृत्ति सूचिता । तत्रोपपत्तिज्ञापनायाभिमानीति चोक्तम् । अन्यथा चेतनव्यपदेश इत्यवक्ष्यदिति सुधोक्तरीत्या सूत्रेऽभिमानिशब्दप्रयोगस्य विशेषार्थक"तु"शब्दस्य चाभिप्राय उक्तो भवति । उपलक्षणमेतत् । व्याप्तिपक्षधर्मतोपे-

---

१ **मृत्त्वेति** । एव हेतोरसिद्धिपरिहार इति भाव ।

२ **तथा चेति** । देवताना चेतनत्वादिति भाव ।

३ **प्रकृतेति** । "सिद्धसाधनम्" इति "भावदीप" कारा ।

४ **ज्ञापयिष्यतेति** । Text restored.

तत्वेन युक्तेर्निरवकाशत्वाच्चेत्यपि ग्राह्यम् । अनेनानुगतिश्चेति **विग्रहश्चेतीति** । P 8
"च"शब्दो न केवलमुक्तसमुच्चयार्थ., किन्तु अनुक्तविग्रहसमुच्चयार्थो वानुगतिशब्दविग्रहोपलक्षको वेत्युक्तं भवति । यद्यप्यत्र भाष्ये आकाङ्क्षानुसारेणानुगतिमादावुक्त्वा सामर्थ्यमनन्तर वक्तव्यम्; तथाप्यल्पाच्तरस्य पूर्वनिपातमनुसृत्य प्रवृत्त सूत्रमनुगच्छता भाष्यकृता क्रमो भग्न इति भावं ॥

ननु सूत्रेऽभिमानिनीना व्यपदेश इति विग्रहसम्भवात् क्वैकवचनमित्यत आह—**दृश्यते चेत्युत्तरसूत्रानुगुण्येनेति** । अभिमानिन्या व्यपदेश इति एकवचनान्तविग्रहस्य ग्राह्यत्वादित्यर्थ । उपलक्षणमेतत् । अभिमानिव्यपदेश इत्यभिमानिशब्दो ह्येकवचनान्त समस्त । व्यपदेशशब्दस्यैकवचनान्तत्वात् । न हि बहूनामेको व्यपदेश इति सम्भवतीति सुधोक्तमपि ज्ञापकमत्र ग्राह्यम् ॥

ननु "तासा सामर्थ्यम्" इति भाष्ये 'दृश्यते च" इति सूत्रे सामर्थ्यस्यैव, एकत्वमुच्यते न तु देवताया इति कथ तदत्र विग्रहज्ञापकमित्यत आह—**दृश्यन्ते मुनिभिरिति स्मृत्यानुकूल्यादिति** । स्मृतौ प्राक् देवताना शक्तीना च प्रकृतत्वान्मुनिभिश्च ता इति तच्छब्देन देवतानामपि परामर्शात् । अत एव ता **शक्तयो देवाश्चेति** वैक्ष्यते । तथा च तदनुसारेण तासा सामर्थ्यमिति भाष्ये देवता अपि विवक्षिता । अत एव **नाप्रामाणिकत्वमभिमानिदेवतानां तत्सामर्थ्यस्य चेति** वक्ष्यतीति भाव । भाष्यसमहद्भिरित्यस्य स्वारस्याय प्रकारान्तरेण योजयति—अथ वेत्यादिना । तासा चेत्यादिभाष्यमाकाङ्क्षाक्रमेण द्वेधा योजयित्वा इदानी यथाक्रममेव तद्योजयति—**अथ वेत्यादिना** । अपि तु वचनादिशक्तताया देवताया मृदादिशब्दवाच्यत्वद्योतिकैवेति **न्यायविवरणाभिप्रायमाह—न च वाच्यमित्यादिना** । द्योतिकैवेत्यवधारयता निर्दोषवाक्यप्रामाण्याऽदृष्टिसहितया मृदादीना वचनाद्यदृष्टे,

---

१ **भाव इति** । "सामर्थ्यमनुगतिश्च"इति भाष्यम् ।

२ **सामर्थ्यस्यैवेति** । Text reconstructed.

३ **वक्ष्यत इति** । "देवता शक्तयश्च' इति "मध्वविलास" पुस्तकपाठ ।

एवं कल्पकत्वं सूचितम्[1] । अन्यथा वेदाप्रामाण्येनैव वचनाद्यदृष्टेरूपपत्तावव-धारणायोगादित्यभिप्रेत्योक्तम्—**निर्दोषवाक्यस्याप्रामाण्याददृष्ट्या चेति** । अनेनानुव्याख्यानगता"दृष्टि"पदं निर्दोषवाक्याप्रामाण्याऽदृष्टिपरत्वेनापि व्याख्यातं भवति । सूत्रक्रमस्तु योजनाभेदेन टीकायामेव स्पष्ट ॥ ३ ॥

॥ इत्यभिमान्यधिकरणम् ॥ ३ ॥

---

## (४) ॥ असदधिकरणम् ॥

## सू०॥ ओं ॥ असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ ओं ॥ ८ ॥

अत्र पूर्वाधिकरणे दृढयुक्तिविरोधपरिहारेण जगज्जन्मादिकारणत्वप्रति-पादकवेदप्रामाण्ये समर्थिते **न्यायविवरणोक्तरीत्या** यदि "यतो वे"त्यादिवेद-प्रामाण्याद् ब्रह्मणो जगत्कारणत्वं तर्हि "असदेवेदमग्र आसीत्" इत्यादिवेदस्यापि प्रामाण्यात्तदुक्तयुक्त्याऽपि जगत्कारणत्वं स्यादित्याक्षेपोत्थानात् अनन्तरसङ्गतिरिति[2] ज्ञेयम् ॥

यद्वा प्रबलयुक्तिविरुद्धायाश्च श्रुते स्वार्थपरित्यागस्यातीताधिकरणे व्यव-स्थितत्वात् प्रागभावस्यापि स्वरूपसत्त्वादिनाऽ"सदेवे"त्यादिप्रयोगविषयत्वोपपत्ते-रिति सुधोक्तरीत्या यदि प्रबलयुक्तिविरोधेन "मृदब्रवीदि"त्यादिश्रुतेरन्यार्थत्व-कल्पना तर्हि श्रुतिर्सवादिप्रबलयुक्तिविरोधेन "सदेव सोम्य" "यतो वे"त्यादि श्रुतीनामप्यन्यार्थकत्वकल्पनेन ब्रह्मणो जगत्कारणत्वासिद्धिरित्याक्षेपोत्थानाद्वा अनन्तरसङ्गतिरिति ज्ञातव्या । **तद्विष्णोरिति** । अत्र विष्णोर्जगत्कारणत्वं न युक्तमुत युक्तमिति चिन्ता । तदर्थं यतो वेत्यादिश्रुतिः कारणं प्रलयेऽसद्भवितुर्महतीत्यादियुक्तिबाधिता उत नेति । तदर्थं युक्तिरसद्वेत्यादिश्रुसवादित्वेन यतो

---

१ **सूचितमिति ।** **Text reconstructed.** "अवधारणा तया" इति पर्णियूरमठ-पुस्तकपाठ । एवमेव रामचन्द्राचार्याणां पुस्तकेऽपि ।

२. **अनन्तरेति ।** "यतो वे"त्यादि श्रुतिबलेन ब्रह्मणो जगत्कारणत्वे "असदेव" इत्यादिश्रुतिबलेनाऽसतोऽपि तत्कारणत्वं स्यादिति सुलभ प्रत्यवस्थानमिति भावः ।

वेत्यादिश्रुतेः प्रबलोत नेति। तदर्थमसद्वेत्यादिश्रुतिरसत्कारणत्वपरोत नेति। तदर्थमसतः कारणत्वाङ्गीकारे प्रलयेऽसन्मात्रावशेषः किमापादयितुमशक्य उत शक्य इति। तदर्थमसन्मात्रावशेषस्याप्रामाणिकत्वप्रमाणविरुद्धत्वे न स्त उत स्त इति। तदर्थं तर्कः किं साधनबाधनक्षमो न भवत्युत भवतीति। एवं प्रधानादिपक्षेऽपि चिन्ता ऊह्या। "**असदेवेदमग्र आसीत्**" **इत्यादिश्रुत्या असतोऽपि कारणत्वोक्तेरिति**। अनेनासतोऽपि स्रष्टृत्वं श्रूयत इति **न्यायविवरण**मपि व्याख्यातम्। अत्र भाष्यन्यायविरणटीकाश्रुतिसूत्रगतासच्छब्दार्थतया शून्यमभिप्रेतम्; न तु प्रागभावः। भाष्ये श्रुतिप्राप्तमेवासन्मतमत्र निषिध्यते। समयस्योपरि निषेधादित्युक्तेः। न हि प्रागभावकर्तृत्वप्रापकः समयोऽस्ति। टीकायामपि न हि शशविषाणादीनां किञ्चित्प्रति कारणत्वं सम्भवतीत्याद्युक्तेश्च। सुधायां तु।

"अभावस्य च भावोऽपि धर्मोऽथापि हि धर्मिणः"

इत्याद्यनुव्याख्यानानुसारेण श्रुतिसूत्रगतऽसच्छब्दस्य प्रागभावपरत्वमभ्युपेत्य महाप्रलये उत्पत्स्यमानः प्रागभावोऽवश्यमङ्गीकरणीय इत्याद्युक्तम्। एवञ्च श्रुतिसूत्रयोरनेकार्थत्वादेकैकार्थमभ्युपेत्य प्रवृत्तयोर्भाष्यानुव्याख्यानयोस्तट्टीकयोश्च न विरोधः[1]॥

नन्वेव[2]"मेतेने"ति सूत्रस्या"कस्मादि"ति श्रुतिप्राप्तासन्मतनिराकरणपरत्वेन पौनरुक्त्यादिप्राप्तिरिति चेत्, न; अकस्मादिति श्रुतेर्निष्कारणकत्वाङ्गीकारात्। भाष्ये अकर्तृत्वेत्युक्तेः टीकायां निष्कारणत्वादित्युक्तेश्च। अत एव सुधायां भाष्यदिशा निष्कारणैव जगन्निराशङ्कितेति न पौनरुक्त्यमित्युक्तम्। न चैवम्

"तन्मनोऽकुरुतेत्यादेरसतो मनसो जनिः।
निवारिता तु पूर्वत्र ह्यकस्मादिति तद्विना॥"

---

१. न विरोध इति। "असदि"ति क्वचिच्छून्यस्य परामर्शः। क्वचित्प्रागभावस्येति स्फुरति विरोध। श्रुतिसूत्रयोरनेकार्थसद्भावादेकैकमयस्यैकैकार्थावलम्बनेन प्रवृत्तिरिति तद्विरोधस्य परिहार इति द्रष्टव्यम्।

२. नन्विति। पुनरुक्तिदोषपरिहार.।

इत्यनुव्याख्यानेन पूर्वमभावस्य जगत्कारणत्व निराकृतम्, इदानीं तु शून्यस्येति[1] सुधया च विरोध । तयोरकस्मादिति श्रुते शून्यकारणत्वपरत्वेन प्रवृत्तेरिति वाच्यम् । अकस्मादिति श्रुतेरपि नानार्थत्वेन भाष्यानुव्याख्यानयोर्विरोधाभावादिति । तस्येति । नास्तीति प्रतिषेधबुद्धिविषयत्वस्य प्रतियोगित्वादिना घटादावपि सत्त्वेऽपि कारणत्वराहित्याभावाद्व्यभिचार स्यादित्यत उक्तम् स्वरूपत एवेति । [2]देशकालाद्यसम्बन्धत्वेनेत्यर्थ । न ह्यत्यन्तासच्छशविषाणादिक प्रामाणिकघटपटादिदेशकालादिसम्बन्धेन प्रतियोगितया प्रतिषेध बुद्धिविषयो भवतीति भाव । स्वरूपत एव प्रतिषेधबुद्धिविषयत्व प्रागभावादावप्यस्तीति व्यभिचार स्यादित्यत उक्तम्—अभावधर्मात्मतामन्तरेणेति । अभावस्तु अभावत्वादिधर्मात्मकत्वेनैव प्रतिषेधबुद्धिविषयो न तदन्तरेण, शशविषाणादिक तु नाभावादिवत्तया तादृशबुद्धिविषय इत्यर्थ । एवञ्च प्रतिषेधमात्रत्वादित्येतत्केवल प्रतिषेधो यस्य न तु घटादिवत् केनापि रूपेण सत्त्वं तत्प्रतिषेधमात्रम् । तस्य भाव प्रतिषेधमात्रत्वं तत्त्वादिति व्याख्यात भवतीति भाव । भाष्ये असत कारणत्वादेरुक्त्येति विग्रहमभिप्रेत्याह—कारणत्वप्रलयस्थितत्वाभिधायकश्रुत्येति । कारण प्रलयेऽसद्भवितुमर्हतीति उभयसम्प्रतिपन्ने जगत्कारणेऽसत्त्वब्रह्मत्वाभ्या विप्रतिपत्तौ पूर्वपक्षिणा असत्त्व साधयतीयमित्येव प्रयोग प्रदर्शित । अनेन ।

" असत्कार्यं यथादृष्ट वन्तुत्वात्कारण तथा ॥ "

इत्यनुव्याख्यान कारणस्य शून्यत्वसाधकप्रयोगदर्शनपरतया व्याख्यातं भवति । सुधाया तु परिशेषेण प्रागभावस्याकर्तृत्वसिद्ध्यर्थं कारणतया सिद्धान्त्यभिमतेश्वरादीना प्रलये सत्त्वसाधकप्रयोगप्रदर्शनपरतया व्याख्यातमिति बोद्धव्यम् । अर्थान्तर इति । शून्यस्य कारणत्वादावित्यर्थ । पञ्चीभ्रम वारयति—असतः सकाशादिति । सूत्रे " अपीति"शब्द प्रलयवाचक । तदिति पूर्वप्रकृतासत्परामर्शकम् । अवधारणार्थकमात्रशब्दशिरस्कम् । वदिति

---

१ शून्यस्येति । Omission supplied

२ देशेति । देशकालादिसम्बन्धरहितमसत् स्वरूपत एवाऽसदिति भाव॰ ।

मतुप्। तदन्तश्च भावप्रधानमित्यभिप्रेत्य प्रवृत्तं प्रलय इति भाष्यं व्याचष्टे—**प्रलयेऽसन्मात्रावशेष** इति। अवधारणार्थकसौत्र"तु"शब्दस्य प्रमाणप्राबल्यप्रदर्शकतया दृष्टान्तभावादेवेति भाष्ये सम्बन्धो दर्शितः। प्रमाणप्राबल्यस्य प्रमेयावधारणहेतुत्वात् स्वयं पदार्थसत्त्वस्यैवेत्युक्तम्। **परम्परयेति**। ईश्वरादिकं [1]प्रलयेऽसद्भवितुमर्हति भावत्वान्नष्टभाववदिति परम्परयेत्यर्थः। प्रलयः सर्वासत्ववान् प्रलयकालत्वात्, व्यतिरेकेण स्थितिकालवदिति व्यतिरेकित्वान्न दृष्टान्ताभावो दोष इत्यत आह—**व्यतिरेक** इति। यत्र सर्वासत्त्वाभावः सर्वसत्त्वं तत्र प्रलयकालत्वभाव इति व्यतिरेके एकस्मिन् काले सर्वसत्त्वापत्तिरूपातिप्रसङ्ग [2] इत्यर्थः॥

यद्वा स्थितिकाल अतीतानागतसकलपदार्थोपेतः स्थितिकालत्वात् व्यतिरेकेण प्रलयकालवत् इत्यादिव्यतिरेकिप्रयोगसम्भवादतिप्रसङ्ग इत्यर्थः। **एतेनेति**। ईश्वरादिकं स्थितिकालेऽप्यसद् भवितुमर्हति भावत्वात्, तदानीमविद्यमानघटादिवत् इत्यतिप्रसङ्गेनेत्यर्थः॥

यद्वा सर्वे भावाः प्रलये असन्तः भावत्वादिति परम्परयेत्यस्यार्थः। **एतेनेत्यस्य** तूक्तानुमाने दृष्टान्ताभावेन व्यतिरेके चातिप्रसङ्ग इत्यनेन चेत्यर्थः। **आगमप्रामाण्यानभ्युपगमादिति**। आगमप्रामाण्यं प्रसाध्य तेन मोक्षः साध्यत इति चेत्। न; आगमप्रामाण्यस्यापि तर्केणैव साध्यत्वादिति भावः। [3]**विरुद्धाविति**। परस्परमित्यर्थः। **उभावपीति**। किन्त्वेकं प्रामाणिकमपरमप्रामाणिकमित्यर्थः। तर्हि विप्रतिपत्त्योत्पत्तिः सतो भवितुमर्हतीति प्रकृततर्क एवाप्रामाणिक. प्रतितर्कबाध्योऽस्त्वित्यत आह—**प्रकृततर्कश्चेति**। P 85

---

१. **प्रलय इति**। भावत्वहेतुना नष्टभावदृष्टान्तेन साधनात् परम्परयेति भावः। प्रलयस्य साक्षात्प्रत्यक्षीकरणाभावादपि।

२. **अतिप्रसङ्ग इति**। यत्र प्रलयकालत्वम् तत्र सर्वाऽसत्वं। यत्र सर्वाऽसत्वाभावस्तत्र प्रलयकालत्वाभाव इति व्यतिरेकसाधने, एककालावच्छेदेन सर्वसत्त्वापत्तिरित्यतिप्रसङ्गो ज्ञेयः।

३. **विरुद्धाविति**। "विरुद्धतर्कौ तूभावपीति" 'मध्वविलास' पुस्तकपाठः।

एतेनेत्यतिदेशप्रयोजकाभ्यधिकाशङ्कामाह—**मास्त्वित्यादिना** । **श्रुतिमूलत्वादिति** । जीवादीना प्रतिषेधमात्रत्वाभावेनोक्तविरोधाभावाच्चेति ज्ञेयम् । भाष्ये अवशिष्टा इत्येवोक्ते ब्रह्मकारणत्ववादोऽपि प्राप्नोति । तदर्थमपरिग्रहाविरुद्धसिद्धान्तौ इत्युक्तम् । तन्मात्रे तूक्ते असत्कारणत्ववादोऽपि गृह्येत । ततश्च पुनरुक्तरतिदेशानुपपत्तिश्च स्यात् । अतोऽवशिष्टा इत्युक्तमिति ज्ञातव्यम् । **तृतीयानुप्रवेशादीति** । अत्रादिपदेनैतत्पादान्तर्भावग्रहणम् । अन्येष्वपि कार्येष्विति जीवकर्तृकत्वे दृष्टान्तत्वेन पराभिमतेषु घटादिष्वित्यर्थ । **घटादीनां जीवकर्तृकत्वाभाव** इति । यथा दुःखादिषु जीवस्याकर्तृकत्वमेवमन्येषु घटादिष्वकर्तृत्वमित्युक्ते घटादीना सर्वात्मना जीवकर्तृत्व निषिद्ध स्यात् । ततश्च महदादीनामचेतनकर्तृकत्वनिषेधार्थं विवक्षिते महदादिकं चेतनकर्तृकं कार्यत्वादिति अनुमाने घटादीना दृष्टान्तत्वं न स्यात् । अस्वातन्त्र्यमित्युक्तौ तु जीवस्य घटादौ पराधीनकर्तृत्वानिषेधेन तस्मिन्ननुमाने घटादीना दृष्टान्तत्व सम्भव इत्यर्थ । **नन्वेवं चेदिति** । अनेन सोऽसच्छब्दो ब्रह्मशब्दवदेव ब्रह्मवाचक इति श्रुतिसाम्यमिति **न्यायनिरणम**प्यवतारितं ज्ञेयम् ॥

अत्राद्ये—असद्वेत्यादिश्रुतिसवादियुक्त्या शून्यस्य जगत्कारणत्वमाशङ्क्य तत्र युक्तिविरोधोक्ति । द्वितीये—शून्यस्य जगत्कारणत्वाङ्गीकारे प्रलये सर्वासत्त्वप्रसङ्गरूपबाधकोक्ति । तृतीये—तस्यानिष्टत्वप्रदर्शनार्थं तदङ्गीकारस्य प्रामाणिकपरित्यागरूपबाधकत्वोक्ति । चतुर्थे—तस्यैवाऽप्रामाणिकस्वीकाररूपत्वोक्ति । पञ्चमे—तृतीयचतुर्थाभ्यामुक्तस्य तर्कस्य साधनबाधनाक्षमत्वमाशङ्क्य तत्परिहारोक्ति । षष्ठे—जीवादीना जगत्कर्तृत्वादिपक्षेषु तृतीयचतुर्थसूत्रोक्तसाधकाभावबाधकयोरतिदेश इति सूत्रक्रम ॥ ४ ॥

॥ इत्यसदधिकरणम् ॥ ४ ॥

---

१ सिद्धान्त इति । ब्रह्मनिमित्तकारणत्ववाद विरुद्धसिद्धान्त इति भाव ।

## (५) ॥ भोक्त्रापत्त्यधिकरणम् ॥

**सू० ॥ ओं ॥ भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत् ॥ ओं ॥ १४ ॥**

" श्रुतिगुणयुक्तयः " इत्यनुव्याख्याने युक्तीनां श्रुत्युपसर्जनत्वरूप-श्रुतिगुणत्वं श्रुतिसंवादित्वेन श्रुतिसिद्धलिङ्गकत्वेन चाभिप्रेतम् । तथा च तेनैवाधिकरणद्वयोपाधिकथनमित्यभिप्रेत्य सुधायामतीताधिकरणे ब्रह्मणो जगज्जन्मादिकारणत्वे श्रुतिसंवादित्वेन प्रबलयुक्त्या विरोधः परिहृतः । इदानीं तु श्रुतिसिद्धलिङ्गत्वेन प्रबलया युक्त्या विरोधः परिह्रियत इत्यधिकरणोपाधिः पूर्वेणास्य गतार्थतापरिहारायोक्तः । तदभिप्रायेणाऽऽह—**अत्र पुनरिति ।** अनन्तरसङ्गतिस्तु पूर्वसूत्रे[1] एतेनेत्यतिदेशेन 'जीवाद्भवन्ति भूतानि' इति श्रुतिप्राप्त-जीवकर्तृत्वपक्षनिरासो न युज्यते । जीवब्रह्मणोरभेदेन जीवस्य जगत्कर्तृत्वाभावे तदभिन्नस्य ब्रह्मणस्तन्न स्यात् । ब्रह्मणस्तदङ्गीकारे तदभिन्नजीवस्यापि तत्स्यात्, इत्युभयथापि न ब्रह्मण एव जगत्कर्तृत्वमित्याक्षेपोत्थानादिति ज्ञातव्यम् । **परमात्मन इति ।** अत्र ब्रह्मण एव परमार्थतो जगत्कर्तृत्वमयुक्तमुत युक्तमिति चिन्ता । तदर्थं ब्रह्मणो जीवाभिन्नत्वरूपो हेतुः किं सिद्ध उतासिद्ध इति । तदर्थम् " परेऽव्यये सर्व एकीभवन्ति " इत्यादिश्रुतिः किं स्वरूपैक्यरूपमुख्यार्था उत स्थानैक्यादिरूपोपचरितार्थेति । तदर्थमेकीभवन्तीत्यादिश्रुतेरुपचरितार्थत्वे साधकं मुख्यार्थत्वे बाधकञ्च नास्त्युतास्तीति । **उभयगतधर्मपरित्यागेनेति ।**[2] जीवस्यासर्वकर्तृत्वादित्यागेनेश्वरगतसर्वकर्तृत्वादिसालक्षण्यग्रहणेनेत्यर्थः ।[3] **सर्वथेति ।** अत्राद्ये पक्षे—अतिव्याप्तेः, द्वितीये—असम्भवादिति भावः । सूत्रे भोक्तुरापत्तेरिति विग्रहः । भोक्तुरित्यनन्तरं मोक्षपरत्वेत्यध्याहारः । आपत्तेरित्यनन्तरमुक्तेरिति चाध्याहारः । अन्यथा साध्याविशिष्टत्वात् इत्यभिप्रेत्य कर्माणी-

---

1 **पूर्वसूत्र इति** पूर्वाधिकरणान्तिमसूत्र इति यावत् । अथवा " भोक्त्रापत्ति" सूत्राऽव्यवहितपूर्वसूत्र इति वा ।

२ **उभयेति** । " विरुद्धधर्म " इति " मध्वविलास "पुस्तकपाठः ।

३. **सालक्षण्येति ।** ईश्वरसालक्षण्यम् ईश्वरगतसर्वकर्तृत्वादित्यागेन जीवसालक्षण्येति पाठेन भाव्यम् । एवमेव काणियूरश्रीपादपुस्तके रामचन्द्राचार्यपुस्तके च ।

त्यादिभाष्यं व्याचष्टे—**कर्माणीत्यादिना**। भाष्ये परेत्येतद्भावप्रधानमित्यभिप्रेत्य परमात्मत्वेत्युक्तम्। अनेन

"कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति"

इति श्रुतेर्नैक्यमिति **न्यायविवरणं** नञ्परित्यागेन व्याख्यातं भवति। मुक्तजीवस्य आनन्दादेरिव ज्ञानेन प्राक् विद्यमानस्य सर्वकर्तृत्वस्याभिव्यक्तिसम्भवे ईश्वरसालक्षण्यात् तदभिन्नस्य सर्वकर्तृत्वनिर्वाहः सम्भवतीत्यभिप्रेत्य शङ्कते—**मुक्तजीवाभिन्नस्यापीति**॥

"स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतेष्वपि॥
मुक्तानां नैव कामः स्यात्"॥

इति स्मृतिविरोधेन मुक्तस्य सर्वकर्तृत्वप्राप्त्यसम्भव इत्यभिप्रेत्य **कथंचिदित्युक्तम्**। यद्वा मुक्तजीवस्य निर्धर्मकत्वेनासर्वकर्तृत्वादिविरुद्धधर्माभावात् तदभिन्नस्येश्वरस्य सर्वकर्तृत्वनिर्वाहः कथं सम्भवतीत्याशयेन शङ्कते—**मुक्तजीवाभिन्नस्येति**। विरुद्धधर्माभावेऽपि निर्धर्मकाभिन्नस्य सर्वकर्तृत्वरूपधर्मनिर्वाहासम्भवात् कथञ्चिदित्युक्तम्। मुक्तावैक्येऽपि संसारे भेद एवास्तु। "च्वि"-प्रत्ययस्वारस्यादित्यत आह—**न हीति**। संसारे ब्रह्मणो भिन्नं जीवजातं मुक्तौ ब्रह्माभिन्नतां यातीति हि यस्मान्न युक्तमित्यर्थः। अनेनान्यस्य संसारे ब्रह्मणो अन्यस्यान्यत्वं मुक्तौ स्वान्यब्रह्मत्वं हि यस्मान्न युज्यत इति अप्रयोजकत्वशङ्कापरिहारकविपक्षबाधकतर्कप्रदर्शनपरतया भाष्यं व्याख्यातं भवति। तर्कमूलभूतव्याप्तिप्रदर्शनपरत्वेनापि भाष्यं व्याचष्टे—**न हीति**। अन्येनान्यस्य घटाद्यन्यस्य पटादेरन्यत्वं घटादित्वं न हि युज्यत इति व्याख्यातं भवति। न चैवम् **"च्वि"**-प्रत्ययानुपपत्तिः; प्रतीत्यपेक्षया तदुपपत्तेः। प्राक् भिन्नतया दृष्टो जीवो ब्रह्मणः, अथेदानीं मुक्तावभिन्नतया दृश्यत इति एकीभवन्तीत्युच्यत इति पूर्वपक्ष्यभिप्राय इति भाव[1]। एवं भाष्येऽन्यस्यान्यत्वाभावस्य पूर्वपक्षयुक्तित्वोक्तावपि **अनुव्याख्याने** तस्य "नान्यदन्यत्वमापन्नम्" इत्यादिना सिद्धान्तयुक्तित्वोक्तिर्न विरुद्धा। भेदप्रतीतेर्बाधकाभावेन भ्रमत्वासम्भवेन प्रमात्वेऽङ्गीकार्ये जीवो

---

१. वाक्त इति। Text reconstructed.

न कदाचिद् ब्रह्माभिन्नतया प्रमितिविषयस्ततो अत्यन्तभिन्नतया प्रमितत्वादित्यनुमानविरोधेन प्रतीत्यपेक्षयापि "च्वि"प्रत्ययोपपत्त्यसम्भवात् तत्त्वारस्याय संसारदशायां जीवस्यावश्यं ब्रह्मभेदे वक्तव्ये जीवो न कालान्तरेऽपि ब्रह्मणैक्यमापत्स्यते। प्राक् ततो भिन्नत्वात्। यः कदाचिद्यतोऽत्यन्तं भिद्यते नासौ कदाचिदैक्यमापद्यते। यथा घटः पटो नेत्यनुमानविरोधान्मुक्तौ तस्य तदभेदानुपपत्तिरित्याशयेनानुव्याख्यानप्रवृत्तेः। जीवेशयोरभेदाभावादिति। अनेन P. 8
भेदापादकमेवैतन्न्यायविवरणमप्युक्ततात्पर्यकं भवति। स्थानैक्याद्यालम्बनत्वेनेति। आदिपदेन मत्यैक्यं ग्राह्यम्। नलैक्योक्तिवदिति स्थानैक्याभिप्रायेण। उभयानुगुणं तु निदर्शन"मेकीभूता तु सा सेना पाण्डवानभ्यवर्तते"तिवदिति न्यायविवरणोक्तं द्रष्टव्यम्। अनेनैकीभावशब्दस्तु सान्निध्येऽपि भवतीति न्यायविवरणमप्युक्ततात्पर्यकं भवति। भाष्योदाहृतश्रुतिभागेन जीवब्रह्मभेदप्रतिपादकश्रुतीनामुपचरितार्थत्वानुक्तेराह—एवं मुनेरिति। एवं विजानतो मुनेर्विजानतां मुनीनामात्माऽधिपतिर्हिरण्यगर्भोऽपि मुक्तः परमात्मानं प्राप्य तादृगेव भवति। किमुतान्य इत्यर्थः। तथा च तत्त्वमसीत्यादिजीवब्रह्मैक्योक्तिः सादृश्याभेदलक्षणोपचरितार्थेति भाव ॥

"उदकं तूदके सिक्तं मिश्रमेव यथा भवेत्" ॥

इति स्मृत्यनुसारेण तादृगेव भवतीति एकस्थानस्थत्वस्याप्युपलक्षणम्। ततश्चैवमिति दार्ष्टान्तिकभागस्यैकस्थानत्वप्रतिपादकत्वमपीति प्रकृतोपयोग इति ज्ञातव्यम्। अत एव पूर्वमुपचरितार्थकल्पनमिति सामान्येनोक्तम्। अनेन न्यायविवरणे एवं मुनेरिति वाक्यशेषोदाहरणप्रयोजनमुक्तं भवति। एतेनेति। वाह्यानुपपत्तिमुक्त्वा निरञ्जन इत्यादिन्यायविवरणोक्तान्तरानुपपत्तिमप्याह—निरञ्जन इति। तादात्म्यपदमैक्यपरमित्यङ्गीकृत्याह—इत्युक्तोऽपीति। तथा च न व्याहतिरिति भावः। मुक्तोऽपीति। एतत्तादात्म्यं प्राप्तोऽपीत्यर्थः। अत्र परमात्मनेत्येतत्तत्प्रसादेनेत्यर्थकमिति बोध्यम्। एतदिति। नासौ भवती-

१. उभयानुगुणमिति। स्थानैक्यमत्यैक्योभयानुगुणमिति भाव ।

१. अत्रेति। "परमात्मना" इत्यस्य परमात्मप्रसादेनेत्यर्थकरणान्न जीवपरमात्मस्वरूपैक्यमिति बोद्धव्यम्।

त्यादिकम्। **वर्तमाननिषेधादिति**। नाश्नुवन्तीति वर्तमाननिषेधादित्यर्थः। **युक्तिविरोधपरिहारेऽपीति**। प्रथमातिक्रमे च कारणाभावादिति भावः।

"भोक्तृत्वापत्तित इति यन्मतं तत्कुतो हरिः।
भोक्त्रापत्तेरिति प्राह"।

इत्यनुव्याख्यानं मनसि निधायाऽऽह—**भोक्तृत्वापत्तेरिति** ॥ ५ ॥

॥ इति भोक्त्रापत्त्यधिकरणम् ॥ ५ ॥

---

## (६) ॥ तदनन्यत्वाधिकरणम् ॥

## सू०॥ ओं ॥ तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ ओं ॥ १५ ॥

**युक्तिविरोधपरिहारादिति**। "बहुयुक्तयः" इत्यनुव्याख्यानानुसारेण बाहुल्यलक्षणबलवद्युक्तिविरोधपरिहारायेदमधिकरणमारभ्यत इति सुधायामेवाधिकरणोपाधेरुक्तत्वेनागतार्थता। यदि लोकानुसारेण[1] श्रुत्युक्तजीवब्रह्मैक्यस्य भ्यानैवयादिरूपत्वं तर्हि लोकानुसारादेव "यतो वे"त्यादिश्रुत्युक्तेश्वरकर्तृकसृष्टेरपि स्वतन्त्रसाधनसापेक्षत्वं स्यादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति ज्ञातव्यम्। अत एव स्वतन्त्रबहुसाधना सृष्टिर्लोके दृष्टेत्युक्तम्। **किमिति**। अत्रेश्वरकर्तृकमहदादिसृष्टिः किं कर्तृव्यतिरिक्तस्वतन्त्रसाधनसापेक्षोत तन्निरपेक्षेति चिन्ता। तदर्थं तन्निरपेक्षत्वे युक्तिविरोधः प्राप्नोति उत नेति। तदर्थं सृष्टित्वादिरूपा युक्तिः किं श्रुतियुक्तिविरुद्धा न भवत्युत भवतीति। तदर्थं "किं स्विदासीदि"ति श्रौतः "किं"शब्दः किंप्रश्नार्थ उत आक्षेपार्थ इति। तदर्थं स्वतन्त्रसाधनपरोत परतन्त्रसाधनपरेति। तदर्थं परतन्त्रसाधनपरत्वेऽपि अद्यादीनां स्वरूपनिषेधपरोत स्वातन्त्र्यादितद्धर्मनिषेधपरेति। तदर्थं जगदुपादानादिसाधनान्तरसद्भावे तस्य परमात्मतन्त्रत्वे च प्रमाणं नास्त्युतास्तीति। **निःप्रतिपन्ना सृष्टिरिति**। अनेन लौकिकसर्वकार्यानुसारेणाकर्तृत्वं सर्वानुसार इति **न्यायविवरणं** व्याख्यातं

---

1. **लोकानुसारेणेति**। वस्तुतस्तु प्रमाणविरोधेनैव जीवपरैक्यवाक्यानां प्रतीतार्थात् प्रच्यावनमिति ज्ञेयम्। पूर्वपक्षी परं लोकानुसारेणेति शङ्कते।

भवति। स्वतन्त्रसाधनस्येति सूत्रे शेषोक्तिरियम्। स्वतन्त्रसाधनमन्यदङ्गीकृत्य तस्य ब्रह्माभेद उच्यत इत्यन्यथाप्रतीतिनिरासार्थं भाष्यं सूत्रतात्पर्यकथनपरत्वेन योजयति—**किमुक्तं भवतीति**; स्वरूपसामर्थ्यादेव। न तु साधनान्तरापेक्षयेत्यर्थ। एवञ्च स्वतन्त्रकारणस्य तदनन्यत्वमित्युक्ते स्वतन्त्र कारण तदेव नान्यदिति लभ्यत इति सूत्रभाष्ययोरेकार्थत्वमिति भाव। अनेन तद्वैलक्षण्येन सर्वकर्तुर्विलक्षणशक्तित्वमेवेति **न्यायविवरणांशस्यापि** तात्पर्यमुक्त भवति। **यत इति**। उपलक्षणमेतत्। एष सर्वेश्वर इति **न्यायविवरणोदाहृतश्रुतिरपि** द्रष्टव्या। अनेन विलक्षणशक्तित्वमेव सर्वश्रुत्यनुसारीत्यंशोऽपि व्याख्यात। **अधिष्ठानादिसाधनाद्याक्षेपः क्रियत इति**। न चैवम् आरम्भणाद्याक्षेपशब्दादिभ्य इति सूत्रे निर्देश स्यादिति वाच्यम्, आरम्भणशब्देनाधिष्ठानादिसाधनजातमुपलभ्यते। तेन च तदाक्षेपो लभ्यत इति लक्षितलक्षणयास्यैवार्थस्य विवक्षितत्वादिति भाव। यद्यपि 'साधकतम करणम्' इति स्मरणेन शब्दादप्यर्थप्राधान्यस्य बलवत्त्वादारम्भणशब्द सूत्रे उपात्त। तथापि श्रौतनिर्देशानुसारेणाधिष्ठानाद्याक्षेप इत्युक्तम्। **विपर्यये पर्यवसानादिति**। नन्वेव सति किंस्विदिति श्रुतेरधिष्ठानादिकारणान्तराभावप्रतिपादकत्वात् कथ स्वतन्त्रकारणस्य ब्रह्मानन्यत्वे प्रमाणत्वेन तदुपन्यास इति चेत्, न, अभिप्रायसद्भावात्। "सत्त्वाच्चावरस्य" इत्यादिना ब्रह्मातिरिक्तकारणसद्भावो हि वक्ष्यते। अनया च श्रुत्या तदभावोऽवगम्यत इत्यर्थात् स्वतन्त्रकारणाभाव एव सिध्यतीति। अत एव वक्ष्यति—साधनाद्याक्षेपस्तत्सद्भावोक्त्यन्यथानुपपत्तिश्चास्य समाधानमिति। **यद्धित्युक्तमिति**। न चैवमपि महदादिसृष्टेरीश्वरतज्ज्ञानेच्छादिस्वतन्त्रबहुसाधनसाध्यत्वे पुन[2] सिद्धसाधनतैवेति वाच्यम्, कर्तृव्यतिरिक्तस्वतन्त्रसाधनजन्यत्वस्य विवक्षितत्वात्। अत[3] एव प्रागेव साध्यनिर्देश कृत। ईश्वरज्ञानेच्छादीना तु तत्कर्तृत्वान्तर्गतत्वेन

---

१ **निरासायेति**। सृष्टिकरणे स्वतन्त्रसाधनान्तरमुररीकृत्य तस्य ब्रह्मणाऽभेद उच्यत इति विपरीतप्रतीतिनिरासायेति भाव।

२ **पुनरिति**। सिद्धसाधनतादवस्थ्यमिति भाव।

३ **अत इति**। Text reconstructed

तदनतिरिक्तत्वेन न तदादाय दोषैतादवस्थ्यमिति भाव । तदुक्तं **कर्मनिर्णय-टीकायाम्**—कर्तृत्वञ्च कार्यकारणं क्रियाफलाभिज्ञानतदिच्छाप्रयत्नपूर्वक स्पन्द । तत सर्वकर्तेत्युक्तेसर्वज्ञ सत्यकाम सत्यसङ्कल्प समस्तशक्तिसमन्वित एवोक्तो भवतीति । "वि" इत्युपसर्गाद् बभूवेति शेषोक्ति । **कतमदासीदिति** । किमासीदित्यर्थ । "कथेत्य" स्वार्थे कथरूपमिति । **इत्यादिवदिति** । इत्यादे प्रश्नस्य 'अग्निर्हिमस्य भेषजम्' इत्यादिपरिहारवदित्यर्थ । **युक्तिविरुद्ध चेति** । अनेन विलक्षणशक्तित्वमेवाशेषयुक्त्यनुसारीति **न्यायविवरणमप्युक्ततात्पर्यकं** भवति । **अनुमानं तु श्रुतिविरोधादप्रमाणमिति** पूर्ववाक्येनैतद्वाक्येन च युक्तिमात्राच्छ्रुतियुक्ता हि युक्तिर्बलवतीति **न्यायविवरणमप्युक्ततात्पर्यक** भवति ।' भाष्ये युक्तिभिश्चेति बहुवचनं प्रयुज्य तद्युक्तिप्रतिपादकतया "परतन्त्रो हीति" प्रमाणोदाहरणादाह—**अत्रेति** । ईश्वरो महदादिस्रष्टा स्वव्यतिरिक्तस्वतन्त्रसाधननिरपेक्ष इति प्रतिज्ञायामित्यर्थ । **अपरतन्त्रत्वादिति** ॥

नैनु परानपेक्षत्व स्वतन्त्रत्वमित्यन्यत्र व्याख्यातत्वेन हेत्वोरभेद इति चेत्, न, परसापेक्षत्वाभावोऽपरतन्त्रत्व स्वेच्छानुसारित्व स्वतन्त्रत्वमिति विवक्षितत्वादिति भाव । यथोक्त**मनुव्याख्याने**—

"स्वेच्छानुसारितामेव स्वातन्त्र्य हि विदो विदु "।

इति । **हेतुत्रय सूचितमिति** । "परतन्त्रो ह्यपेक्षेत" इत्यादिव्यतिरेकप्रदर्शनेनेत्यर्थ । **वेदादिप्रमाणैरिति** । उक्तश्रुतियुक्तिविरोधेन पूर्वपक्ष्युक्तयुक्तेरप्रामाण्यादिति भाव । तद्यदासीदित्यत्र तच्छब्दस्य तदेत्यर्थत्व यदित्यस्य हेत्वर्थतया कालादिपरतया चावृत्तिस्तदावृतमित्यत्र तच्छब्दस्यावृत्ति । एक कालपुरुषादिपरतया व्यस्त द्वितीय तेन परमात्मना वृतमिति समस्तम् अथशब्दो हेत्वर्थ इत्यभिप्रेत्य श्रुत्यर्थमाह—**यस्मात्तदेत्यादिना** । **साधनान्तरस्यैवाभाव** इति । "अद्भ्य सम्भूत" इत्यादिश्रुतेस्तु विश्वकर्मपदस्य

---

१ दोषेति । Text reconstructed.

२. नन्विति । अपरतन्त्रत्व-स्वतन्त्रत्वहेत्वोरभेदमाशङ्क्य समाधत्ते ।

हिरण्यगर्भपरत्वेन तत्पुरुषपदस्य हिरण्यगर्भस्रष्टृपुरुषपरत्वस्य सम्भवेन [1]हिरण्यगर्भकर्तृकावान्तरसृष्टावबादिकारणसद्भावपरत्वेन न तद्विरोध इति भावः। "यदन्यद्द्यावोश्चान्तरिक्षाच्चैतत सत् वायुरन्तरिक्षं चासत" इति श्रुत्यनुसारेण "नासदासीन्नोसदासीत्तदानीम्" इति पादं व्याचष्टे—**तदानीं प्रलये पञ्च भूतानीति**। रज.शब्द उपलक्षक इत्यभिप्रेत्य गुणत्रयमित्युक्तम्। परं व्योमाव्याकृताकाशमित्यन्यत्र व्याख्यातत्वेऽपि साधनसत्त्वाक्षेपप्रकरणादत्र परं व्योमप्रकृतिरिति व्याख्यातम्। न मृत्युरासीदित्यर्थं व्याचष्टे—**मृत्युरिति**। तर्हि तदानीमिति श्रौतपदं स्पष्टार्थम्। प्रकेतशब्दार्थ **प्रभाव** इति। किमावरीवरित्यर्थं व्याचष्टे—**एतदभावादिति**। कुहेत्यस्यार्थः **कुत्रेति**। शर्मन् शर्मणि तादर्थ्ये च सप्तमीत्यभिप्रेत्य **सुखार्थमित्युक्तम्**। आवरीवरीत्यस्य अवर्ततेति। आनीदवातमित्यर्थं व्याचष्टे—**किं तु निवातमिति**। अपरिमितमित्याङोऽर्थः। अवग्रहदर्शनात्। अप्रकेतं प्रभावरहितमिति स्पष्टम्। "तद्वशस्य भावो नापरः" **इत्यनुव्यायानं** मनसि निधायाऽऽह—**अन्यथेति**॥ "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजा जनयन्तीं सुरूपाम्"इति पूर्वार्धसाहित्येनोदाहृतार्थं व्याचष्टे—**रज** इत्यादिना॥

[2]नन्वत्र जीवेश्वरभेदानुक्ते कथं तदभेदे एतद्विरोध इत्यत आह—**अत्रेश्वरोपीति**। न चैवमीश्वरस्य प्रकृतिभोगत्यागयोरयोग इति वाच्यम्; "ऋतं पिबन्तौ" इति "श्रोत्रं चक्षु स्पर्शनं च" इत्याद्युक्तरीत्या प्रकृतिभोगस्य क्रियाप्रबन्धे लडिति सर्वदा प्रकृत्यबद्धत्वरूपप्रकृतित्यागस्य च सत्त्वादिति भाव। **नित्यमबाध्यमिति**। सदेत्यर्थस्य प्रकृतानुपयोगादित्यर्थः। **एतेनेति**। दृष्टानुसारेणेत्यनेनेत्यर्थ। **श्रुतियुक्तिभ्यामिति**। प्राक् P केवला युक्ति श्रुतिश्च शङ्किता। अत्र तु समुचितमिति भेदः। **प्रबलबहुप्रमाणेति**। अत एव "अनाद्यनन्तम्" इत्यादिबहुप्रमाणोदाहरणमिति भावः। अनुभवस्य शास्त्रार्थविशिष्टत्वासम्भवादाह—**तदनुकूल** इति। शास्त्रा-

---

१. **हिरण्यगर्भेति**। नायं विवादोऽवान्तरसृष्टिविषय इत्यवधेयम्।

२. **नन्विति**। मुक्तपदेनेश्वरस्यापि ग्रहणमिति जीवेशभेदप्रतिपादनेनाऽभेदविरोधइति ज्ञातव्यम्।

र्थविषयतया शास्त्रानुकूल इत्यर्थः । शास्त्रानुकूलकरणानामप्युत्तमत्वादनुभवस्यैव तत्कृत इत्यत आह—**साक्षादर्थविषयत्वादिति** । **अद्भ्यः सम्भूत इत्यादौ प्रतीतेश्चेति** । ईश्वरकर्तृकहिरण्यगर्भसृष्टावेवै साधनान्तरप्रतीतेरित्यर्थः । **प्राचीनश्रुतिसंग्रहार्थमिति** । हिरण्गर्भपदोपेतैतच्छ्रुतिसमाख्यानात् "अद्भ्यः सम्भूतः" "पृथिव्यै रसाच्च" इति श्रुतेरपि ईश्वरकर्तृकतत्पुरुषपदोक्तहिरण्यगर्भसृष्टावेव साधनान्तरप्रतिपादकत्वमिति भावः । अत एव पूर्वं वाक्यद्वयसंग्रहार्थमद्भ्यः सम्भूत इत्यादावित्येवोक्तम् । **सुधायां** तु—पूर्वोदाहृतशब्दविलक्षणः शब्दः शब्दान्तरम् । तेनेदमुक्तं भवति । यद्यपि प्रागुदाहृताः शब्दाः कथञ्चिदन्यथा नेतुं शक्यन्ते । तथाप्ययं न तथा । अत्र ईश्वरकर्तृकायामेव सृष्टौ कारणान्तरसद्भावश्रवणात् । न हि हिरण्यगर्भसृष्टिरनीश्वरकर्तृका तस्य प्रथमजत्वादिति शब्दान्तरशब्दः प्रकारान्तरेण व्याख्यातः ॥

अत्राद्ये—स्वतन्त्रकारणस्य ब्रह्मानन्यत्वं प्रतिज्ञाय तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः । द्वितीये—स्वतन्त्रसाधनसद्भावाङ्गीकारे बाधकोक्तिः । तृतीये—द्वितीयोक्ततर्कस्येष्टापादनरूपत्वपरिहाराय "अद्भ्यः सम्भूतः" इत्यादिश्रुतेः परतन्त्रसाधनपरत्वोक्तिः । चतुर्थे—साधनस्वरूपस्यैवाभावेन श्रुतेः परतन्त्रसाधनपरत्वासम्भव इत्याशङ्कापरिहाराय "नासदासीदि"ति श्रुतिविरोधमाशङ्क्य तस्याः सावकाशत्वोक्तिः । पञ्चमे—परतन्त्रसाधनानभ्युपगम एव महिमाधिक्यलाभा- "न्नासदासीदि"ति श्रुतेः स्वरूपनिषेधपरत्वमेवास्त्विति शङ्कापरिहाराय साधनसद्भावाङ्गीकारे उक्तानुपपत्त्यभावस्य श्रुतिरूपप्रमाणस्य चोक्तिः । षष्ठे—तत्रैव युक्तिरूपसाधकोक्तिः । सप्तमे—पटादिदृष्टान्तेनैव महदादेः स्वतन्त्रसाधनजन्यत्वादिकमपि स्यादित्याशङ्कापरिहाराय प्रकृत्यादेः परमात्मतन्त्रत्वे प्राणादिदृष्टान्तोक्तिरिति सूत्रक्रमः ॥ ६ ॥

॥ इति तदनन्यत्वाधिकरणम् ॥ ६ ॥

---

१. **सृष्टावेवेति** । ईश्वरकर्तृकमुख्यसृष्टिरियम् ।

२. **व्याख्यात इति** । एवमपि स्वातन्त्र्येण सर्वकर्तृत्वं विष्णोरेव लक्ष्मीपतेरिति सिद्धान्त इति भावः ।

## (७) ॥ इतरव्यपदेशाधिकरणम् ॥

### सू० ॥ ओं ॥ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ ओं ॥२२॥

अनन्तरसङ्गतिं दर्शयति—अत्र यथा प्राणादिरित्युक्त इति । "यथा प्राणादि"रिति सूत्रे प्राणादिदृष्टान्तेन प्रकृतिपुरुषपदोक्तजीवरूपसाधनजालस्य परमात्माधीनत्वोक्तौ न जीवस्य परमात्माधीनत्वं युक्तं तस्य स्वातन्त्र्येण कर्तृत्वस्यानुभवसिद्धत्वादिति शङ्कोदयादित्यर्थ । युक्तिविरोधस्येति । श्रुति-संवादयुक्तिविरोधस्येत्यर्थ । तेन "श्रुतिगुणयुक्तयः" इत्यनेनैवैतदधिकरणो-पाधिसम्रहो अनुव्याख्याने कृत इति बोद्धव्यम् । विष्णोरिति । अत्र जगज्जन्मादिकारणत्वं विष्णोर्युक्तिविरुद्धं भवत्युत नेति चिन्ता । तदर्थं महदादिकार्यं स्वतन्त्रजीवकर्तृकं कार्यत्वात् घटादिवदिति युक्तिः जीवाद्भवन्तीति श्रुतिसंवादाज्जीवस्य जगत्कर्तृत्वसाधिकोत दृष्टान्तस्य साध्यविकलत्वेनासाधिकेति । तदर्थं जीवस्य स्वतन्त्रकर्तृत्वे बाधकं नास्त्युत हिताक्रियादिकृत्स्नप्रसक्त्यादि-रूपबाधकमस्तीति । तदर्थं जीवकर्तृत्वपक्षवत् ब्रह्मकर्तृत्वपक्षेऽपि श्रमचिन्ताप्राप्ति-कल्पनागौरवादिबाधकमस्त्युत नास्तीति । तदर्थमीश्वरे उक्तदोषपरिहारहेतु-विशेषो[1] नास्त्युतास्तीति । कर्तृत्वानुभवादिति । घटादिकार्येष्वित्यर्थः । ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति न्यायविवरणाभिप्रेतं दूषणमाह—कल्पनागौरवापत्तेरिति । इदानीं न्यायविवरणं योजयति— P. 89 जीवस्यैवेति । एवं चेति । महदादिकमनन्याधीनजीवकर्तृकं कार्यत्वात् घटवदिति प्रयोगो ज्ञातव्य. ॥

नन्वेवं[2] न ह्यत्राधिकरणे पूर्वपक्षिणा महदादिसकलकार्यकर्तृत्वं जीवस्या-शङ्कितम् । किं तु घटादिकर्तृत्वं तावदनुभवसिद्धत्वात् कुलालादीनां न त्यक्तुं शक्यम् । तत्रेश्वरस्यापि कर्तृत्वाङ्गीकारे कल्पनागौरवं स्यादित्यतो नेश्वरस्य

---

१. विशेष इति । विशेषहेतुर्विशेषकारणमिति भावः ।

२. नन्विति । पूर्वपक्षिणो हार्दमुद्घाट्य "सुधा" — "न्यायविवरण" विरोधो नास्तीति प्रतिपादितमिति ज्ञेयम् ।

सर्वकर्तृत्वमिति सुधाग्रन्थविरोध इति चेत्, न; ईश्वरत्यागेन जीवस्यैव कर्तृत्वाङ्गीकारे कल्पनालाघवमिति **न्यायविवरणस्य** सर्वथेश्वरत्यागेन जीवस्यैव-कर्तृत्वाङ्गीकार इति च योजनायां पक्षद्वयसाधारण्यमभिप्रेत्य "देवादिवदपि लोके" इति सूत्रनिवर्तनीयतयाऽप्रामाणिकेश्वराङ्गीकारे कल्पनागौरवप्रसङ्गेन ईश्वर एव नास्तीति महदादिकार्येऽपि जीव एव कर्तेति पूर्वपक्ष्यभिप्रायोन्नयनेन टीका। अस्तु वा ईश्वर, प्रामाणिकत्वात्; तथापि न तस्य जन्मादिसूत्रोक्तं सकलजगत्कारणत्वम्; किन्तु महदादिकार्यकर्तृत्वमेव। न तु घटादिकर्तृत्वमपि। उभयोरपि तदङ्गीकारे गौरवप्रसङ्गादित्यभ्युपगमवादेन सुधाया प्रवृत्ते विरोध-शङ्काया एवाभावात्। भाष्ये दोषप्रसक्तिरिति सौत्रपदानुसारेणेतरव्यपदेशादि-त्यनन्तरे जीवकर्तृत्व इत्यापादकाध्याहारः कृत इत्यभिप्रेत्य तद्व्याचष्टे—**यदि जीवेत्यादिना। ईश्वराभ्युपगमानभ्युपगमयोरिति।** [1]अभ्युपगमे दृष्टान्त-धर्मिग्राहकमानविरोध, अनभ्युपगमे दृष्टान्ताभाव इत्यर्थ। **परसिद्धेनैवेति** तथा च नेद साधनानुमानम्, किन्तु दूषणानुमानम्। यदीश्वरोऽनन्यापेक्षय जगत्कर्ता तर्हि चेतनत्वाविशेषाज्जीवोऽपि तथैव जगत्कर्ता स्यादिति परसिद्धेनैव परस्य बोधनादित्यर्थ। यथोक्त**मनुव्याख्याने**—

"स्वन्यायै साधनं कार्यं परन्यायैस्तु दूषणम्"

इति। "च"शब्दो'ऽपि"शब्दार्थ इति। तथा चापीत्यस्य तथापीत्यर्थ। तस्यार्थ—चेतनत्वेऽपीति भाष्येऽभिहित इति भाव। **कर्मसापेक्षतयेति।** जीवस्य स्वतन्त्रकर्तृत्वेऽपि न हिताक्रियादिदोषप्रसक्ति। [2]स्वीयहितप्रतिबन्धका-हितकरणकारणीभूतकर्मवशात् तदुपपत्तेरिति भाव। श्रुतिसिद्धत्वेनाकल्पनादिति **न्यायविवरण** व्याचष्टे—**नेश्वरस्येति। स हि सर्वस्य कर्तेति।** उपलक्षण-मेतत्। 'नान्य कर्ता स हि स्वतन्त्र परमात्परो हरिरादिरनादि' इति **न्याय-विवरणोदाहृतश्रुतिरप्यत्र** द्रष्टव्या। **प्रतिपादितमिति।** अभिमान्यधिकरण

---

१ अभ्युपगम इति। अभ्युपगमे—अन्यनिरपेक्षतयेत्युक्तिविरोध इति भाव-दीप करा।

२. स्वीयेति। Text reconstructed.

इत्यर्थः । अश्रुतजीवकर्तृत्वाङ्गीकारे गौरवमेव तदभाव सिद्धान्ते लघुतेति **न्याय-विवरणं** व्याचष्टे—अश्रुतेति । युक्तीनामित्यध्याहारं विना योजयति—**वाक्यानामिति । ईश्वराधीनत्वेनोपपत्तेरिति** । तथा चेश्वर एव स्वरूपस्व- P 90 भावविशेषणानां नियामकश्चैतन्यमवच्छेदक विधाय विशेषं निमित्तीकृत्य विरुद्धे अप्यभेदबहुत्वे समावेश्याभेदेन निरवयवत्वशब्दकोपमपास्य बहुत्वेन कृत्स्नप्रसक्तिं न्यक्कृत्य कार्यानुरूपं सामर्थ्य विशेषं योजयतीति भावे[1] ॥

अत्राद्ये—जीवस्य स्वत कर्तृत्वे बाधकोक्ति । द्वितीये—ईश्वरकर्तृत्व-पक्षस्य तत्समानयोगक्षेमतापरिहाराय श्रमचिन्तादिदोषाभावे सामर्थ्यविशेष-लक्षणहेतूक्ति । तर्हि चेतनत्वाविशेषाज्जीवस्यापि ईश्वरवदेव स्वतन्त्रकर्तृत्व स्यादित्याशङ्कापरिहाराय तृतीये[2]—जीवस्वातन्त्र्यानुपपत्त्युक्ति । चतुर्थे—कथं स्वतन्त्रकर्तृत्वस्यैवानुभवात्, जीवस्य स्वातन्त्र्यानुपपत्तिरित्याशङ्क्य कर्तृत्वस्येश्व-राधीनत्वेन स्वातन्त्र्यांशेऽनुभवस्य भ्रमत्वोक्तिः । नन्वीश्वरस्यैवानुपलम्भेना-भावात् कथं जीवकर्तृत्वस्य तदधीनत्वमित्याशङ्कापरिहाराय पञ्चमे—ईश्वरानुप-लम्भस्य सदृष्टान्तमन्यथासिद्ध्युक्ति । षष्ठे—अस्त्वेवमीश्वरस्तथापि जीवकर्तृत्वस्य तदधीनत्व कुत इत्याशङ्कापरिहाराय तदधीनत्वानङ्गीकारे[3] बाधकोक्तिरिति सूत्रक्रम ॥ ७ ॥

॥ इति इतरव्यपदेशाधिकरणम् ॥ ७ ॥

---

## (८) ॥ श्रुतिशब्दमूलत्वाधिकरणम् ॥

## सू०॥ ओं श्रुतेस्तु शब्दमूलत्वात् ओं ॥ २८ ॥

**कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारादिति** । अत्रादिपदेन निरवयव-त्वशब्दकोपशरीरेन्द्रियादिविकलत्वाधिष्ठानराहित्यादिलक्षणविरोधिबहुयुक्तिग्रह-

---

१ **भाव इति** । ईश्वराधीनस्य जीवस्य कथ कर्तृत्व समर्थ्यत इति निपुणतरमनो-पापादीति द्रष्टव्यम् ।

२ **तृतीय इति** । Text reconstructed.

३. **अनङ्गीकार इति** । Text amended

णम्। ततश्चानुव्याख्याने "बहुयुक्तय" इत्यनेनैवैतदधिकरणोपाधिरपि सगृहीत इति भाव । अनेन "कृत्स्नप्रसक्ति' इति पूर्वसूत्रे जीवकर्तृत्वपक्षोक्तदोषस्येश्वरपक्षे उद्धारादनन्तरसङ्गतिरपि सूचिता। **किं विष्णोरिति**। अत्र विष्णोर्जगज्जन्मादिकर्तृत्व कि युक्तिविरुद्धम् उत नेति चिन्ता। तदर्थमीश्वरकर्तृत्वपक्षेऽपि कृत्स्नप्रसक्त्यादिदोष प्राप्नोत्युत नेति। तदर्थमन्यत्र विरुद्धत्वेन दृश्यमानं किमीश्वरेऽपि विरुद्धमेवोनाविरुद्धमिति। तदर्थं शब्दैकसमधिगम्यत्वविचित्रशक्तिरूपविशेषेण तत्र विरोधपरिहारो न सम्भवत्युत सम्भवतीति। तदर्थमीश्वरपक्षवदेव जीवपक्षेऽपि चेतनत्वादिविशेषेण विरोधपरिहार स्यादित्यतिप्रसङ्ग किं प्राप्नोत्युत नेति। तदर्थमीश्वर एव प्रतीतविरोधस्यादोषत्वे जीवे प्रतीतविरोधस्य दोषत्वेच प्रमाणं नास्त्युतास्तीति। न जीवाद्विशेषादर्शनं परमेश्वर इति **न्यायविवरणं** तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे—**न हि वक्तुमिति**। **शब्दैकसमधिगम्यत्वस्येति**। युक्तिविरोधनिरासकविचित्रशक्तिसद्भावादित्यनेन चशब्दैकसमधिगम्यत्वसर्वशक्तित्वादीना विशेषाणामदर्शनं जीव इति **न्यायविवरणमपि** व्याख्यातम्। **तथोक्त इति**। "अमनुरवागनिन्द्र अप्रवृत्तिरित्यु"क्त इत्यर्थ । **विचित्रशक्तिसद्भावादिति**। न चेदम् 'अधिक तु भेदनिर्देशात्' इत्यनेन पुनरुक्तमिति वाच्यम्; तत्रे साधनास्मरणश्रमचिन्तादिदोषपरिहारत्वहेतुश्रोतृत्वमन्तृत्वाद्यतिशयसद्भावे प्रमाणोक्ति, अत्र तु कृत्स्नप्रसक्त्यादिदोषपरिहारहेत्वघटितघटकविचित्रशक्तिसद्भावे प्रमाणोक्तिरिति मानमेयभेदसत्त्वात्। यथोक्तम्—

"मानमेयविशेषेण पुनरुक्तिर्न जायते"

इति—विचित्रशक्तेर्युक्तिविरोधनिरासकत्वे स्वयं प्रमाणमाह—**तदुक्तमिति**। **"ही"ति सूचितामिति**। अनेन विशेषश्रुतेरेवेति **न्यायविवरणमपि** व्याख्यातम्। सौत्र"श्च"शब्दोऽवधारणार्थे। तस्य परपक्षव्यावृत्त्यर्थं स्वपक्ष इत्यनेनान्वय इत्यभिप्रेत्य भाष्ये जीवपक्ष एवेत्युक्तम्। स्वयं स्वदोषतानयनव्यावृत्त्यर्थं सूत्रे यथाश्रुतसम्बन्धमप्यभिप्रेत्याह—**युक्तिविरोधो दोष एवेति**।

---

१ तत्रेति। उद्धाविनपुनरुक्तिशङ्कापरिहार इति बोध्यम्। भिन्नविषयसद्भावादिति भाव ।

पुण्येति । तथा च न पुनरुक्तिरिति भावः । आत्मनीति प्रकृतत्वात् सर्वोपेत इति सूत्रे पुंलिङ्गनिर्देशः स्यादित्यत आह—श्रुत्यनुसारेणेति ।

" मानमेयविरोधेन पुनरुक्तिर्न जायते "

इत्यनुव्याख्यानं मनसि निधायाऽऽह—युक्तिबुभुत्सयेति । युक्तिविशेषबुभुत्सयेत्यर्थः ॥

अत्राद्ये—कृत्स्नप्रसक्त्यादिदोषपरिहाराय लोकविरुद्धधर्माणां विष्णौ सहावस्थाने श्रुतिरूपप्रमाणस्य युक्तिविरोधपरिहारोपयोगिनो शब्दैकसमधिगम्यत्वस्य चोक्तिः । द्वितीये—युक्तिविरोधपरिहारोपयोगिविचित्रशक्त्युक्तिः । तृतीये—जीवस्येश्वरप्रतिबन्धुद्धारः । चतुर्थे—द्वितीयसूत्रोक्तशक्तेः सर्वविषयत्वे नित्यत्वे च प्रमाणोक्तिः । पंचमे—प्रकारान्तरेण जगत्कर्तृत्वाक्षेपपरिहार इति सूत्रक्रमः ॥ ८ ॥

॥ इति श्रुतिशब्दमूलत्वाधिकरणम् ॥ ८ ॥

---

## (९) ॥ न प्रयोजनवत्त्वाधिकरणम् ॥

### सू०॥ ओं ॥ न प्रयोजनवत्त्वात् ॥ ओं ॥ ३३ ॥

निष्फलत्वादिति । अत्रादिपदेनापूर्णस्वरूपविरोधियुक्तिग्रहणेनानुव्याख्याने बहुशब्दस्यानेकपरत्वादेतदधिकरणोपधिरपि "बहुयुक्तय" इत्यनेनैव सगृहीत इति भाव.। "सर्वोपेत" इति पूर्वसूत्रे नित्यानन्देत्युक्तपूर्णानन्दत्वलब्धस्य प्रयोजनवत्त्वादिति सिद्धान्तहेतुत्वेनोपादानादनन्तरसङ्गतिरिति ज्ञातव्यम् । ईश्वरस्येति । अत्र विष्णो. जगज्जन्मादिकारणत्वं किं युक्तिविरुद्धमुत नेति चिन्ता । तदर्थं कर्तृत्वे सृष्ट्यादिसाध्यादिफलाभावप्राप्त्या पूर्णत्वं प्राप्नोत्युत नेति । तदर्थं किं सृष्ट्यादिकं फलार्थमुत केवललीलारूपमिति । तदर्थं

---

१. भाव इति । Text restored.

२. प म इति । अस्य "विचित्रशक्त्यधिकरणम्" इति नामान्तरम् ।

चेतनप्रवृत्तिः प्रेक्षावत्प्रवृत्तिर्वा स्वप्रयोजनवत्त्वेन व्याप्तेत मत्तदयालुप्रवृत्त्यादौ व्यभिचारात्तदव्याप्तेति ॥

ननु यद्यत्र भाष्ये कर्तृत्वेन प्रयोजनवत्त्वं प्रसाध्यापूर्णत्वसाधनं विवक्षितं स्यात् तदा प्रथमसूत्रमयुक्तं स्यात् । अपूर्णतासाधकप्रकृतकृतकृत्यत्वरूपप्रयोजनवत्त्वहेतोरसिद्धत्वात् । अथ कर्ता चेत् प्रयोजनवान् स्यात्; तथा चापूर्णः स्यादित्यापादनं विवक्षितं तदा व्यर्थमेवेदं सूत्रम् । न चापूर्णस्ततो न प्रयोजनवानिति परेणैवाङ्गीकृतत्वात् । अन्यथा विपर्ययापर्यवसानात् । द्वितीयसूत्रं तु पक्षद्वयेऽप्ययुक्तम् । साधनापादनदूषणस्यानुद्भावनादित्याशङ्कापरिहाराय विकल्पं कृत्वाद्यपक्षोत्तरत्वेन भाष्यं योजयति—**तथा हीत्यादिना** । द्वितीयपक्षोत्तरत्वेन प्रयोजनाभावो कर्तृत्वे कारणमिति **न्यायविवरणा**भिप्रायमाह— **प्रयोजनानुद्देशेनेति,** प्रयोजनवत्त्वादिति सौत्रहेतुव्याख्यानपरम् । कृतकृत्यत्वादिति भाष्यं व्याचष्टे—**प्राप्तेति** । तस्यासिद्धिपरिहारार्थं तत्साधनप्रदर्शनाय श्रुत्युदाहरणमित्यभिप्रेत्य **तस्य पूर्णानन्दत्वेनेत्युक्तम्** । **नेति** सौत्रप्रतिज्ञाभागव्याख्यानपरं न प्रयोजनाय सृष्टिरिति भाष्यं व्याचष्टे—**फलानुद्देशेनेति** । तथा च द्वितीयपक्षस्यैवाभ्युपगमान्न प्रथमपक्षोक्तदोषावकाश इति भावः । **अतः पूर्णानन्दोऽपीति** । अनेनेतरस्य पूर्णत्वादेवानन्तशक्तित्वाल्लीलयैव कर्तृत्वमिति **न्यायविवरण**मप्युक्ततात्पर्यकं भवति ॥ सूत्रक्रमः स्पष्टः ॥

॥ इति नप्रयोजनाधिकरणम् ॥ ९ ॥

---

## (१०) ॥ वैषम्यनैर्घृण्याधिकरणम् ॥

## सू० ॥ ओं ॥ वैषम्यनैर्घृण्येन सापेक्षत्वात् तथा हि दर्शयति ॥ ओं ॥ ३५ ॥

**वैषम्यादिदोषेति** । अत्राप्यादिपदेनास्वातन्त्र्यादिविरोधियुक्तिग्रहणेन "बहुयुक्तयः" इत्यनेनैव तदधिकरणोपधिरपि सङ्गृहीत इति भावः । पूर्वाधि-

---

१. लीलेति । "इति केवललीलैव निर्मिता प्रभुणा स्वयम्" इति भगवत्पादाः ।

करणे लोकानुग्रहाय सृष्ट्यादिक्रीडां करोतीत्युक्ते तर्हि सर्वेषां सुखमेव दद्यात् ; न तु केषाञ्चित् सुखं केषाञ्चित् दुःखम्। वैषम्याद्यापत्तेरित्याक्षेपोत्थानात् अनन्तरसङ्गतिरिति ज्ञेयम्। ईश्वरस्येति। अत्र विष्णोः सर्वकर्तृत्वं युक्तिविरुद्धम् भवत्युत नेति चिन्ता। तदर्थं प्राणिसुखदुःखादिसर्वकर्तृत्वे वैषम्यादि प्राप्नोत्युत नेति। तदर्थं ईश्वरः प्राणिनां सुखदुःखादिदाने तत्तदनादिकर्मयोग्यतादिकं किं नापेक्षत उतापेक्षत इति। तदर्थं कर्माद्यपेक्षायाम् ईश्वरस्यास्वातन्त्र्यम् प्राप्नोत्युत नेति। तदर्थं, कर्मयोग्यतादिकं विष्ण्वनधीनसत्तादिकम् उत तदधीनसत्तादिकमिति। तदर्थं कर्मादिकारयितृत्वनिबन्धनं वैषम्यादिकं दोषावहं भवत्युत नेति। तदर्थं वैषम्यादिकं किं तत्त्वेनैव दोषः उत वेदाप्रामाण्याद्यनिष्टहेतुत्वेनेति। ईशस्य पूर्णत्वादिसिद्धिरिति न्यायविवरणं व्याचष्टे— न विष्णोरिति। अनेन पूर्णत्वं सर्वकर्तृकत्वमिति व्याख्यातं भवति। कर्मसापेक्षत्वेऽनीशत्वमिति न्यायविवरणं व्याचष्टे—नियमेनेति। सर्वकर्तृकत्वेति भाष्यं व्याचष्टे—द्वितीय इति अनेन पक्षत्वे श्रुतेरप्रामाण्यमिति न्यायविवरणं व्याचष्टे—कर्मानपेक्षतयेति। अविभागादिति सौत्रपदव्याख्यानरूपस्य कर्मणोऽपि तन्निमित्तत्वादित्येतस्यार्थं। भगवदधीनत्वेति। अपेक्ष्यकर्मसत्तादेरिति। अनेन कर्मणोऽपि तदधीनत्वमिति न्यायविवरणमप्युक्तार्थं भवति। कर्मानपेक्षत्वे वेदाप्रामाण्यप्रसङ्गादिति। अनेन तथापि तदनुसारेण फलदानमित्यनङ्गीकार एवेष्ट श्रुतिप्रामाण्यासिद्धिरिति न्यायविवरणमपि व्याख्यातं भवति। अत्राद्ये—कर्मादिसापेक्षस्य कर्तृत्वमभ्युपेत्य वैषम्यनैर्घृण्ये परिहृते। द्वितीये अपेक्षणीय कर्मेश्वरायत्तं न वा। नेति पक्षे सर्वकारणत्वहानि। आद्ये, निर्निमित्तं विषमाणा कर्मणा कारयितुर्वैषम्यनैर्घृण्ये स्यातामित्याक्षिप्य कर्मादीनामनादित्वाभ्युपगमेन समाधानोक्तिः। तृतीये—एवं तर्हि नियमेन कर्मादिसापेक्षस्यस्वातन्त्र्य न स्यादित्याशङ्क्योक्तम् " उपपद्यते च " इति।

---

१ निबन्धनमिति। क्वचित् परमात्मा शुभ कर्म कारयति क्वचिच्चाऽशुभमिति तस्य वैषम्यमिति भावः। एकजीवसुखादिकारणत्वे सति तदितरजीवदुःखादिकारणत्वरूप वैषम्यमिति भवः।

अपेक्ष्यकर्मण पैरमात्माधीनत्वे तदपेक्षा नामानपेक्षैव । तथा च पुनर्वैषम्याद्या-पत्तिरित्याशङ्क्योक्तम् " उपलभ्यते च " इतीति सूत्रक्रम ॥ १० ॥

॥ इति वैषम्यनैर्घृण्याधिकरणम् ॥ १० ॥

---

## (११) ॥ सर्वधर्मोपपत्त्यधिकरणम् ॥

## सू० ॥ ओं ॥ सर्वधर्मोपपत्तेश्च ॥ ओं ॥ ३८ ॥

**उपसहरती** त्यधिकरणतात्पर्ये वक्तव्ये सौत्रसर्वपदानुरोधेन भाष्ये अवशिष्टैरित्युक्तम् । प्रकरणवशात् विशिष्य प्रतिपादितेभ्य इति लभ्यते ॥

ननु प्रतिपादन विनोपसहाराभावात् कथमवशिष्टै सह विशिष्य प्रति-पादितानामुपसहार इत्यत । **प्रतिपादितैरि**त्युक्तम् । अवशिष्टत्वादेव पूर्वं प्रतिपादनाभावात् कथ प्रतिपादितत्वमित्यतस्तात्पर्यमाह—**किमुक्तं भवती**-त्यादिना । **पूर्णगुणत्वमिति** । तथा चावशिष्टगुणाना प्रतिपादनपूर्वक तै सह विशिष्य प्रतिपादितगुणानुपसहरतीति भाष्याभिप्राय इति भाव । अनेनावशिष्ट-गुणेषु बहुयुक्तिविरोधपरिहार एवैतदधिकरणोपाधिरिति भाव । साधके जगज्ज-न्मादिकर्तृत्वे, एव युक्तिविरोध निरस्येदानीं तत्साध्ये ब्रह्मशब्दार्थपूर्णगुणत्वे युक्तिविरोधपरिहारादनन्तरसङ्गतिरिति चोक्त भवति । चेतनत्वस्य विरोधि-युक्त्यन्तरोपलक्षकत्वेनानु याख्याने " बहुयुक्तय " इत्यनेनेदमपि सगृहीतम् ॥

नन्वेवमारम्भणाधिकरण एव बहुयुक्तिविरोधपरिहारस्य उपलक्षणत्वेन कृतत्वादेतदधिकरणचतुष्टयस्य तेनैव गतार्थतेति चेत्, न,

" मानमेयविशेषेण पुनरुक्तिर्न जायते "

इत्युक्तन्यायेन " विकरणत्वात् " इति सूत्रगतार्थत्वस्यैवास्यापि समा धेयत्वात् । मानमेयविशेषश्च भाष्यटीकादावेव तत्र तत्रोक्त इति ।

---

१ **परमात्मेति** । परमात्माधीनत्वेनैव सर्वदा गृह्यमाणस्य कर्मणो न वैषम्यादि साधकत्वमिति भाव ।

२ **भावइति** । Omission supplied

युक्तमयुक्तं वेति। अत्र विष्णोर्गुणपूर्णत्वं युक्तिविरुद्धमुत नेति चिन्ता। तदर्थं चेतनत्वयुक्तिः किमनाभासा उत श्रुतियुक्तिबाधितत्वेनास्वातन्त्र्योपाधिग्रस्तत्वेन चाभासेति। तदर्थमपूर्णत्वस्यास्वातन्त्र्येण व्याप्तिर्नास्त्युतास्तीति। सर्वे चेतना अपूर्णा इति न्यायविवरणं व्याचष्टे—स्वातन्त्र्यादिमत इति। स्वातन्त्र्य-पूर्णगुणत्वयोर्व्यतिरेकव्याप्तौ "अपूर्णोऽयं जीवसङ्घोऽस्वतन्त्रः" इति न्याय-विवरणोदाहृता श्रुतिर्द्रष्टव्या। श्रुतेश्चेति। अनेन सौत्रः "च"शब्दः श्रुतिसमु-च्चायकतया भाष्ये व्याख्यात इत्युक्तं भवति। रमादिचिन्त्या इति। आदिपदेन [1]विरिञ्चिग्रहणम्। तस्यापि श्रुत्यनुक्तभारताद्युक्तगुणचिन्तयितृत्वादिति भावः। अत्राद्यं स्मृतिविरोधनिरासकमेका पेटिका। तदुत्तरमधिकरणद्वयं वेदप्रामाण्ययुक्तिविरोधनिरासकत्वेनैका पेटिका। तत्राद्ये—युक्तिमात्रविरोध-निरासः। द्वितीये—दृढयुक्तिविरोधनिरास इति। तदुत्तरमधिकरणद्वयं जगत्कर्तृत्वे श्रुत्युपसर्जनयुक्तिविरोधनिरासकत्वेनैका पेटिका। तत्राद्ये—श्रुतिसंवादयुक्ति-विरोधपरिहारः। द्वितीये—श्रुतिसिद्धयुक्तिविरोधपरिहार.॥ षष्ठं स्वातन्त्र्येण जगत्कर्तृत्वे बहुयुक्तिविरोधनिरासकमेका पेटिका। सप्तमं श्रुतिसंवादिजीव-कर्तृत्वसाधकयुक्तिविरोधस्य विस्तरेण निरासकमेका पेटिका। तदुत्तरमधिकरण-चतुष्टयं बहुयुक्तिविरोधनिरासकमेका पेटिका। तत्राप्याद्यत्रिकं जगत्कर्तृत्वे बहुयुक्तिविरोधनिरासकम्। तत्राद्ये—कृत्स्नप्रसक्त्यादियुक्तिविरोधपरिहारः। द्वितीये निष्फलत्वादियुक्तिविरोधपरिहार। तृतीये—वैषम्यादियुक्तिविरोधपरिहार इति। चतुर्थं ब्रह्मशब्दोक्तपूर्णगुणत्वे युक्तिविरोधनिरासकमिति॥ ११॥

॥ इति सर्वधर्मोपपत्त्यधिकरणम्॥ ११॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचित तत्त्व-
प्रकाशिकाभावबोधे द्वितीयाध्यायस्य
प्रथम पादः॥ १॥
॥ श्रीवेदव्यासाय नम॥

---

१. विरिञ्चेति। चतुर्मुखचिन्त्या इति भाव। "सामान्यत श्रुता विशिष्य ...... स्मर्यन्ति" इति भावदीप कारा।

## ॥ द्वितीयः पादः ॥

### (१) ॥ रचनानुपपत्त्यधिकरणम् ॥

**सू० ॥ ओं ॥ रचनाऽनुपपत्तेश्चनाऽनुमानम् ॥ ओं ॥ १ ॥**

इतरविरोधत्रये[1] **अनादिकालानुवृत्तसमयविरोधस्येति ।** अपौरुषेयवेदापेक्षया समयानां दौर्बल्यशङ्कानिरासायोक्तम्—**अनादिकालानुवृत्तेति ।** अत एव सुधायाम् ।

"अनादिकालतो वृत्ताः समया हि प्रवाहतः"

इत्यनुव्याख्यानमेवं व्याख्यातम् ॥

नन्वेवमुभयोरपि अनादिकालानुवृत्तत्वेन साम्यात् समयविरोधस्य कथं प्राबल्यमिति चेत्, न समयपदेनैव समूलस्यात्यन्तभ्रमहेतुत्त्वेन तत्वज्ञानादिविरोधित्वस्य च श्रुतिविरोधापेक्षया तद्विरोधस्य प्राबल्यहेतोः सूचितत्वादिति । **तत्र सामान्यतो निराकृतानामिति ।** अनेन पूर्वपादेनास्य पादस्य प्रपञ्च्यप्रपञ्चकभावलक्षणा सङ्गतिरित्युक्तं भवति । वैदिकसमयस्यापि तृतीयस्य सत्त्वात् कथं द्वैविध्यमित्यत आह—**वेदवादिनामिति ।** वेदावष्टम्भेन पूर्वपक्षं कुर्वताम्, "असदिति चेत" इत्यादौ प्रथमपादे निराकृतत्वादित्यर्थः । यद्यप्यत्र[2] प्रतिक्षेप्यवैशेषिकादीनां वेदप्रामाण्यवादित्वेन वैदिकत्वमस्त्येव । तथापि न वेदप्रामाण्यवादित्वं वैदिकत्वम्; किं तु तत्प्रधानत्वम् वैशेषिकादीनां तु हेतुप्रधानत्वमेवेति न वैदिकत्वमिति भाव । **युक्तिमत्त्वादिति ।** यद्यपि चार्वाकमते युक्तिर्न प्रमाणम्; तथापि लोकव्यवहारोच्छेदभिया धूमादिज्ञानानन्तरं वह्न्या-

---

१ **त्रय इति ।** समयविरोध–श्रुतिविरोध–सयुक्तिकश्रुतिविरोधत्रय इति भाव. । निरस्तो युक्तिविरोध । समयविरोध इदानीं निराक्रियते द्वितीयेऽस्मिन् पादे ।

२. **यद्यपीति ।** वैशेषिकादीनां मुख्यतो हेतुवादित्वेऽपि प्रतिष्ठितत्वाद्वेदप्रामाण्याभ्युपगमेऽपि तेषां निराकरणीयत्वमेवेति भाव ।

विज्ञान सम्भावनारूपम् । सवादेन च तस्य प्रामाण्याभिमान इत्यङ्गीकृतत्वेन तस्यापि युक्तिमत्त्वादिति भाव । **युक्त न चेतीति।** अत्र विष्णो सर्वकर्तृत्व किं न युक्तमुत युक्तमिति चिन्ता। तदर्थं निरीश्वरसाङ्ख्यसमय श्रुत्युक्तजगत्कर्तृत्वबाधनक्षमो भवत्युत नेति । तदर्थं महदादिक स्वसदृशकारणजन्यं कार्यत्वादिति तत्परिकल्पितमनुमान किमनाभासमुत प्रधानम्, न स्वत प्रवृत्तिमदचेतनत्वादित्याद्यनुमानबाधितत्वेनाभासमिति[1] । तदर्थमचेतनत्वहेतो पयोऽम्ब्वयस्कान्तादौ व्यभिचारोऽस्त्युत नास्तीति । तदर्थं पयोऽम्ब्वादेश्चेतनाधीनप्रवृत्तिमत्त्वे प्रमाण नास्त्युतास्तीति । **अनुमानेन कारणतया कल्पितमिति ।** अनेन सूत्रे आनुमानमिति पदविभागमभिप्रेत्यानुपरिकल्पितमिति भाष्येऽभिहितमित्युक्त भवति ॥

"चेतनेच्छानुसारेण यदा दृष्ट पटोद्भव ।
एतादृशत्वमन्यस्य वस्तुत्वात् केन वार्यते ॥"

इत्यनुव्याख्यानानुसारेण भाष्याभिप्रायमाह—**महदादीति । परस्पराश्रयप्रसङ्गादिति ।** प्रकृते कर्तृत्वसिद्धौ 'अह करोमि' इत्यादेर्व्यवहारमात्रत्वसिद्धि । तत्सिद्धौ दृष्टान्तस्य साध्यविकलत्वेनानुमानस्याविरोधत्वे प्रकृते कर्तृत्वसिद्धिरिति परस्पराश्रयप्रसङ्गादित्यर्थ । ईश्वरेच्छानुसारित्वस्य घटादिसृष्टावपि सत्त्वेन न दृष्टान्त साध्यविकल इति भावेनाह—**प्रतिपादयिष्यते चैतदिति ।** उत्तरसूत्रद्वयेनेत्यर्थ । "पयोऽम्बुवच्चेत्तत्रापि" इत्यनुव्याख्यानानुसारेण सूत्रभाष्ययोरुपलक्षणपरत्वमभिप्रेत्याऽऽह—**तथाकूलस्येति ।** "मघवन् यस्मिन् धनवन् मखपते" इति चेति **कर्मनिर्णयानुसारेण** मघवच्छब्दार्थमाह—**धनवन्निति ॥**

अत्राद्ये—प्रधानस्य जगत्कर्तृत्वेऽचेतनस्यस्वत प्रवृत्त्यनुपपत्तिरूपबाधकोक्ति । द्वितीये—सिद्धान्तसाधकयुक्तिविरोधोक्ति । तृतीये—प्रथमसूत्रोक्ताऽचेतनत्वहेतोर्व्यभिचारोद्धार । चतुर्थे—पयोऽम्ब्वादौ व्यभिचाराभावेऽपि

---

१ **आभासमिति।** आभाससमानयोगक्षेममिति भाव ।

अयस्कान्तादौ व्यभिचारः स्यादिति शङ्कानिरासार्थं चेतनाचेतनसर्वप्रवृत्तीनामी-श्वराधीनत्वोक्तिरिति सूत्रक्रमः ॥ १ ॥

॥ इति रचनाऽनुपपत्त्यधिकरणम् ॥ १ ॥

---

## (२) ॥ अन्यत्राभावाधिकरणम् ॥

### सू०॥ ओं ॥ अन्यत्राभावाच्च न तृणादिवत् ॥ ओं ॥ ५[1] ॥

**सेश्वरसाङ्ख्यसमयेति** । तथा च न निरीश्वरपक्षोक्तदोषोऽत्रेति पूर्व-पक्षोत्थानादनन्तरसङ्गतिरपीति भावः । **युक्तमिति** । अत्र हरेः स्वातन्त्र्येण जगत्कर्तृत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं सेश्वरसाङ्ख्यसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तत्परिकल्पितमीश्वरस्य पर्जन्यवत् प्रकृत्यनुग्राहकमात्रत्वं सम्भवत्युत न सम्भवतीति । तदर्थमीश्वरस्य प्रकृतिपर्जन्यादि-सर्वसत्तादिप्रदत्वरूपप्राधान्ये प्रमाणं नास्त्युतास्तीति । **सर्वपदार्थानामिति** । तथा च तदुदाहरणं न प्रकृतानुपयुक्तमिति भावः । श्रुतेरभेदप्रतिपादकत्वभ्रमं वारयितुमाह—**तदधीनसत्तेत्युच्यत** इति । स एवेत्यादिभाष्यं सौत्र"च"शब्द-व्याख्यानमित्याह—**न केवलमित्यादिना** । **नानुग्राहकत्वमात्रमिति** । निषेधार्थकनञ्समासोऽयम् । अनुग्राहकत्वाभावमात्रमित्यर्थः । तथा च न केवल-"मन्यत्राभावादि"त्यनेनोक्तं कार्यस्येश्वराधीनत्वमेव सेश्वरसाङ्ख्योक्तप्रमाणसिद्ध-सौत्र"च"शब्दसूचितं सर्वहेतुभूतप्रकृतिसत्तादेरीश्वराधीनत्वमपि विरोधीत्यर्थः । **स्वजीवेत्यत्र** कर्मधारयत्वे तत्प्रतिपाद्याभेदस्य बाधितत्वेन षष्ठीतत्पुरुष इत्यभि-प्रेत्याऽऽह—**स्वाधीनेति** । **"च"शब्देन सूचितमिति शेष** इति । सत्तादि-प्रदत्वञ्च प्रामाणिकैरङ्गीकृतमिति "च"शब्देन सूचितमित्यर्थः ॥ २ ॥

॥ इत्यन्यत्राऽभावाधिकरणम् ॥ २ ॥

---

1. प्रकृतीति । Omission supplied.

## (३) ॥ अभ्युपगमाधिकरणम् ॥

### सू०॥ ओं ॥ अभ्युपगमेऽप्यर्थाभावात् ॥ ओं ॥ ६ ॥

**चार्वाकसमयेति** । तथा च मा भूदचेतनस्य कर्तृत्वम् ; शरीरस्य चेतनत्वेन कर्तृत्वापत्तेरीश्वरवैयर्थ्यात् । न च साङ्ख्य प्रतीव श्रुत्यादिबाधो[1] वक्तुं युक्त । तस्याप्रामाण्याङ्गीकारादित्यभ्याधिकाशङ्कया पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भाव । **युक्तं न वेति** । अत्रेश्वरस्य जगत्कर्तृत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं चार्वाकसमय श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तच्छास्त्रे विषयप्रयोजनादिकमस्त्युत नास्तीति । **पूर्वपूर्वस्मादिति** । देहरूपचेतनादित्यर्थ । प्रकारान्तरेणापि देहरूपचेतनोत्पत्त्युपपत्तिमाह—**क्वचिदिति** । यथा क्रमुकचूर्णपूर्णादीना प्रत्येक मदजनकत्वाभावेऽपि समुदाये तज्जनकत्वम्, तथा पृथिव्यादिभूताना प्रत्येक चैतन्योत्पादकत्वाभावेऽपि समुदितभूतचतुष्टस्य स्वभावादेव चैतन्यजनकत्वोपपत्तेश्चेत्यर्थ । समुदितानामपि भूताना न सर्वत्र चैतन्योत्पादकत्वमित्यभिप्रेत्य क्वचिदित्युक्तम् । **तदभावादिति** । श्रुतशास्त्रस्यापि P. 96
धनाद्यभावदर्शनादित्यर्थ । सूत्रभाष्ययोरर्थप्रयोजनशब्दाभ्या न केवल फलमात्रं विवक्षितम् ; किं तु विषयोऽपीत्याह—**नापि विषय इति** । **अपरामर्शे अदर्शनादिति** । इन्द्रियसन्निकृष्टघटादिप्रतियोगिकाभावज्ञानस्येव धर्माद्यभावज्ञानस्य सदिति जायमानस्याऽदर्शनादित्यर्थ ॥

ननु[2] घटोऽस्ति न वेति परामर्शानन्तर घटो नास्ति अनुपलभ्यमानत्वादिति घटाभावज्ञानवदत्रापि धर्माभावज्ञान स्यादित्यत आह—**परामर्श इति** । अनुमानं तु त्वन्मते न प्रमाणमिति भाव । विरोधस्फोटकसौत्रादिपदव्याख्यानरूप स्वन्याहतेरेवेति भाष्यं व्याचष्टे—**अतः सिद्धान्तेऽपीति** । अनेन सौत्राभ्यु-

---

१ **बाध इति** । वेदप्रामाण्याऽनङ्गीकर्ता चार्वाकस्तु श्रुतिबाध निग्रहस्थानं कदापि न कथायामुररीकुर्यादिति भाव ।

२ **नन्विति** । धर्माद्यभावसाधन चार्वाकेण नाऽनुमानप्रमाणमवलम्ब्य कर्तुं शक्यम् । तेनाऽनुमानस्याऽनङ्गीकारादिति भाव ।

पगमशब्दार्थोऽप्युक्तइति। "सिद्धान्त" इति "मास्तु प्रयोजनमि"त्युक्त्यो र्या-
हृतिमुपपादयितु तदर्थयोर्विरोधमाह—**न ह्यभ्युपगम इति** ॥ ३ ॥

॥ इत्यभ्युपगमाऽधिकरणम् ॥ ३ ॥

---

## (४) ॥ पुरुषाश्माधिकरणम् ॥

## सू०॥ ओं ॥ पुरुषाश्मवदिति चेत्तथापि ॥ ओं ॥ ७ ॥

**निरीश्वरसाङ्ख्यैकदेशनिरोधेति।** नन्वेव तर्हि इदमधिकरण द्वितीय स्यादिति चेत्, सत्यम्, तथाप्यभ्यधिकाशङ्कानुसारेणेयमुक्ति। तथा हि—परमचेतनस्य भगवत एव सर्वकर्तृत्व प्रागुक्तम्। तस्य केवलप्रकृतिकर्तृत्ववाद साक्षाद्विरोधीति प्रक्रमपाक्रमम्। तेन मा भूत् केवलस्याचेतनस्य प्रधानस्य कर्तृत्वम्, ईश्वरानुगृहीतस्य तु भविष्यतीत्याशङ्का द्वितीयाधिकरणे निराकृता। मा भूदचेतनस्य कर्तृत्वम्, किं तु शरीरस्य चैतन्याश्रयस्य कर्तृत्वमस्त्वित्याशङ्काया शरीरस्य चैतन्याश्रयताऽयोगात् पुनस्तदवस्थ कर्तृत्वायोग इति तृतीयेऽभिहितम्। इदानीं तु केवलस्याचेतनस्य कर्तृत्वायोगेऽपि चेतनसन्निधानेन तदुपपत्ते किमीश्वरेणेत्येव शङ्का निराक्रियत इति सुधायामेवानन्तरसङ्गतिरुक्ता ज्ञातव्या। **युक्त न वेति।** अत्रेश्वरस्य जगत्कारणत्व न युक्तमुत युक्तमिति चिन्ता। तदर्थं पुरुषोपसर्जनप्रकृतिकर्तृत्वादिसमय श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति। तदर्थं तदुपेक्षितविप्रतिपन्ना प्रवृत्ति पुरुषोपसर्जनाऽचेतननिमित्ता प्रवृत्तित्वाद-श्मादादानादिप्रवृत्तिवदित्यनुमानमनाभासमुत दृष्टान्तस्य साध्यविकलत्वेनाभासमिति। तदर्थं दृष्टान्तस्य साध्यविकलत्वे प्रमाण नास्त्युतास्तीति। **पुरुष सम्बन्धेनेति।** अनेन सूत्रे पुरुषपद जीवसम्बन्धशरीरपरम्। अश्मपद च लक्षणया तदादानादिप्रवृत्तिपरम्। तथा च पुरुषस्य जीवसम्बन्धशरीरस्या-

---

१ **तत्रेति।** द्वितीयाधिकरणकृत्य दर्शयति।

२ **कर्तृत्वेति।** तृतीयाधिकरणसिद्धार्थं दर्शयति।

३ **युक्तमिति।** युक्तमयुक्त वेति मध्वविलास पुस्तकपाठ।

श्मादानादिप्रवृत्तिवदिति सूत्रार्थ इत्युक्तं भवति। सूत्रे तथेत्यस्यावृत्ति.। अन्यया-नामनेकार्थत्वादेकस्य "तत्रे"त्यर्थकत्वं द्वितीयस्य "व्यतिरेकानवस्थितेरित्यु"क्त-परामर्शकत्वम्। तथा च तत्रापि **पुरुपाश्मादावपि**। तथा ईश्वरव्यतिरेकेणा-नवस्थितिः। ततश्च दृष्टान्ताभाव इत्यभिप्रेत्य प्रवृत्तं तत्रापीत्यादिभाष्यं व्याचष्टे—**तत्र शरीरप्रवृत्तावपीति**। अत्राद्ये—पराभिप्रेतमनुमानमाशङ्क्य तत्र श्रुत्यवष्टम्भेन दृष्टान्तस्य साध्यविकलत्वोक्तिं। हैतुकम्मन्यश्चायं श्रुतिं न गणयति इति द्वितीये—युक्त्यासाध्यविकलत्वोक्तिरिति सूत्रकम॥ ४॥

॥ इति पुरुपाश्माधिकरणम्॥ ४॥

---

## (५) ॥ अन्यथानुमित्यधिकरणम्॥

## सू०॥ ओं॥ अन्यथानुमितौ च ज्ञशक्ति-वियोगात्॥ ओं॥ ९-(१०)॥

[2] **निरीश्वरसाङ्ख्यैकदेशान्तरविरोधेति**। प्रकृत्युपसर्जनपुरुषकर्तृत्व-वादेन पूर्वोक्ताङ्गित्वानुपपत्तिरिति पूर्वपक्षोत्थानात्। पूर्वसूत्रोक्ताङ्गित्वानुपपत्त्या सिद्धान्तकरणाद्वानन्तरसङ्गतिरिति भाव। **युक्तमिति**। अत्रेश्वरस्य जगत्कार-णत्वं किमयुक्तमुत युक्तमिति चिन्ता। तदर्थं प्रकृत्युपसर्जनपुरुपकर्तृत्ववादि-समय. किं श्रुत्युक्तेश्वरजगत्कारणत्वापबाधनक्षमो भवत्युत नेति। तदर्थं तदुल्ले-क्षितं विमता प्रवृत्तिरचेतनोपसर्जनपुरुपाधीना, प्रवृत्तित्वादस्मानयनादिप्रवृत्तिवत् इत्यनुमानमनाभासमुत[3] दृष्टान्तस्य साध्यविकलत्वेनाभासमिति। तदर्थं दृष्टान्ते साध्यसत्त्वे बाधकं नास्त्युतास्तीति। "न ऋते त्वत्क्रियते" इति श्रुत्या दृष्टान्तेऽपीश्वराधीनत्वमेव न प्रकृत्युपसर्जनजीवाधीनत्वमित्यत आह—**श्रुतेश्चा-**

---

१. **उक्तिरिति**। शरीरप्रवृत्तिरपि परमात्माधीनेति दृष्टान्त साध्यविकल इति भाव।

२ **निरीश्वरेत्ति**। पूर्वं पुरुषोपसर्जनप्रकृतिकारणवादो निराकृत। अत्र प्रकृत्युपसर्जनपुरुषकारणवादो निराक्रियत इति ज्ञेयम्।

३. Text amended.

चज्ञानादिति । शरीरसम्बन्ध एवायुक्त इति भाष्यं व्याचष्टे—**तर्हि पुरुषस्याज्ञित्वमिति** । तस्य जीवस्य । शक्तिवियोगादिविग्रहमभिप्रेत्य प्रवृत्त तस्यासामर्थ्यादिति भाष्य व्याचष्टे—**शरीरसम्बन्धार्थमिति** । तथा च शरीरसम्बन्धघटकतया ईश्वरस्यावश्यमङ्गीकार्यत्वे जीवस्य वैयर्थ्यमिति भाव । **अन्यतरवैयर्थ्यमिति** । अशक्तत्वपक्षे जीववैयर्थ्यं शक्तत्वपक्षे शरीरवैयर्थ्यमित्यर्थ । **सामान्यदोषेण निराकुर्वत्सूत्रमिति** । यद्यपीदं सूत्रम्

> "न च स्वातन्त्र्यमस्यैव प्रत्यक्षादिविरोधत ।
> हिताक्रियादिदोषाश्च"

**इत्यनुव्याख्यानमात्रशेषत्वेन** व्याख्यातं, तथापि भाष्येऽनीश्वरमतमसमञ्जसमिति सामान्योक्त्यनुसारेणैवमुक्तमिति द्रष्टव्यम् ॥

अत्राद्ये—परोपेक्षितमनुमानमानमाशङ्क्य तस्याभासत्वाय दृष्टान्तस्य साध्यविकलत्वोपपादनम् । द्वितीये—पूर्वमतमहितैतन्मते श्रुत्यादिविरोधेनायुक्तत्वोक्तिरिति सूत्रक्रम ॥ ५ ॥

॥ इत्यन्यथानुमित्यधिकरणम् ॥ ५ ॥

---

## (६) ॥ वैशेषिकाधिकरणम् ॥

**सू०॥ ओं ॥ महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ओं ॥ ११ ॥**

**वैशेषिकादिमतविरोधपरिहारेति** । तथा च प्राधान्येनेश्वरस्य जगत्कर्तृत्वमङ्गीकुर्वतामस्माकं मते "प्रतिषेधाच्च" इति निरीश्वरमतोक्तदोषानवकाश इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भाव । **युक्तमयुक्तमिति** । अत्र विष्णोरनन्तगुणपूर्णत्व किं युक्तमुतायुक्तमिति चिन्ता । तदर्थं वैशेषिकादि समय श्रुत्युक्ततद्बाधनक्षमो भवत्युत नेति । तदर्थं वैशेषिकादय किमुपपत्त

---

१ श्रुत्युक्तेति । वैशेषिकादिजीवाद्युहेतुवाद श्रुतिप्रतिपादितस्य विष्णोरनन्तकल्याणगुणपरिपूर्णत्वस्य बाधने शक्त उत नेति चिन्ताप्रकार ।

भाषिण उतानुपपन्नभाषिणे इति । तदर्थं तत्परिकल्पितप्रक्रियायां साधकबाधकभावाभावौ वर्तेते उत नेति । **जातिमात्राश्रया** इति । गुणे गुणत्वसमवायस्य द्रव्यत्वकर्मत्वाद्यभावस्य च जातिमात्राश्रयत्वमसम्भावीति न वाच्यम् ; संयोगसमवायान्यतरसम्बन्धेन यद्यत्रास्ति तत्तत्रैव स आश्रय इत्युच्यते । समवायाभावयोस्तु संयोगसमवायान्यतरसम्बन्धेन न गुणवृत्तित्वम् । किं तु केवलविशेषणत्वेनैवेति भावः । **संयोगविभागयोरिति** । समुचितयोरिति शेषः । तेन न संयोगविभागयोरतिव्याप्तिः । **कर्म चेति**"च"शब्देनाश्रयगतगुणाश्च । "**आदि**"पदेन कार्यैकार्थप्रत्यासत्तिग्रहणम् । तथा च कार्यगतानां रूपरसगन्धस्पर्शपरिमाणैकत्वानेकत्वपृथक्त्वोत्तरसंयोगविभागगुरुत्वद्रवत्वस्नेहवेगानां कारणगता रूपादयः कारणैकार्थप्रत्यासत्त्या असमवायिकारणम् । संयोगविभागवेगानामाश्रयगतं कर्म । पार्थिवपरमाणुगतानां रूपरसगन्धस्पर्शानां पार्थिवतैजसपरमाणुगतद्रवत्वस्य च तद्गत एव तेजःसंयोगः सर्वत्रैकत्वानेकत्वपृथक्त्वयोराश्रयगतैकत्वैकपृथक्त्वानि । परत्वापरत्वयोराश्रयगतौ दिक्कालसंयोगौ । आत्मविशेषगुणानामात्मगतमनस्संयोगः । शब्दस्याकाशगताः संयोगविभागशब्दाश्च कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्यर्थः । **कर्मणश्च कारणगुणकर्मणी**[2] इति । कर्मसमवायिकारणगतगुणकर्मणी इत्यर्थः । तथा च कर्मण आश्रयगता गुरुत्वद्रवत्ववेगसंयोगाः कर्म च कार्यैकार्थप्रत्यासत्त्या असमवायिकारणमित्यर्थः । द्वितीयादिपतनस्पन्दनादिकं तृतीयादिपतनस्पन्दनादिकं प्रत्यसमवायिकारणमिति मतावष्टम्भेन कर्मग्रहणं कृतम् । वस्तुतस्तु—वैशेषिकमते तृतीयादिपतनस्पन्दनादिकं प्रति वेगस्यैवासमवायिकारणत्वम् । न द्वितीयादिपतनादेः । अत एव **सुधायां** कर्मण आश्रयगता गुरुत्वद्रवत्ववेगसंयोगा असमवायिकारणमित्येवोक्तम् । **परमाणुद्व्यणुकगतमिति** । उपलक्षणमेतत् । तूलपिण्डाद्यवयवगतपरिमाणं तूलपिण्डादिगतपरिमाणगतपरिमाणकारणं न भवतीत्यपि ग्राह्यम् । अत एव तत्कारणप्रचयसंग्रहार्थसंख्यादिनैवेत्यादिनैवेत्यादिपदप्रयोगः । शिष्ट-

---

१. **भाषिण इति** । ईश्वरोष्टगुण इत्यादिवादिनामुपपन्नभाषिता न शक्यसाधनेति भावः ।

२. **कर्मणी इति** । 'कार्यगतकर्मणश्च इति' "मध्वविलास" पुस्तक पाठः ।

**पड्गुणायोग्य** इति। नित्ययथार्थज्ञानस्येश्वरस्य मोहासम्भवे तत्प्रभवरागद्वेषयोरयोगेन तज्जन्यधर्माधर्मयोरभावात्तन्निमित्तकसुखदु खयोर्नित्यज्ञानत्वादेव स्मरणलक्षणकल्पकाभावेन भावनायाश्चायोगात् शिष्टपड्गुणायोग्य इत्यर्थ । **यथा महत्त्वादीर्घत्वाच्चेति** । "कारणबहुत्वात् कारणमहत्त्वात् प्रचयविशेषाच्च महत्" इति कणादसूत्रानुसारेण सूत्रे महदित्यादिभावप्रधानो निर्देश । तत्र तस्यैवेति लक्षणस्य प्रायिकत्वात् पञ्चम्यन्ताद्वतिरित्यभिप्रेत्य भाष्ये महत्त्वादित्याद्युक्तमिति भाव । **न तावदिति। नापि बाधकभावाभावाभ्यां विशेष इति तावच्छब्दः।** अत एव **पारिमाण्डल्यादेरारम्भकत्व**—इति बाधकमाशङ्क्य परिह्रियते—**अवर्जनीयप्रत्यासत्तिरेवेति** । न तु सामर्थ्यावधारणमिति लक्षणाभाव एवेत्यर्थ । **नास्ति नोहानिरिति**[1]। द्व्यणुकादिसर्वकार्याणामापेक्षिकाणुत्वस्य सत्त्वेन तच्छब्दवाच्यत्वस्येष्टत्वादिति भाव ॥

ननु परमाणुद्व्यणुकगतमेव परिमाणमणुशब्दवाच्यं न त्र्यणुकादिसर्वकार्यगत कथमिष्टापत्तिरित्यत आह—**सङ्केतमात्रमिति** । अवर्जनीयप्रत्यासत्तिर्नेत्यत्र हेत्वन्तरमाह—**द्व्यणुकादिपरिमाण** इति । तथा चागत्या पारिमाण्डल्यादेरेव कारणत्वमिति न सामर्थ्यावधारणाभाव इति भाव ॥

ननु सङ्ख्यादिनैव तज्जन्मेत्युक्तत्वात् कथ कारणान्तराभाव इत्यत
आह—**सङ्ख्यादेरिति** । त्र्यणुकादिबहुत्वसङ्ख्याप्रचययोश्चतुरणुकादिगतमह-
त्त्वारम्भकत्वप्रसङ्गादित्यर्थ । युतसिद्धतयेत्यर्थ । द्व्यणुकादिगतरूपकार्यस्याप्रकृत
त्वात् कथ तदभाव इति मौत्रस्तच्छब्दस्तत्कार्याभाव इति व्याख्यात इत्यत
99 आह—**परिमाणाभिधानसन्निधापितमिति** । **न चैवमतिप्रसङ्ग** इति ।
द्रव्यमात्राङ्गीकारेण गुणादेरप्यपलाप स्यादित्यर्थ । **तस्य सम्बन्धनिबन्धन-
त्वेति** । महत्त्वतदाश्रयाकाशादिगतविशेषणविशेष्यभावस्येत्यर्थ । तथा चाका
शादितद्गतमहत्त्वयोर्विशेषणविशेष्यभावनियामक सम्बन्ध सिध्यन् नित्य एव
सेत्स्यतीति न साध्यशून्य[2] निदर्शनमिति भाव ॥

---

१. **नास्तीति** । "आद्ये नास्ति हानि" इति "मध्वविलास" पुस्तक पाठ ।

२ **शून्यमिति** । न दृष्टान्त साध्यविकल इति भाव ।

ननु विशेषणविशेष्यहेतोर्भावमात्रनिष्ठत्वेन विशेषणान्न घटाभावभूतल
निष्ठविशेषणविशेष्यभावे व्यभिचार इत्यत आह—**विशेषण इति**। एवमपि
घटादिकं ज्ञातमिष्ट कृतं चेत्यादिविशेषणविशेष्यभावे व्यभिचार स्यात्।
तद्व्यावृत्त्यर्थं पुनर्विशेषणदाने व्यभिचारस्थलव्यतिरिक्तत्वे सतीति सर्वत्र विशेषण-
दानप्रसङ्ग इति भाव ॥

"नित्येच्छत्वात् परेशस्य परमाणुसदात्वत ।
अदृष्टकाल्योश्चैव भावात् कार्यं सदा भवेत् ॥"

इत्यनुव्याख्यानानुसारेण नित्यत्वात् परमाणूनामिति भाष्यमुपलक्षणपरमित्यभि-
प्रेत्य नित्यत्वात् परमाणूना नित्यमेव कार्यं स्यादित्यश व्याचष्टे—**परपक्षे
कार्यमित्यादिना। तन्नित्यत्वमपीति।** अनेन सौत्र"श्च"शब्द "अप्य"र्थक-
विपर्ययश्चेत्यन्वित इत्युक्तं भवति। **रूपादिमत्त्वहेतुनेति**। भौतिकत्वेन विशे-
षणान्नेश्वरादौ व्यभिचार । **अप्रामाणिकत्वेनापीति**। तथा च सौत्र"श्च"शब्द P 10
पूर्वोक्तसमुच्चयार्थ इति भाष्याभिप्राय इति भाव । **तद्विरुद्ध चेति**। अनेना-
नुक्तसमुच्चयार्थोऽपि "च"शब्द इति भाष्याभिप्राय इत्युक्त भवति। कथमनेन
श्रुतिविरुद्धत्वमुक्तमित्यतस्तत्पूर्वार्धोदाहरणपूर्वकमाह—**अहमासमिति। सृगाल-
वाक्यमिति**। सृगालरूपेन्द्रवाक्यमित्यर्थ । अनेन तर्कविद्यानुरागस्य सृगाल-
जन्महेतुत्व सूचित भवति। अत्र यद्यपि समवाय्यसमवायिनिमित्तभेदादिति
परकीयकारणनिर्देशानुसारेण समवायाभ्युपगमादिति सूत्रस्य प्राथम्य भवेत्।
तथाप्यस्य प्राथम्ये समवायिकारणनिरासे तत्प्रत्यासन्नासमवायिकारणमपि निर
स्तमेवेति पुनस्तन्निराकरणस्यानावश्यकत्वे परपरिकल्पितासमवायिकारणावान्तर-
वैचित्र्यं न दूषितं स्यात्। अतस्तत्प्रक्रियाया आत्यन्तिकाप्रामाणिकत्वप्रदर्शनाय
आद्ये—सूत्रे असमवायिकारणवैचित्र्यनिरासोक्ति । द्वितीये—तदभाव इति
तच्छब्देन पूर्वसूत्रस्थमहदादिशब्दोक्तपरिणामसन्निधापितद्व्यणुकादिकार्यपरामर्श-
सौकर्याय निमित्तकारणनिरासोक्ति । तृतीये—अवशिष्टसमवायिकारणनिरा-
सोक्ति। एवं कारणत्रयनिरासेन पराभिमतसृष्टिं न्यक्कृत्य, चतुर्थे—प्रलय-

---

१ तद्विति। पराभिमतपरमाणुनित्यत्वमपास्यतीति सूत्रकार इति भाव ।

निरासोक्ति । पञ्चमे—परमाणूना पूर्वसूत्रोक्तनित्यत्वविपर्ययसाधनम् । षष्ठे—पञ्चमोक्तानुमानस्याप्रयोजकत्वसिद्धसाधनत्वशङ्कोद्धार । सप्तमे—वैशेषिकमतस्याप्रामाणिकत्वप्रमाणविरुद्धत्वयोरुक्तिरिति सूत्रक्रम ॥ ६ ॥

॥ इति वैशेषिकाधिकरणम् ॥ ६ ॥

---

## (७) ॥ समुदायाधिकरणम् ॥

### सू०॥ ओं ॥ समुदाय उभयहेतुकेऽपि नदप्राप्तिः ॥ ओं ॥ १८ ॥

एतदधिकरणस्य पूर्वाधिकरणेनानन्तरसङ्गतिमाह—**बौद्धानामिति । सौत्रान्तिकवैभाषिकमतमिति ।** सौत्रान्तिकमते रूपादिप्रपञ्चस्यानुमेयत्वाङ्गीकारेण वैचित्र्यसत्त्वेऽप्यैधिकरणदूषणाशस्योभयमतसाधारण्येनोभयमतमप्यत्र निषिध्यत इति भाव । **युक्तमयुक्तं वेति ।** अत्रेश्वरस्य जगत्कारणत्व किं न युक्त उत युक्तमिति चिन्ता । तदर्थं वैभाषिकसौत्रान्तिकसमय श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं सौत्रान्तिकवैभाषिकौ किमुपपन्नभाषिणावुतानुपपन्नभाषिणाविति । तदर्थं तत्परिकल्पितपदार्थक्षणिकत्वादिप्रक्रियाया साध्यसाधकभावाभावौ वर्तेते उत न वर्तेते इति । **रूपविज्ञानेति ।** रूपरसगन्धस्पर्शशब्दात्मका परमाणवो रूपस्कन्ध । निर्विकल्पक ज्ञान विज्ञानस्कन्ध । वेदनापरपर्यायं दु खं चैकस्कन्ध । सुख दु खाभाव एव । सुखमपि वेदनास्कन्ध इति केचित् । सविकल्पकज्ञान सञ्ज्ञास्कन्ध । समनन्तरप्रत्यय संस्कारस्कन्ध इति द्रष्टव्यम् । वैशेषिकादिमताभिप्रायेणाह—**तदारब्धस्येति ।** भाष्ये सौत्रा"पि"शब्दसमुच्चेयप्रदर्शनाय समुदायस्यैकहेतुत्व न

---

१ **अधिकरणेति ।** "अधिकरणदूष्याशस्य" इति काणियूरस्वामिना पुस्तके दृश्यते ।

२ **युक्तमिति ।** "युक्तमयुक्त वेति सदेह" इति "मध्वविलास"पुस्तकपाठ ।

३ **रूपेति ।** पञ्चस्कन्धात्मकमिद सर्वजगत्समुदायमात्रमवतिष्ठते । नाऽवयवी नाम कश्चिद्वियत इति विचित्रैषा प्रक्रिया सकलप्रमाणबहिर्भूतेति विभावनीयम् ।

युज्यत इत्युक्तम् । एकहेतुकत्वमेकपरमाणुहेतुकत्वमित्यर्थः । उभयहेतुकेऽपीत्यत्रोभयशब्दो मिलितानेकपरमाणुपर । अङ्गीकृते सतीति शेषः । तदप्राप्तिरित्यत्र तच्छब्दः समुदायपरामर्शकः । अन्यथेत्यस्य मिलितानेकहेतुकत्वानङ्गीकारे विरलानेकपरमाणुहेतुकत्वाङ्गीकार इत्यर्थ इति भाष्याक्षरार्थमभिप्रेत्य तदभिप्रायमाह—**किमयं समुदाय** इत्यादिना ।

ननु येभ्यो मिलितानेकपरमाणुभ्यो समुदायो, न तत्समुदायजन्याः । किं तु समुदितपरमाण्वन्तरादिति नान्योन्याश्रय इत्यत आह—**अतिपीडायामिति । तदङ्गीक्रियत एवेति ।** नात्र समुदायो नाम परमाणूना सयोग. । अनङ्गीकारात् । नापि द्रव्यान्तरम् । तस्यैवावयवित्वापातात् । किं त्वनेकसङ्ख्यारूप एव । स च विरलेष्वपि परमाणुषु सर्वदास्तीति भाव । **व्यवहारादेरिदं चेदं चेति ।** अनेकत्वसङ्ख्याया अपेक्षाबुद्धिव्यङ्ग्यत्वेन तत्प्रतीतिव्यवहारयोरिद चेदं चेति परस्परापेक्षाबुद्ध्यधीनत्वादित्यर्थ । अनेनेतरप्रत्यय अपेक्षाबुद्धिर्यस्य व्यवहारादे स इतरेतरप्रत्ययस्तस्य भावस्तत्त्वम् । पष्ठ्यर्थश्च जन्यजनकभाव इति सूत्राक्षरयोजना सूचिता । "तच्च सामीप्यहेतुकम्" इत्यनुव्याख्यानं मनसि निधायाऽऽह—**परस्परापेक्षाचेति ।** विप्रकृष्टे इदं चेदं चेति अपेक्षाबुद्धेरदर्शनादिति भाव । **पुरुषस्यापि तथात्वमिति ।** विषयवदात्मनो- P 10
ऽपि क्षणिकत्वात्[1] परमाणुदर्शनमपेक्षाबुद्धि समुदायव्यवहार इत्येतेपामेकविषयत्वमिवैकाधिकरणत्वमपि न युक्तमित्यर्थ । **विशेषकार्योत्पत्तिमपि निराकुर्वन्सूत्रमिति ।** विसदृशकार्योत्पत्तिमपीत्यर्थ । अत्रैक कार्यमुत्पाद्य तस्य विनष्टत्वादित्यादिभाष्यानुसारेण द्वितीयसूत्र विरलपरमाणुकार्याणा मिलितपरमाणूनामपेक्षाबुद्धिविषयत्वादिनिराकरणपरतया व्याख्याय कार्योत्पत्तावेवेत्यादिभाष्यानुसारेण विसदृशकार्योत्पत्तिनिरासकतया व्याख्यातेऽपी"ति चेत कार्यसम्भूतिमात्रव्यापृतिकारणम् ; न तु कार्यविशेषेषु व्यापृत कारण भवेत्" इत्यनुव्याख्याने कारणानि खलु स्वसदृशकार्यजननव्यापाराणि, न तु विसदृशकार्यजनने व्यापृतानीति । सुधाया च विसदृशकार्यरूपविशेषादिकार्योत्पत्तिनिरासकतया द्वितीयसूत्रं प्रकारान्तरेण व्याख्याय,

---

१ **क्षणिकत्वादिति ।** क्षणिकत्वादात्मनोऽपि सर्वव्यवहारोच्छेदप्रसङ्गादिति भाव ।

" उत्तरोत्पत्तिमात्रेण विनाशात् पूर्ववस्तुनः ।
न संस्कारार्पकत्वं च युज्यते कस्यचित् क्वचित् ॥"

**इत्यनुव्याख्याने,** अथ मतं कारणक्षणाः कार्येषु संस्कारानर्पयन्ति अतः पूर्वात्मसंस्कारयोगिनाम् उत्तरोत्तरेषामात्मनामनुमानादिव्यवहारा इत्येतन्निराकरणाय सूत्रमुत्तरोत्पादे चेत्यादिसुधायां तृतीयसूत्रं बौद्धमते [1]संस्कारनिरासकतया प्रकारान्तरेण व्याख्यातमिति ज्ञेयम् । **विशेषकार्योत्पत्तिश्चेति** । अनेन सौत्रश्चशब्दोऽध्याहृतसाध्येनान्वितः । अत एव भाष्ये विशेषकार्योत्पत्तिश्चेत्युक्तमित्युक्तं भवति । न विशेषकार्योत्पत्तिरिति भाष्योक्तसाध्ये कार्योत्पत्तावेव कारणस्य विनाशादित्यस्य साक्षाद्धेतुत्वासम्भवात्, " अतः सामान्यरूपत्वम् कार्याणामपि सर्वशः " **इत्यनुव्याख्यानं** मनसि निधाय साक्षात् साधकं हेतुमाह— **कारणस्येति** ॥

" अतो नियत्या यत्किञ्चिद्यस्य कस्यापि कारणम् "

**इत्यनुव्याख्यानं** मनसि निधायाह—**अन्यथेति** । **उत्पाद्यैवेति** । अनेन सौत्र"श्च"शब्द "एव"कारार्थः । **यथाश्रुतोऽन्वितोऽपीति** । भाष्ये कार्योत्पत्तावेवेत्यनेन व्याख्यात इत्युक्तं भवति । **अन्यथा क्षणिकत्वविरोध** इति । न च स्वतः सदृशकार्यजननसमर्थमपि कारणमदृष्टसहकृतमादावेव विसदृशकार्यमुत्पादयतीति न क्षणिकत्वेऽपि विरोध इति वाच्यम्; तथासत्यदृष्टसहकृतात् पटादपि कदाचिद् घटोत्पत्तिप्रसङ्गादिति भावः । **एवमिति** । विरलपरमाणुभ्यो मिलितपरमाणूत्पत्तिनिरासे समुदायस्यैवासम्भवेन दर्शनापेक्षाबुद्ध्यादेरसम्भवादिति[2] भाव. । कारणे विद्यमाने कार्यमुत्पद्यत इति कोऽर्थः ? एकस्मिन् क्षणे स्वयमात्मानं लब्ध्वा कार्योत्पत्तिक्षणेऽपि कारणं वर्तत इति वार्थः । उत

१. **संस्कारेति** । सर्वानुभवानां क्षणिकत्वात्तादृशानुभवक्षणाऽव्यवहितोत्तरक्षणे ध्वस्तत्वात् संस्कारार्पकत्वमित्यादीनामभावान्न कोऽपि व्यवहारो युज्यत इति भावः ।

२ **असम्भवादिति** । विरलपरमाणुनाशान्मिलितपरमाणूत्पत्तिवादम्याऽप्रामाणिकत्वादिति बोध्यम् । सर्वस्य क्षणिकत्वान्मेलनस्य मेलनत्वेन ज्ञानात् पूर्वमेव नष्टत्वादिति भाव. ।

कार्यं कारणसत्तासमानकालीनसत्ताकमिति विकल्पं मनसि निधायाद्यपक्षोत्तरत्वेन समग्रं भाष्यं योजयति—**एकस्मिन् क्षण इति। सर्वकार्याणां यौगपद्यमिति।** घटिकादिस्थूलकालावच्छेदेन युगपदवस्थानं स्यात्। तथा चाल्पतरकाले कुलालशालापूर्तिप्रसङ्ग इति भावः। इदानीं विनाशकारणाभावादित्यंशं परित्यज्य यौगपद्यं सर्वकार्याणामिति भाष्यं द्वितीयपक्षोत्तरत्वेनापि व्याचष्टे—**तथा यस्मिन् क्षण** इति। क्षणिकं हि कारणम्। कार्यं च तत्सत्तासमानकालीनसत्ताकं चेत् कार्यकारणयोः सहोत्पाद इत्युक्तं स्यात्। तत् कार्याणामप्ययमेव न्याय इति तत्समानभाविनामशेषकार्याणामेकक्षणावस्थानरूपं यौगपद्यं स्यात्। तच्च प्रत्यक्षादिविरुद्धमिति भावः। अत एव **सुधायाम्।**

"**यौग**पद्यं सति भवेदुत्पाद्यानामशेषतः।"

**इत्यनुव्याख्यानं** तत्र विनाशकारणाभावादित्यस्याभावात्। द्वितीयपक्षनिरासपरत्वेनैव व्याख्यातम्। निर्गत सन्तानो यस्मान्नाशात् स निःसन्तान इति विग्रहमभिप्रेत्य तात्पर्यमाह—**सन्तानमन्तरेणेति।** ससन्तानशब्दार्थमाह—**यश्चेति।** अत्र यद्यपि—

"बुद्धिपूर्वविनाशो हि प्रतिसङ्ख्यानिरोधधीः।
अबुद्धिपूर्वकस्तेषां निरोधोऽप्रतिसङ्ख्यया॥"

इति बौद्धोक्त्यनुसारेण सूत्रे प्रतिसङ्ख्याऽप्रतिसंख्यानिरोध इति निर्देशः कृतः। तथाप्यबुद्धिपूर्वकस्य प्रतिक्षणं जायमाननिस्सन्ताननाशस्य प्रथमभावित्वात् बुद्धिपूर्वकस्य घटादेरात्यन्तिकविनाशरूपससन्तानरूपस्यानन्तरभावित्वात् कार्यक्रममनुसृत्य निस्सन्तान ससन्तानश्चेति भाष्ये व्यत्यासेन व्याख्यातमिति भावः[1]। **प्रतिक्षणं कारणं कार्यं निर्वर्त्येति।** अन्यथा ससन्ताननाशोत्पत्तेरिति भावः। **स्वकार्यवियोगकाल इति।** कार्योत्पत्त्युत्तरक्षण इत्यर्थः। **कारणं सदेवेति।** असतः कार्येण वियोगायोगादिति भावः। **विविक्ततयेति।** विविक्तव्यवहारविषयमिलितपरमाणुजन्यपरमाणूनां विरलतयेत्यर्थः। **निरस्तमिति।** "उत्तरोत्पादे च

---

१. **भाव इति।** "प्रतिसङ्ख्या" इति सौत्रक्रमस्य भाष्ये क्रमभङ्गुल्लङ्घनमिति विशदयति।

02 पूर्वनिरोधादि"ति विसदृशकार्यजनकत्वनिराकरणेनेत्यर्थ । **तत्र तदनभ्युपगमादिति ॥**

"आकाशो द्वौ विनाशौ च नित्यं त्रयमसंस्कृतम्"

इति बौद्धोक्तिरिति भाव । **त्वदनुमानेऽसिद्धिरित्यादि ।** 'उभयथा च दोषादि"त्यत्र प्रपञ्चे प्रदीपादौ च बौद्धाङ्गीकृतार्थक्रियाकारित्वस्य दूषितत्वादिति भाव । **सा चाकाशे न नास्तीति**[1] । किं त्वस्त्येव ततश्च नास्मदीयहेतौ त्वदुक्त साधनवैकल्यमिति भाव । **अन्यथैकक्षणेऽपीति ।** एकक्षणवर्तिनोऽपि घटस्य पुरुषभेदेन ज्ञातत्वाज्ञातत्वयोर्विरुद्धधर्मयोर्दृष्टेर्भेद स्यादित्यर्थ **एतेनेति ।** प्रतिज्ञाभ्रान्तित्वनिराकरणेनेत्यर्थ । तथा च यद्विरुद्धधर्माधिकरण तन्नाना यथा घटपटौ । तथा चाय प्रदीप इत्यत्र प्रदीपस्य भेदमात्रसाधने सिद्धसाधनता स्यात् । पूर्वोत्तरक्षणावस्थायिप्रदीपस्य भेदाभेदाङ्गीकारेण भेदस्यास्माभिरप्यङ्गीकृतत्वात् । तावता क्षणभङ्गासिद्धे । तस्मादभेदाभाव साध्य । तथा च पूर्वोत्तरक्षणयोरभेदावगाहि सोऽय दीप इति प्रत्यभिज्ञाबाध । न च सा भ्रान्ति । बाधकाभावदिति भाव । **दृष्टान्ताभावादिति ।** मुसलाहतैकक्षणवर्तिपरमाण्वात्मकघटरूपदृष्टान्तस्वरूपे तत्र साध्यसाधनयोश्च मम विप्रतिपत्तेरित्यर्थ ॥

अत्राद्ये—घटादिव्यवहारालम्बनत्वेन परपरिकल्पतपरमाणुसमुदायानुपपत्त्युक्ति । द्वितीये—समुदायानुपपत्त्यभावमाशङ्क्य कारणस्य विसदृशकार्यजनकत्वमभ्युपेत्यापि तदुद्धार । तृतीये—विसदृशकार्यजनकत्वस्याप्यसम्भवोक्ति । चतुर्थे—प्रतिक्षणोत्पत्तेरेव निरासोक्ति । पञ्चमे—पराभिमतनाशनिरासोक्ति । षष्ठे—क्षणिकत्वे पराभिमतार्थापत्तिभङ्ग । सप्तमे—तत्रैव पराभिमतानुमानस्य सत्प्रतिपक्षत्वोक्त्या निरास । अष्टमे—तस्यानुमानस्य प्रत्यभिज्ञाप्रत्यक्षबाधोक्तिरिति[2] सूत्रक्रम ॥ ७ ॥

॥ इति समुदायाधिकरणम् ॥ ७ ॥

---

१ **नास्तीति ।** नास्तीति-न परं त्वस्तीति भाव । अथवा-न-नास्तीति परिहागप्रश्न तस्योत्तरमस्त्येवेति ।

## (८) शून्याधिकरणम् ॥

## सू० ॥ ओं ॥ नासतो दृष्टत्वात् ॥ ओं ॥ २६ ॥

**शून्यमतविरोधेति** । पञ्चस्कन्धात्मकप्रपञ्चस्य सत्त्वे क्षणिकत्वस्थायित्वचिन्ता । तत्सत्त्वमेव नास्ति । कुतस्तत्क्षणिकत्वादिचिन्तावसर इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भावः । **युक्तमिति** । अत्र परमेश्वरस्य जगत्कारणत्वं किं न युक्तमुत युक्तमिति चिन्ता । तदर्थं शून्यसमयः किं श्रुत्युक्ततदपवाधनक्षमो भवत्युत नेति । तदर्थं शून्यवादिपरिकल्पितं शून्यस्य[1] जगत्कारणत्वं किं सम्भवत्युत न सम्भवतीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । तदर्थं शून्यस्य जगत्कारणत्वसाधकमनुमानमनाभासमुत तर्कपराहतत्वेनाभासमिति । तथा तदभिमतं शून्यस्य जगदारोपाधिष्ठानत्वं सम्भवत्युत नेति । तदर्थं जगतः किमसत्त्वमुत सत्त्वमिति । तदर्थं जगतोऽसत्त्वाङ्गीकारे सत्त्वादिति प्रतीतिविरोधो न प्राप्नोत्युत प्राप्नोतीति । तदर्थं जगद्विषयकसत्त्वप्रतीतिः स्वाप्नादिपदार्थसत्त्वप्रतीतिवत् भ्रान्तिरुत प्रमेति । तदर्थं तद्वदत्र बाधकमस्त्युत नास्तीति ॥

ननु प्रमाणाभाव एव प्रमेयाभावं साधयति । न पुनः प्रमाणविशेषाभावः । मा भूदस्मदादिप्रत्यक्षव्यावृत्त्या धर्माद्यभावसिद्धिः । तथा च कथं सूत्रभाष्ययोरदृष्टत्वादिति प्रत्यक्षाभावकथनं व्यभिचारादित्यतो नायं साक्षाद्धेतुः । किं तु हेतुसाधकं हेतुरित्यभिप्रेत्यापेक्षितं साक्षाद्धेतुमध्याहरति—**तत्प्रमाणाभावादिति** । कथं तत्र प्रामाणाभाव इति जिज्ञासायाम् अनुमानागमयो प्रत्यक्षमूलत्वेन ततः प्रत्यक्षमेव वरं प्रमाणमिति तदभाव एव सूत्रभाष्ययोरुक्तमभिप्रेत्याह—**न तावत् प्रत्यक्षमत्रास्तीति** ॥

ननु तर्हि सूत्रभाष्ययोरनुमानागमाभावोऽपि वक्तव्यः । यत्किञ्चिद्विशेषाभावेन सामान्याभावसाधनायोगादिति चेत् , न ; प्रत्यक्षेण[2] क्वचित् दृष्टमेवानु-

---

१. **शून्यस्येति** । शून्यस्य शून्यत्वं जगत्कारणत्वं चेति विप्रतिषिद्धमिति भावः ।

२. **प्रत्यक्षेणेति** । शून्यस्य प्रत्यक्षेणाऽगृहीतत्वान्नानुमानेनापि तस्य ग्रहणम् । प्रत्यक्षदृष्टस्यैवार्थस्य साधनमनुमानेनेति भावः । प्रत्यक्षमुपजीव्यम् अनुमानमुपजीवकम् । उपजीव्यप्रमाणाऽप्रतिपन्नस्योपजीवकप्रमाणेन साधनमशक्यमिति द्रष्टव्यम् ।

मानेन साधनीयमिति प्रत्यक्षस्यानुमानोपजीव्यत्वात् प्रत्यक्षाभावोक्त्यैतदभावस्यापि लाभाद्वेदादिप्रामाण्यस्य शून्यवादिनां तदीयागमप्रामाण्यस्य चास्माकमनिष्टत्वेनागमस्यावक्तव्यत्वाच्चेत्यभिप्रेत्याह—**नाप्यनुमानमित्यादिना** । ननु न शून्याज्जगदुत्पत्तौ प्रमाणाभावः ; अनुमानस्यैव तथात्वात् । न च दृष्टान्ताभावदोषः ; तावता दृष्टानुमानानुपपत्तावपि विमतं सकारणकं कार्यत्वादिति सामान्यतः कारणसिद्धौ कारणं प्रलयेऽसद्भवितुमर्हति वस्तुत्वादिति तस्य सत्त्वनिषेधे परिशेषादसत एव जगत्कारणत्वसिद्धेरित्यभिप्रेत्य शङ्कते—**नन्वदृष्टमपीति** । **कल्प्येतेति** । सामान्यपरिशेषाभ्यामिति शेषः । अनुमानेन तर्कपराहतिप्रतिपादकतया सूत्रभाष्ये योजयति—**एवं तर्हीति** । सौत्रहेत्वर्थगर्भमुदासीनानामित्येतदुपेक्षणीयबुद्धिविषयत्वमुच्यत इति भ्रान्तिवारणाय भाष्ये व्याख्यातम् हेयोपादेयबुद्धिवर्जितानामिति । तदयुक्तम् । अचेतनत्वेन[1] तद्वर्जितानामपि तन्त्वादीनां हेतुत्वादित्यतस्तदभिप्रायमाह—**तेषामिति** । न चैनमुपेक्षणीयबुद्धिविषये व्यभिचारः; तद्बुद्धिविषयतावर्जितत्वस्यापि विवक्षितत्वादिति भावः । भाष्यस्थं खपुष्पाद्यन्यबौद्धाभिमतशून्यप्रतिपादकमन्यत्रेति पदं कार्यसिद्धिरित्यनेनानुपक्तेनान्वयदर्शनार्थं पञ्चम्यन्तत्वेन व्याचष्टे—**अन्यत्र**
P. 103 **शून्यादिति । चशब्दाभिप्रायेणेति** । न स्वमादिवदित्यत्र हेत्वन्तरस्यानुक्तत्वेन "च"शब्दस्योक्तसमुच्चायकत्वासम्भवादिति भाष्याभिप्राय इति भावः ॥

अत्राद्ये—शून्यस्य जगत्कारणत्वाभावे प्रमाणाभावरूपहेतुमभिप्रेत्य तत्साधकतयेतरप्रमाणमूलभूतप्रत्यक्षाभावोक्तिः। द्वितीये—शून्यस्य जगत्कारणत्वे पराभिमतानुमानस्य तर्कपराहत्युक्तिः । मृद्घटादिवत् शून्यप्रपञ्चयोः कार्यकारणभावाङ्गीकारे स्याद्दृष्टविरोधः । शून्यमेव जगदाकारेणावभाति ; न परमार्थतो जगदस्तीत्यङ्गीकारे तु नोक्तदोष इत्याशङ्कापरिहाराय। तृतीये—जगतोऽसत्त्वाङ्गीकारे सदिति प्रत्यक्षविरोधोक्तिः। प्रपञ्चसत्त्वमाहिप्रत्यक्षस्य स्वमादिप्रतीतिवत् भ्रान्तित्वशङ्कानिरासाय, चतुर्थे–तयोर्बाधकासदसद्भावरूपवैलक्षण्योक्तिरिति सूत्रक्रमः॥ ८ ॥

॥ इति शून्याधिकरणम् ॥ ८ ॥

---

१. अचेतनत्वेनेति । चेतनाचेतनत्वविनिगमकः पाठो [illegible] । मत्कुणादीनां

## (९) ॥ अनुपलब्ध्यधिकरणम् ॥

## सू०॥ ओं ॥ न भावोऽनुपलब्धेः ॥ ओं ॥ ३० ॥

**विज्ञानवादिमतविरोधेति** । योगाचारैर्नमाध्यमिकवत् प्रपञ्चस्यारोपितत्वमङ्गीक्रियते ; किं तु सद्रूपज्ञानात्मकत्वमेव । तत्र न पूर्वोक्तदोषावकाश इति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव. । **युक्तमिति** । अत्र हरेर्जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं विज्ञानवादिसमयः श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं विज्ञानवादिपरिकल्पितं प्रपञ्चस्य विज्ञानात्मकत्वं किं सम्भवत्युत नेति । तदर्थं विज्ञानात्मकत्वे जगतः प्रमाणाभावतद्विरोधौ नस्त उत स्त इति । **विज्ञानात्मकं जगदित्यत्रेति** । नाभाव इति, पूर्वसूत्र इवात्रापि भवतीति कर्तृसाधनेन भावशब्देन सद्रूपं ज्ञानमुच्यते । विज्ञानवादे ज्ञानादन्यस्यासत्त्वात् । ज्ञानमित्युक्त्वाभाव इत्युक्तिस्तु "नाभाव उपलब्धे." इति शून्यवादिनं प्रत्युक्तदोष, नास्माकमिति पूर्वपक्षोत्थानसूचनार्थमिति भाव· ॥

ननु ज्ञानजगतोरभेदे प्रत्यक्षाभावेऽप्यनुमान स्यादित्याशङ्क्य निराकरोति—**न चेति** । **भेदप्रतीतिविरोधादिति** । अनेनानुपलब्धेरिति सौत्रो हेतुरुपलब्धिविरोधादिति प्रकारान्तरेण व्याख्यात । **इतरेतराश्रयत्वमिति** । प्रत्यक्षस्य भ्रान्तित्वेऽनुमानप्रामाण्यम् , तस्मिंश्च प्रत्यक्षस्य भ्रान्तित्वमित्यन्योन्याश्रयत्वमित्यर्थ. । **स्ववृत्तिविरोधेनेति** । स्वस्यैव क्रियात्वेन कर्मत्वेन वृत्तिविरोधादित्यर्थ. । एतच्च मतान्तराभिप्रायेण । अत एव दोषान्तरमाह—**अज्ञान इति** । ज्ञानप्रागभावादौ ज्ञानावरणसवृत्तौ न व्यभिचार । न हि ज्ञानाभावादिरपि ज्ञानं, विरोधादिति भाव । बौद्धैन श्रुत्यादिप्रामाण्यानङ्गीकारात् तद्विरोधाभिधानमसङ्गतमित्यत आह—**एतच्चेति** । अत्राद्ये—ज्ञानात्मकं जगदि-

---

१. **योगाचारैरिति** । वैभाषिक-सौत्रान्तिक-माध्यमिकमतनिरासानन्तर योगाचारमतमधुना निराक्रियत इति द्रष्टव्यम् ।

२. **विज्ञानेति** । "तन्मात्रमेवेद जगन्न तु ततोऽतिरिक्तमस्ति" इति "मध्वविलास"—पुस्तकपाठ ।

त्यत्र प्रमाणाभावोक्ति । द्वितीये—तद्विरुद्धधर्माधिकरणत्वरूपानुमानविरोधोक्ति । तृतीये पूर्वमतद्वयसहितैतन्मते प्रमाणाभावतद्विरोधयोरुक्तिरिति सूत्रक्रम ॥ ९ ॥

॥ इत्यनुपलब्ध्यधिकरणम् ॥ ९ ॥

---

## (१०) ॥ नैकस्मिन्नधिकरणम् ॥

### सू०॥ ओं ॥ नैकस्मिन्नसम्भवात् ॥ ओं ॥ ३३ ॥

[1]**जैनमतनिरोधेति** । शून्यवाद्युक्तमसत्त्व विज्ञानसत्त्ववाद्युक्तसत्त्वं च स्यादिति वदता जैनाना तत्पक्षोक्तपूर्वपक्षोत्थानादनन्तरसङ्गतिरपीति भाव । **युक्तमिति** । अत्र हरेर्जगत्कारणत्व किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं जैनसमय श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं तत्परिकल्पित प्रपञ्चस्य सत्यत्व जीवस्य देहपरिमाणत्व च किं युक्तमयुक्तमिति । तदर्थं जीवकायपरिमाणत्वस्थूलाण्वादिदेहप्राप्तौ सर्वशरीरयापिचेष्टाभावातिरेकौ न प्राप्नुत [2]उत प्राप्नुत इति । तदर्थं जीवस्य तदा प्राप्तस्थूलाण्वादिशरीरमात्रपरिमाणत्वमङ्गीकर्तुं शक्यमुताशक्यमिति । तदर्थं देहपरिमाणत्वाभावे शरीरावच्छेदमन्तरेण स्वत परिमाणाभाव प्राप्नोत्युत नेति । तदर्थं देहमन्तरेण परिमाणाङ्गीकारेण *जीवनि स्वन्दत्व देहनित्यत्व वा न प्राप्नोत्युत प्राप्नोतीति ॥*

"आह क्षपणको विश्वं सदसद्द्वयमद्वयम् ।
द्वयाद्वयमतत्सर्वं सप्तभङ्गि सदातनम् ॥"

---

१ जैनेति । अनेकान्तवादिनो जैना । जगत् शून्यकारणक स्यात्, अथ न स्यात् । तस्य सर्वं स्यादगत्यमपीत्यादिप्र स्वनिष्टन्ते जैना । तदनेकान्तमतमत्र निरस्यते भगवता सूत्रकृता ।

२ उतेति । Text restored.

इत्यनुव्याख्यानं मनसि निधायाह—**सदसदुभयमिति**। तत्र सदित्येकः
प्रकार। असदिति द्वितीयः। उभयं सदसदात्मकमिति तृतीय। उभय-
विलक्षणं सदसद्विलक्षणमिति चतुर्थ। एतावता सत्स्यादित्यादिभाष्यं यथा-
श्रुतं व्याख्यातं भवति। सदसदुभयविलक्षणमिति पञ्चमषष्ठौ। अत्र सत्तद्वि-
लक्षणं चेति पञ्चम.। असत्तद्विलक्षणं चेति षष्ठ। सर्वं सदसदात्मकं नैतत् सर्वं
सदसद्विलक्षणमिति सप्तम उक्त इति द्रष्टव्यम्। अनेन सत्स्यादित्यादि-
भाष्यं सत्स्यात्ततोऽन्यच्च स्यात्, असत्स्यात्ततोऽन्यच्च स्यात्, सदसत् स्यात्ततो-
ऽन्यच्च स्यादिति प्रकारान्तरेण व्याख्यातं भवति। [2]**व्याहतिपरिहाराय**
**व्यवस्थितमिति**। सूत्रे "एव च आत्माकार्त्स्न्यं" इति "च"शब्दान्वय- P 10
मभिप्रेत्य तत्समुच्चयमाह—**गजादिशरीरस्थस्येति**। **द्रष्टव्यमिति**। भाष्ये
कार्त्स्न्यमित्यनन्तरमिति शेष। सौत्र"दि"पदप्रदर्शनपरानित्यत्वप्रसक्तेरिति भाष्य-
मुपलक्षणपरमित्यभिप्रेत्य सौत्रबहुवचनाभिप्रायमाह—**तेन चेत्यादिना**। अत्राद्ये—
प्रपञ्चस्य सप्तभङ्गित्वनिरासोक्ति। द्वितीये—जीवस्य शरीरपरिमाणत्वेऽकार्त्स्न्या-
दिरूपानुपपत्त्युक्ति। तृतीये—द्वितीयोक्तानुपपत्त्याऽऽक्षेपोद्धार। चतुर्थे—
देहपरिमाणत्वाभावे जीवस्य परिमाणाभावप्रसङ्ग इत्याशङ्कापरिहाराय देहपरि-
माणमन्तरेण स्वत परिमाणानङ्गीकारे बाधकोक्तिरिति सूत्रक्रम ॥ १० ॥

॥ इति नैकस्मिन्नधिकरणम् ॥ १० ॥

---

१ तत्रेति। जैनमतीयसप्तभङ्गीनयस्तु प्रकारान्तरेणापि वर्णितो दृश्यते—(१)
स्यादस्ति, (२) स्यान्नास्ति, (३) स्यादस्ति च नास्ति च, (४) स्यादवक्तव्य, (५)
स्यादस्ति चाऽवक्तव्यश्च, (६) स्यान्नास्ति चावक्तव्यश्च, (७) स्यादस्ति-नास्ति चाऽवक्त-
व्यश्चेति। स्याद्वादिन इत्यपि जैना व्यपदिश्यन्ते।

२ व्याहतीति। "व्यवस्थित" इत्येव "मध्वविलास"पुस्तकपाठ।

## (११) ॥ पत्युरधिकरणम् ॥

### सू०॥ ओं ॥ पत्युरसामञ्जस्यात् ॥ ओं ॥ ३७-(४१) ॥

अनन्तरसङ्गतिमाह —**अवैदिकपाषण्डीति** । प्राथम्ये निमित्तमाह— **तेषु पाशुपतस्यैव प्राबल्यादिति** । शक्तिसूर्यगणपत्यादीतरदेवापेक्षया पशुपते वेदे त्वापातत पुराणादौ मोहनार्थं जगत्सृष्ट्यादिकर्तृत्वसर्वोत्तमत्वादेरुक्तत्वेन तदवलम्बनेन प्रवृत्तस्यास्य मतस्यात्यन्तवेदविरोधितया प्राबल्यादित्यर्थ । **युक्त-मिति** । अत्र विष्णोर्जगत्कारणत्वं किमयुक्तमुत युक्तमिति चिन्ता । तदर्थं पाशुपतसमय किं श्रुत्युक्ततदपबाधनक्षमो भवत्युत नेति । तदर्थं पाशुपतै परिकल्पितं पशुपतेर्जगत्कारणत्वमुपपन्नमुत दोषित्वाशरीरत्वनिरधिष्ठानत्वादि-युक्तिविरुद्धत्वेनानुपपन्नमिति । तदर्थं मायादिनित्यकारणकलापस्य पशुपतेर्ज-गत्सृष्ट्यार्थं शरीराधिष्ठानादिरूपत्व सम्भवत्युत नेति । तदर्थं तस्य शरीररूपत्वे तदुपादानत्यागनिमित्तकोत्पत्तिविनाशसुखदुःखादिदोषा न प्राप्नुवन्ति उत प्राप्नुवन्तीति । तदर्थं पाशुपतकर्तृत्वपक्षोक्तदोषा विष्णुकर्तृत्वपक्षेऽपि प्राप्नु-वन्त्युत न प्राप्नुवन्तीति । तदर्थं विष्णोर्निर्दोषत्वादौ पशुपतेर्दोषित्वादौ प्रमाणं नास्त्युतास्तीति । **पञ्चममुखच्छेत्र** इति । सुधाया तु विभक्तिवचनव्यत्ययेन ब्रह्मद्विषा दैत्याना शरवेर्हिंसकायेति व्याख्यातम् । ऐषशब्दस्य आ-ईश इति विग्रह । शकारस्य व्यत्ययेन षकार इत्यभिप्रेत्याह—**आ समन्तादीश-स्येति** । सुधायाम् इषु इच्छायामित्यतो घञ्प्रत्यये "पुगन्तलघूपधस्य च" इति
10₃ गुणे निष्पन्नस्यास्येच्छारूपस्येति व्याख्यानं कृतम् । **उक्तपक्षावेवेति** । "सम्बन्धानुपपत्तेश्च करणवच्चेत्" इत्युक्तशरीराभावतद्वत्त्वपक्षावित्यर्थ. । **अनेनेति** । शरीराभावे ज्ञानस्यैवायोगेनेत्यर्थ. । **सूत्रकृता निरस्तमिति** । "आत्मनि चैव विचित्राश्च हि सर्वोपेता च तद्दर्शनाद् विकरणत्वान्नेति चेत्तदुक्तम्" इत्यादा-

---

१. **पञ्चमेति** । "ब्रह्मण पञ्च मुखान्यासन् । पञ्चम रुद्र पशुपतिश्चिच्छेद" इत्यादि पौराणिकी कथाऽनुसन्धेया । ब्रह्मद्विष इत्यस्य दक्षप्रजापतिद्विष इति **चन्द्रिकायां** विवृतमिति **भावदीपकारा** ।

२. **एष इति** । Text restored.

वित्यर्थः । **प्रमाणविशेषैरिति** । श्रुतिरूपैरित्यर्थः । तथा चैते सम्बन्धानुपपत्त्यादयो दोषाः शिवस्यानुमानेन शैवागमैश्च कारणत्वपक्षे आपद्यन्ते । विष्णोर्जगत्कर्तृत्वस्य तु वेदेनैवोक्तत्वात् वेदेनैव सर्वविरोधपरिहारात् । शिवस्य तु न श्रुतिभिर्जगत्कारणत्वम् "रुद्रो वाव लोकाधारः" इत्यादीनां विष्णावेव समन्वयस्योक्तत्वादिति भावः ॥

अत्राद्ये––पशुपतेर्जगत्कर्तृत्वाभावे पारतन्त्र्यादिदोषित्वरूपहेतूक्तिः । द्वितीये––तत्रैवाशरीरस्य कार्यकर्तृभावलक्षणसम्बन्धानुपपत्तिरूपान्तरहेतूक्तिः । तृतीये––ततोऽपि बहिरङ्गाधिष्ठानानुपपत्तिलक्षणहेत्वन्तरोक्तिः । चतुर्थे––द्वितीयतृतीयसूत्रोक्तहेत्वोरसिद्धिमाशङ्क्य तत्परिहारः । पञ्चमे––[1]द्वितीयचतुर्थोक्तशरीराभावभावपक्षे दोषान्तरोक्तिरिति सूत्रक्रमः ॥ ११ ॥

॥ इति पत्युरधिकरणम् ॥ ११ ॥

---

## (१२) ॥ उत्पत्त्यधिकरणम् ॥

## सू०॥ ओं ॥ उत्पत्त्यसम्भवात् ॥ ओं ॥ ४२ ॥

"निराकृतौ विशेषस्य भावाच्छक्तिमतं पृथक् दूष्यते" इत्यनुव्याख्यानानुसारेणानन्तरसङ्गतिमाह––**पूर्वन्यायेनेति** ॥ **युक्तमिति** । अत्र विष्णोर्जगत्कारणत्वं किं न युक्तमुत युक्तमिति चिन्ता । तदर्थं शक्तिमतं श्रुत्युक्ततदपबाधनक्षमं भवत्युत नेति । तदर्थं तत्परिकल्पितं शक्तेः सर्वकर्तृत्वं सम्भवत्युत पुरुषाननुगृहीतस्त्रीभ्य अपत्योत्पत्त्यदर्शनेन न सम्भवतीति । अनुग्राहकपुरुषाङ्गीकारपक्षेऽपि तस्योत्पत्त्युपयोगिज्ञानादिसाधनं किमस्त्युत नास्तीति । तस्योत्पत्त्युपयुक्तज्ञानाद्यङ्गीकारपक्षेऽपि शक्तेः कर्तृत्वाङ्गीकारे प्रयोजनं किमस्त्युत पाशुपतपक्षइवानुग्राहकपुरुषस्यैव कर्तृत्वसम्भवान्नास्ति प्रयोजनमिति । "तन्नोपपद्यते, तत उत्पत्त्यसम्भवात्" इत्यनुव्याख्यानेऽध्याहृतशक्तिमताऽयुक्तत्वे

---

१. **द्वितीयेति** । "चतुर्थे"ति क्वचिन्नोपलभ्यते ।

"उत्पत्त्यसम्भवादि"ति सौत्रो हेतुरित्युक्तम्। तत्रासिद्धिपरिहारकतया भाष्यं व्याचष्टे—**न शक्तेरेवेति**। व्याप्तिप्रदर्शनपरत्वेन भाष्यं व्याचष्टे—**न हीति**। उत्पत्तिरपत्योरुत्पत्तिरित्यर्थः[1]। "विज्ञानादिभावे वा" इत्युत्तरसूत्रानुरोधेन कारणाभावादित्येतद्व्याचष्टे—**उत्पत्त्युपयोगिसाधनाद्यभावेनेति**[2] ॥

ननु शैवाः शिवमेकमेवाभ्युपयन्ति। शाक्तास्तु शिवं शक्तिं चेत्यस्ति महान् भेदः। तत्कथमीश्वरवादान्तर्भाव इत्यत आपादितदोषोऽयमित्याशयेन भाष्ये तत एव सृष्ट्याद्युपपत्तेरित्युक्तमित्यभिप्रेत्य तद्भाष्यं सोपस्करं व्याचष्टे—
106 **यदीत्यादिना। अनुमतमेव स्यादिति**। तथा चापसिद्धान्त इति भावः। नन्वेतावता भवत्सिद्धान्तानवक्लृप्तिरेव; शैवमतस्यापि भवत्सिद्धान्तविरोधित्वादित्यतः "उक्तदोषश्च तत्पक्ष" इति "नैवात्र दृश्यते" इत्यनुव्याख्यानं मनसि निधायाह—**तच्च निरस्तमिति**। आद्यो नै[3] पुनर्दूष्यत इति शेषः। "तदप्रतिषेध" इति सूत्रांशः प्रकारान्तरेण व्याख्यातः ॥

अत्राद्ये—शक्तिकर्तृत्वमतायुक्तत्वे उत्पत्त्यसम्भवरूपहेतूक्तिः। द्वितीये—तत्परिहारायानुग्राहकपुरुषाङ्गीकारे कर्तृत्वोपयुक्तज्ञानादिकरणाभावोक्तिः ॥ तृतीये—अनुग्राहकपुरुषस्य ज्ञानाद्यङ्गीकारे शक्तिकर्तृत्ववैयर्थ्यापत्त्या निराकृतपाशुपतमतप्रवेशोक्तिः। चतुर्थे—महावाममध्यमवामाणुवामानां त्रयाणां मते श्रुत्यादिविरुद्धत्वरूपसाधारणदोषोक्तिरिति सूत्रक्रमः ॥

अत्र पादे आद्यमधिकरणषट्कं हैतुकमतनिरासकतयैका महापेटिका। तत्राद्यं पञ्चकम् ईश्वरनिरपेक्षाचेतनप्रवृत्तिवादिमतनिरासकत्वेनैका पेटिका। तत्र

---

१ उत्पत्तिरिति। वात्स्यायनमुनिप्रणीतकामसूत्रव्याख्याने परमेवं दृश्यते "..... स्त्रीसंयोगादपि स्त्री गर्भं धत्ते। तथा च सुश्रुते—

"यदा नारी च नारी चमैथुनायोपपद्यते।
अन्योन्यं शुक्रत. शुक्रमनस्थिस्तत्र जायते॥" इति।

एवमपि शाक्त्यनुग्राहकस्त्रीसत्त्वे दोषतादवस्थ्यमिति द्रष्टव्यम्।

२. अभावेनेति। "ज्ञानादिसाधने"ति "मध्वविलास"पुस्तकपाठः।

३. नेति। शाक्तेयः पाशुपतस्यातो भावश्च तन्मतनिषेधकारी भवेत्, अपि तु तदङ्गीकुर्यादेवेति भावः।

क्रमेणाचेतनप्रवृत्तिमत–ईश्वरानुगृहीता चेतनप्रवृत्तिमतदेहकर्तृत्वमतपुरुषोपसर्जन-प्रकृतिकर्तृत्वमतप्रकृत्युपसर्जनपुरुषकर्तृत्वमतानां निरासः । षष्ठे—हैतुककणादादिमतनिरास. । उत्तरमधिकरणषट्कं पाषण्डिनिरासकतयैका महापेटिका । तत्राद्यमधिकरणचतुष्टयम् अवैदिकपाषण्डिनिरासकतयैका पेटिका । तत्राद्यमधिकरणत्रिकं बौद्धनिरासकत्वेनैका पेटिका । तत्र क्रमेण वैभाषिकसौत्रान्तिकमत-माध्यमिकमत-योगाचारमतानां निरास । चतुर्थे जैनमतनिरास. । उत्तरमधिकरणद्वयं वैदिकपाषण्डिनिरासकतयैकाऽवान्तरपेटिका । तत्राद्ये—शैवमतस्य, द्वितीये—शाक्तमतस्य च निरास इति ॥ १२ ॥

॥ इत्युत्पत्त्यधिकरणम् ॥ १२ ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचित तत्त्व-
प्रकाशिकाभावबोधे द्वितीयाध्यायस्य
द्वितीयः पादः ॥ २ ॥

---

१ योगाचारेति । काणियूरश्रीपाद पुस्तकरीत्या तथा रामचन्द्राचार्य-पुस्तकरीत्या समीकृत पाठ । एवमपि—चतुर्थे जैनमतनिरासकत्वेनैका पेटिकेति पाठेन भाव्यमिति भाति ।

॥ श्रीवेदव्यासाय नमः ॥

# ॥ तृतीयः पादः ॥

## (१) ॥ वियदधिकरणम् ॥

### सू०॥ ओं न वियदश्रुतेः ओं ॥ १ ॥

"अध्यात्मप्रवणो भूत्वा तस्य सन्निहितत्वतः" इत्यनुव्याख्यानं
P. 107 मनसि निधायाह—**तत्र जिज्ञासोरिति**। सुगमस्थलाधिभूतादिविचारानन्तरं अतिसूक्ष्माध्यात्मिकचर्चायां शक्तिर्भवति। अतस्तद्विचारस्यान्तिमत्वमिति भावः। **अधिभूतादिविषयश्रुतीनां परस्परविरोधमिति**। तथा च सूत्रकृता सर्वानपि वेदविरोधान् परिहर्तुं द्वितीयाध्यायस्यारब्धत्वाच्छ्रुतीनां परस्परविरोधपरिहारस्यावसरप्राप्तत्वाच्चास्य पादस्यान्तर्भावलक्षणानन्तर्यलक्षणा च सङ्गतिरिति भावः। न चैवमस्य पादस्यानेकविषयत्वेनानेकत्वापत्तिरिति वाच्यम्; अध्यात्मेतरविषयत्वेनैकत्वोपपत्तेरिति। **अभ्युपगतार्थद्वय इति**। श्रुत्यर्थत्वेनाभ्युपगते परापरतत्त्वरूपार्थद्वयेऽन्यतरार्थे जगति श्रुतीनामप्रामाण्यप्राप्तावन्यार्थे परमात्मगुणपूर्त्यादावनाश्वासप्रसङ्गादित्यर्थः। हेत्वन्तरमाह—**जगत्स्वरूपानिर्णय इति**। **विचारबाहुल्याभिप्रायेण क्रमोल्लङ्घनमिति**। सूचीकटाहन्यायेन वर्तिष्यमाणक्रमानुसारेणाधिभूताधिदैवपरमात्मजीवेति वक्तव्ये जीवपरमात्माधिभूताधिदैवेष्विति जीवादिशब्दानां पूर्वनिपातोऽत्र जीवादिविचारस्य बह्वर्थविषयकत्वेन जिज्ञासुं प्रत्यभ्यर्हितत्वादल्पाच्तरत्वेऽत्यल्पाक्षरत्वाच्चेत्यर्थः। **आकाशोत्पत्तिविषयेति**। "उत्पत्त्यसम्भवात्" इति पूर्वसूत्रप्रकृतोत्पत्तेराकाशसम्बन्धित्वेनात्र विचारादनन्तरसङ्गतिरिति भावः। **उत्पत्तिमान्न वेति**। अत्र पादे

---

१. **अनाश्वास इति**। ईश्वरान्यविषयेषु श्रुतिविरोधे संप्राप्ते, ईश्वरविषयेऽपि श्रुतौ नाऽश्वास इति युक्ति-समय-विरोधपरिहारानन्तरमस्मिन् पादे श्रुतिविरोधः परिह्रियते सूत्रकारेणेति वेदितव्यम्।

२. **अर्थ इति**। अत्र "जीव" इति निर्देशनमारम्भाऽभिप्रायमाह।

श्रुतिसमन्वयेन[1] विष्णोः जगज्जन्मादिकारणत्वमयुक्तमुत युक्तमिति चिन्ता। तदर्थं जगत्कारणत्वाद्यभिधायकश्रुतिरप्रमाणमुत प्रमाणमिति चिन्ताद्वयानुवृत्तिः सर्वत्र द्रष्टव्या। अत्राकाशः किमनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता। तदर्थमाकाशस्योत्पत्तिमत्त्वमनादित्वश्रुतिविरुद्धं न वेति। तदर्थमनादित्वश्रुतिः किं मुख्यार्थोत गौणीति। तदर्थं सा श्रुतिः किमनुभूत्यादियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थं वियत उत्पत्तिमत्त्वे श्रुतियुक्त्यादिरूपप्रमाणमस्त्युत नास्तीति। वियत उत्पत्तिमत्त्वेऽनुभूतियुक्तिबहुवाग्विरोधोऽस्तीति **न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह—आकाशस्योत्पत्त्यङ्गीकार इति। भाक्तत्ववर्णनमिति।** अनादित्वश्रुतेः स्वरूपानादित्वपरत्वेन भाक्तत्ववर्णनमित्यर्थः। **अन्यार्थतयेति।** प्रादुर्भावार्थतयेत्यर्थ.। **नियमेनेति।** क्वचिदभावसद्भावे पृथक् प्रमाणस्याप्युपन्यासादिति भाव·। **अनादित्वाभिधायकश्रुतिविरोधादिति।** अनेना"श्रुतेरि"ति सौत्रहेतोरसिद्धिरप्युक्ता भवति। **व्यवस्थायोगादिति। न्यायविवरणो**क्तव्यवस्थाप्रकारप्रदर्शनपरमनादित्वश्रुतिर्गौणीति[2] भाष्यं तद्भाष्यसिद्धांशप्रदर्शनपूर्वकं व्याचष्टे—**अनादित्वश्रुतिरिति।** अवकाशमात्रस्याव्याकृतात्मकत्वात् अनुत्पत्तिवचनाना तद्विषयत्वम्। उत्पत्तिवचनानामसितवर्णभूततदभिमानिशरीरविषयत्वं पराधीनविशेषवत्त्वमात्रविषयत्वं चेति व्यवस्थेति **न्यायविवरणा**भिप्रायमाह—**तथा** हीत्यादिना। अत्र भूतं स्वरूपत एवोत्पद्यत इत्यादिनास्त्युत्पत्तिरित्यन्तेनासितवर्णभूत तदभिमानिशरीरविषयत्वमिति **न्यायविवरणांशो** व्याख्यात। असितवर्णेत्येतद्धेत्वर्थगर्भं विशेषणमभिप्रेत्योक्तम्। **रूपित्वादिति।** न च परमात्मादौ व्यभिचार·;

"भौतिकं त्वेव रूपादिव्याप्तं नाशेन नो मते।"

इत्युक्तत्वेन भौतिकरूपवत्त्वादित्यर्थत्वात्। असिद्धिपरिहारार्थं **न्यायविवरणो**दाहृतश्रुतिमाह—**आकाश इति। आकाशतदभिमानिनोरपीत्यनेन** पराधीनविशेषवत्त्वमात्रविषयत्वं चेति **न्यायविवरणांशो**व्या-

---

१. **समन्वयेनेति** । प्रथमाध्याये सपरिकर समर्थितेनेति भाव ।

२. **गौणीति** । एवं चोत्पत्तिश्रुतिर्मुख्येति भवति ।

ख्यातः। अभिमानिनोरपीत्यपिशब्दो भूततदभिमानिसमुच्चनार्थो वा स्वरूपोत्पत्तिरहितयोरपीति विरोधस्फूर्त्यर्थो वा। तथा च भूततदभिमानिनोः स्वरूपोत्पत्तिदेहोत्पत्त्योः सद्भावेऽपि भूतादिचतुष्टये सर्वत्राकाशपदार्थे तयोरभेदाभावेन पराधीनविशेषवत्त्वमात्रस्य च सत्त्वादनुगतत्वविवक्षया **न्यायविवरणे**मात्रपदम्। न तु स्वरूपोत्पत्त्यादेः सम्भूतशब्दार्थत्वव्यवच्छेदविवक्षया। तस्य तदर्थत्वस्याप्यसितवर्णेत्यादिनोक्तत्वात्। एवञ्च "आत्मन आकाशः सम्भूतः" इति श्रुतिगताकाशशब्दस्य भूतादिसर्वाकाशविषयत्वेन मुख्यत्ववत् सम्भूतशब्दस्यापि स्वरूपोत्पत्त्यादिसर्वोत्पत्तिविषयत्वेन मुख्यत्वात्। उत्पत्तिश्रुतिर्मुख्यार्थेति **न्यायविवरणतात्पर्यमभिप्रेत्याह—सर्वविषयत्वादुत्पत्तिर्मुख्येति**। अत्र यद्यपि अव्याकृताकाशचित्प्रकृत्योर्भूताभिमानिनश्च पराधीनविशेषलाभाभावरूपमुख्यानादित्वासम्भवेनानादित्वश्रुतिः स्वरूपानादित्वपरा-भूते स्वरूपानादित्वस्याप्यभावेन सूक्ष्मरूपानादित्वमात्रपरेत्यनादित्वश्रुतेर्गौणत्वं वक्तुं शक्यम्। तथापि; "तथा प्राणाः" इत्युत्तरपादीयाधिकरणगत"गौण्यसम्भवात्" इति सूत्रार्थपर्यालोचनयास्य सुज्ञानत्वादिह तन्नोक्तम्। अवकाशमात्रस्याव्याकृतात्मकत्वादनुत्पत्तिवचनानां तद्विषयत्वमिति **न्यायविवरणतात्पर्यमाह—अनादित्वश्रुतिस्त्विति**। **न्यायविवरणे** अवकाशपदेन तदभिमानिचित्प्रकृतेरपि संग्रहः। मात्रपदं तु भूतव्यवच्छेदकम्। तथा च "अनादिर्वा अयम्" इत्यत्राकाशशब्द अव्याकृताकाशतदभिमानिस्वरूपाकाशपदार्थैकदेशविषयः, न तु सर्वविषय इत्यर्थः। कुत इत्यत आह—**भूत** इति। अनादिपदार्थस्य स्वरूपोत्पत्त्याद्यभावस्य भूते बाधितत्वादित्यर्थः। एवमनादिशब्दार्थस्य सौत्रोत्पत्त्याद्यभावस्याकाशपदार्थैकदेशेऽव्याकृताकाशादौ सत्त्वेऽपि तत्प्रतिपादितस्य पराधीनविशेषलाभलक्षणोत्पत्त्यभावस्य क्वाप्याकाशपदार्थेऽभावेनानादिपदस्यापि न सर्वविषयत्वमित्यनादित्वश्रुतिर्न सर्वविषयेत्यपि द्रष्टव्यम्। अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादिति भाष्यगता"न्यथा"पदस्याभिप्रायमाह—**किमेतया व्यवस्थयेति**॥

नन्वनया व्यवस्थया बहुवाक्यविरोधस्य निरासेऽपि अनुभूतियुक्तिविरोधस्तु स्यादेवेत्यत आह—**अनेनेति** । साक्षिरूपानुभवस्य विभुत्वयुक्तेश्चाव्याकृताकाशस्वरूपादिविषयत्वेन सावकाशत्वादिति भाव ॥

ननु पुरुषप्रकृतिकालाना देहोत्पत्त्याद्युत्पत्ते सत्त्वेन कथं नित्यत्वोक्तिरित्यत आह—**पुरुषादिपदैरिति** । प्राणश्रद्धयोर्जीवचैतन्यस्य सकलजीवचैतन्यग्राहक- P 10 पुरुषपदेनैव नित्यवर्गे गृहीतत्वाद्देहादेश्च भौतिकानीत्यनित्यवर्गे ग्रहणात् किमर्थं पृथग्ग्रहणमित्यत आह—**पुरुषपदेनेति** । नित्यवर्गे गृहीतयोरप्यनयो प्राणादिषु न सर्वेषामनित्यत्वमेवोच्यत इति वक्ष्यमाणानुसारेण नित्याऽनित्यवर्गप्रवेशादधिकमपि नित्यत्वमस्तीत्युक्तम् । **सपरिकरयोरिति** । प्राणश्रद्धापदप्रवृत्तिनिमित्तभूतपरिकरविशिष्टयोर्नित्यानित्यत्वपरिकररूपधर्माणा मध्ये कस्यचिन्नित्यत्व विनानुपपन्नमिति परिकरभूतमनोवृत्तिज्ञानविशेषस्य नित्यत्वं देहादेरनित्यत्वं सपरिकरयोर्ग्रहणेन ज्ञापितं भवतीत्यर्थ ॥

ननु प्राणश्रद्धाकाशशब्दार्थाना सर्वेषामप्युक्तरीत्योत्पत्त्यभावाद्भागश इति कथमुक्तमित्यत आह—**बहुभागैरिति** । **कैश्चिदिति** । प्राणश्रद्धाचैतन्यस्याव्याकृताकाशतदभिमानिभूताभिमानिस्वरूपाणा स्वरूपोत्पत्त्यभावादिति भाव । **तत्प्रकारश्चेति** । चतुष्टयात्मकाकाशश्चतुर्भिर्भागैरुत्पद्यते । उक्ताया उत्पत्तेश्चतुर्ष्वपि सत्त्वात् । आकाशतदभिमानिस्वरूपभागेन नोत्पद्यत इति प्रागेवोक्त इत्यर्थ । **न जायत इति** । अस्य मन्त्रस्य गीताभाष्ये जीवपरत्वेन व्याख्यातत्वेऽपि अयं ना = परमपुरुष इत्यादिना गीतातात्पर्ये परमात्मपरत्वेनापि व्याख्यातत्वात् तदुदाहरण युक्तमिति ज्ञातव्यम् । सौत्र"श्च"शब्दोऽवधारणार्थक इत्यभिप्रेत्य स्यादेवेत्युक्त भाष्ये । तस्यैक इत्यत्रापि सम्बन्ध इत्यभिप्रेत्याह—**एकस्यैवेति** । **यथा ब्रह्मशब्द इति** । एवमत्राप्यनुत्पत्तिमच्छब्द इति भाष्यं व्याचष्टे—**अनुत्पत्तिमच्छब्दस्येति** । **परब्रह्मणीति** । कारणसद्भावादिति । विरिञ्चादिषु गुणपूर्णत्वरूपप्रवृत्तिनिमित्ताभावलक्षणकारणसद्भावादित्यर्थ ॥

---

१ भैतिकेति । Text reconstructed.

२ जीवेति । अनुत्पत्तिमदर्थकशब्दस्य मुख्यार्थतादर्शनादिति शङ्कते ।

३ परेति । Text restored.

ननु "गौण्यसम्भवात्" इत्यत्र "सम्भवादि"त्यनेनैव उत्पत्तिश्रुतिबाहुल्यस्य लाभा"च्छब्देभ्य" इत्येतत् पुनरुक्तमित्यत आह—**अनेनासम्भवादित्युक्तमेवेति**। असम्भवप्रतियोगिनः श्रुतिबाहुल्यस्य "शब्देभ्य" इत्यनेनोक्तेस्तस्य तद्विवरणरूपत्वम्। अत एव भाष्ये तत्र श्रुतीरनुदाहृत्यात्र उदाहृता इति भावः।

"यो विभागी विकारः स सोऽविकारः परो हरिः"

"अविभागात्" इति स्मृत्यनुसारेण विभक्तत्वाच्च विकारित्वं युक्तमिति भाष्येऽर्थसिद्धमनुमानमाह—**ब्रह्म नोत्पत्तिमदिति**। सूत्रे यावदवधारणे इति। यावद्विकारमित्यव्ययीभावः। "तु"शब्दो हेत्वर्थक"हि"शब्दार्थको विभागो दृश्यते इत्यक्षरयोजनायामवधारणार्थकयावदित्यनेन विभागस्य विभागेन व्यभिचाराभावोक्तौ सूत्रेण व्याप्तिरेवोक्ता भवतीत्यभिप्रेत्य विकारिण एव हि विभक्ता दृश्यन्त इति भाष्यं प्रवृत्तं इत्याशयेनाह—**न त्वविकारिण इति**। 'अथ ह वाव नित्यानि पुरुषः प्रकृतिरात्मा कालः' इति प्रकृत्यादीनां त्रयाणां नित्यत्वस्योक्तेः कथं तद्विभागेन जायन्त इत्युत्पत्तिरुच्यत इत्याशङ्क्य परिहरति—**न चास्य प्राचीनेति। अनेनेति**।

"प्रकृतिः पुरुषः कालस्त्रय एते विभागतः"

इति प्रमाणेन प्रकृत्यादीनां प्रत्यक्षस्ववचनेनाकाशाद्या इत्याद्यग्रहणेन चेत्यर्थः॥

अत्राद्ये—वियत अनुत्पत्तौ प्रमाणाभावोक्तिः। तदुत्पत्तौ प्रमाणाभावे तदनुपलब्ध्यैव तदभावसिद्धेर्न पृथगनुत्पत्तौ प्रमाणं वक्तव्यमित्याशङ्कानिरासाय द्वितीये—तदुत्पत्तौ प्रमाणोक्तिः। तस्यानुभवादिविरोधपरिहारायोत्पत्तिश्रुतिबाहुल्यासम्भवयुक्त्या, तृतीये—अनुभवादीनां सावकाशत्वोक्तिः। चतुर्थे—तेषामेव युक्त्युपोद्बलकव्यवस्थाप्रतिपादकश्रुत्या च सावकाशत्वोक्तिः। पञ्चमे—अनुत्पत्तिश्रुतेः सावकाशत्वे बाधकोद्धारः। षष्ठे—अनुत्पत्तिश्रुतेः [1]गौणानादित्वपरत्वेन सावकाशत्वानङ्गीकारे उत्पत्तिप्रतिपादकश्रुतिरूपबाधकोक्तिः। सप्तमे—तत्रैव श्रुत्युपोद्बलकोत्पत्तिसावकाशानुमानरूपबाधकान्तरोक्तिरिति सूत्रक्रमः॥ १॥

॥ इति वियदधिकरणम्॥ १॥

---

१. गौणेति। Text amended.

## (२) ॥ मातरिश्वाधिकरणम् ॥

## सू०॥ ओं ॥ एतेन मातरिश्वा व्याख्यातः ॥ ओं ॥ ८ ॥

**मुख्यवायूत्पत्तिविषयेति ।** अत्र "काशाद्वायुरि"ति श्रुतौ भूतवायुमुख्याभिमानिमुख्यवायोरपि वायुशब्देन प्रतिपादनेन श्रुतिक्रमात् पूर्वोक्तसिद्धान्तन्यायातिदेशात् वानन्तरसङ्गतिरिति भावः। **उत्पत्तिमान्न वेति ।** अत्र मुख्यवायुरनुत्पत्तिमानुतोत्पत्तिमानिति चिन्ता । तदर्थमुत्पत्तिश्रुतिर्बहुवाग्युक्त्यनुभवविरुद्धा भवत्युत न भवतीति । तदर्थमनुत्पत्तिश्रुत्यादेः सावकाशत्वं नास्त्युतास्तीति । तदर्थं श्रुत्यादेः सावकाशत्वप्रापकं नास्त्युतास्तीति । तदर्थं सावकाशत्वप्रापिका वायोर्मुख्यानुत्पत्त्यनुपपत्तिर्न सम्भवत्युत सम्भवतीति । तदर्थं तस्योत्पत्त्यङ्गीकार उत्पत्त्यनुत्पत्तिमद्भ्यो वियदादिभ्यो वायोर्विशिष्य नित्यत्वोक्तिर्न घटते उत घटत इति । तदर्थं वायोर्विशिष्य नित्यत्वोक्ति पराधीनविशेषलाभाभावरूपस्वातन्त्र्यलक्षणनित्यत्वेन वा स्वरूपातिरिक्तमनोवृत्तिज्ञानमात्रनित्यत्वेन वेति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । **इत्यादिश्रुतेरित्यनेन न्यायविवरणोक्त**बहुवाग्विरोधो दर्शितो भवति । **वायोर्नित्यत्वोक्तिरयुक्तेत्यनेन** अभ्यधिकाशङ्काप्रदर्शनाय ततोऽधिकमिति **न्यायविवरणोक्तं** वियदनुत्पत्तिश्रुतिभ्यो वाय्वनुत्पत्तिश्रुतीनामाधिक्यमुक्तं भवति ॥ P. 100

ननु भाष्योदाहृतश्रुतीनामाकाशादिपदैर्भूतान्येवोच्यन्ते । तेभ्यश्च मुख्यवायो स्वरूपनित्यत्वमेव विशेष इति नेत्याह—**न चात्र आकाशपदेनेति । न्यायविवरणे** अनुभूत्यादीत्यादिपदोक्तयुक्तिप्रदर्शनपरतया भाष्योदाहृतश्रुतीर्व्याचष्टे—**किं चेत्यादिना ।** बहुयुक्तिकथनेन **न्यायविवरणोक्त**युक्ताधिक्यमुक्तं भवति । नन्वनुभवायोग्यवायूत्पत्तौ कथं **न्यायविवरणे** तद्विरोध उक्त इत्यतस्तमुपपादयति—**एवंविधस्येति ।** नित्यत्वव्याप्तोक्तबहुहेतुमत

---

१. **उत्पत्तिमानिति ।** "आकाशाद्वायुरिति" क्रमानुसारेणाकाशोत्पत्तिविचारानन्तरं वायूत्पत्तिविषयको विचार आरभ्यत इति द्रष्टव्यम् ।

२. **वाय्वनुत्पत्तीति ।** वायोरुत्पत्त्यभावं प्रतिपादयन्तीनां श्रुतीनामाधिक्येन पूर्वपक्ष उपोद्बलित इति शङ्कितुर्हृदयम् ।

उत्पत्तिरनुभवबाधितेत्यर्थः । सौत्रे"णैतेनेत्य"नेन पूर्वाधिकरणोक्तः सर्वोऽपि हेतुर्विवक्षित इत्याशयवानाह—**अनुत्पन्नत्वेन अश्रुतत्वादित्यादिना** । भाष्ये मुख्यामुख्येत्यनन्तरमुत्पत्तीत्यध्याहृत्य तद्भाष्यं व्याचष्टे—**अनुत्पत्तिश्रुतिरपीति।** भाष्योक्तहेतूनां साध्यप्रदर्शनपरतया वायोरेवानुत्पत्त्यनुपपत्तेरित्यादिना सर्वैश्वर्यमित्यन्तं **न्यायविवरणं** योजयितुं विकल्पेन पृच्छति—**किं चेत्यादिना ।** आद्यपक्षदूषणत्वेन अवधारणसहितन्**यायविवरणम**नुवदति। वायोरेवेति द्वितीयपक्षदूषणत्वेन पराधीनविशेषवत्त्वं ह्युत्पत्तिस्तदभाव उभयोः स्वातन्त्र्यं विरुद्धमेवेति **न्यायविवरण**माकाङ्क्षाक्रमेण योजयति। **द्वयोरपीत्यादिना । द्वयोर्युक्तमिति ।** सर्वोत्तमत्वानुपपत्तेरिति भावः । कथं सर्वोत्तमत्वानुपपत्तिरित्यतस्तदुपपादनपरमुभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे अननुरोधे तु न सर्वैश्वर्यमिति **न्यायविवरणं** तात्पर्यतो व्याचष्टे—**अन्योन्यानुरोधाननुरोधयोरिति । मुख्यानुत्पत्तौ बाधकसद्भावादिति।** अनेनानुपपत्तिस्तु तत्रापिकेति **न्यायविवरण**मुक्ततात्पर्यकं भवति। स्मृतौ पर इत्यस्य श्रूयमाणानित्यपदेनैवान्वये त्रैविध्यप्राप्त्या चतुर्थेत्यनुपपन्नम्। द्वितीयस्तथाशब्दोऽप्यनुपपन्नः। 'अनित्यानीह भूतानि' इत्येतच्चायुक्तं स्यादित्यतोऽनित्य इति पदानुवृत्त्याह—**परः परानित्य इति । कथमनेन स्मृतिवचनेन श्रुतियुक्तिविरोधपरिहार इत्यत आह—तत्रेति । स्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणेति ।** अनेन ज्ञानाविस्मृत्या वायावपि व्यवस्थेत्यतिदेश इति **न्यायविवरण**मुक्ततात्पर्यकं भवति। अतिशयेन नित्यतोच्यत इत्युपलक्षणम्। अतिशयितचेतनत्वं सर्वदेवोपास्यत्वम्, वृत्तिज्ञानप्रवाहोदयनिम्लोचनाभावेन तस्योदयनिम्लोचाभावश्चोच्यत इति न युक्तिविरोधोऽपीति ग्राह्यम् ॥ २ ॥

**॥ इति मातरिश्वाधिकरणम् ॥ २ ॥**

---

१. **भाव इति ।** सर्वोत्तमत्वमेतस्यैव प्रामाणिकमन्यथा सर्वोत्तमत्वमेव स्याद्दन्येनेति द्रष्टव्यम् ।

## (३) ॥ असम्भवाधिकरणम् ॥

### सू०॥ ओं ॥ असम्भवस्तु सतोऽनुपपत्तेः ॥ ओं ॥ ९ ॥

**तदुत्पत्तिविषयश्रुतीति** । अत्र यदि नभोनभस्वतोरुत्पत्तिश्रुत्यवष्टम्भेनोत्पत्तिरिष्यते, तर्हि सतो ब्रह्मणोऽप्युत्पत्तिश्रुतिसामान्यात् स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति ज्ञातव्यम् । **उत्पत्तिमदिति** । अत्र ब्रह्मोत्पत्तिमन्नवेति चिन्ता । तदर्थं 'मसत. सदजायते"ति श्रुतिर्ब्रह्मोत्पत्तिप्रतिपादिका भवत्युत न भवतीति । तदर्थमाकाशाद्युत्पत्तिश्रुते पराधीनविशेपलाभलक्षणोत्पत्तिपरत्वेन व्यवस्थाव"दसत" इति श्रुतेस्तत्परत्वेन व्यवस्था सम्भवत्युत नेति । तदर्थं ब्रह्मण:[1] पराधीनविशेष: किं सम्भवत्युत नेति । तदर्थं तस्यानादितया किमाकाशादिसाम्यमेवोत सर्वथानुत्पत्तिसाधकं स्वातन्त्र्याख्यं ततो वैलक्षण्यमस्तीति । तदर्थं स्वातन्त्र्याङ्गीकारे "असत" इति श्रुतेरप्रामाण्यं प्रसज्येत न वेति । तदर्थमसत· सदित्ति श्रुतिस्थौ सदसच्छब्दौ किं ब्रह्मशून्यपरौ किं वायुविष्णुपराविति तदर्थं सदसच्छब्दयोर्ब्रह्मवायुपरत्वेऽसतो जनकत्वादृष्टिरूपबाधकं वायुविष्णुपरत्वे प्रमाणं च न स्त उत स्त इति । **अस्त्येवोत्पत्तिरिति** । पराधीनविशेपलाभ[2]लक्षणेत्यर्थ । अनेन सत पराधीनविशेपवत्वमिति **न्यायविवरणमपि** व्याख्यातं भवति । **असतस्तत्कारणतया श्रुतत्वादिति** । पूर्वोक्ताच्छादनेनैवेद- P. 110
मुक्तम् । तेनासत कारणत्वस्य "प्रतिपेधमात्रत्वात्" "नासतो दृष्टत्वात्" इति पूर्वमेव निराकृतत्वात् कथं पूर्वपक्षोत्थानमिति शङ्कानवकाश । अत एव सिद्धान्तेऽदृष्टत्वादनुपपत्तेरिति पूर्वोक्तहेत्वतिदेशेनासत कारणत्व निराकरिष्यते ॥

ननु तथापि असत कारणत्वनिरासपरतया अधिकरणद्वयेनास्य गतार्थतेति चेत्, न; तत्र प्रतिपेधमात्रत्वाददृष्टत्वाभ्या जगत्प्रत्यसत. कारणत्वं न सम्भवतीत्युक्तम् । अत्र तु तद्धेत्वतिदेशेनैव ब्रह्म प्रति कारणत्वं न सम्भवतीत्युच्य-

---

१ **ब्रह्मण इति** । अनन्तकोटिब्रह्माण्डान्तर्गतसर्वचराचरसत्तादिप्रदस्य ब्रह्मणोस्ति कश्चिदन्य सत्ताप्रद इति शङ्कितुरभिप्राय ।

२. **पराधीनेति** । Text amended.

मानत्वेन भेदादिति ज्ञातव्यम् । "सत साम्यम्' इत्यनुव्याख्यानोक्तयुक्तिमुपपादयति—**असदुद्भवयोरिति** । अनेन ब्रह्मोत्पत्तिमत् तदविरोध्यनादित्वकत्वादिति युक्तिरुक्ता भवति । न च विशेषणवैयर्थ्यम् , विरोधनिरासकव्याप्त्यौपयिकत्वात् । नचाप्रसिद्धि । आकाशादावेव प्रसिद्धत्वादिति । तद्वा एतदसदाहुरिति श्रुत्युदाहरणानुरोधेनाह—**अनुत्पत्तिश्रुतिस्त्विति** । "तु"शब्देनोक्तव्यवस्थामपाकरोतीति भाष्यानुरोधेनाह—**न चेदिति** । स्वातन्त्र्यादिति न्यायविवरणानुसारेण सत इति भाष्याभिप्रायमाह—**सत इत्यनेनैवेति** । ' सत्त्वं स्वातन्त्र्यमुद्दिष्टम्" इति भारतोक्तेरिति भाव । **गतिरिति** । सोपाधिधिकत्वमित्यर्थ । साध्यव्यापकत्वरूपप्रयोजकत्वमेव दर्शयन्नुपाधिमेवाह—**गमनेति** । अविकार इत्यनेन पौनरुक्त्यपरिहार्थमाह—**तद्धर्मादेरिति** । शक्तिमता भगवताऽविभिन्नापीति न विभेद इत्युक्तानुवाद इति प्रतीयते । तन्न युज्यते । भगवदभिन्ना अपि भगवत शक्तिरिति तत्सम्बन्धित्वेन व्यवहारादिरूपभेदकार्यस्यानुक्ते । शक्तेरिच्छायभेदालाभाच्चेति आशयवान् व्याचष्टे—**एकैवेत्यर्थ** इति । अनेना"पि"रवधारणार्थ इत्युक्त भवति ॥ ३ ॥

॥ इत्यसम्भवाधिकरणम् ॥ ३ ॥

---

१ **असदिति** । 'असमवदुद्भवयो " इति "मध्वविलास" पुस्तक पाठ ।

२ **तदविरोधीति** । "तदविरोध्यनादित्वकत्वात्' इति काणियूरस्वामिना पुस्तके, तथा रामचन्द्राचार्याणा पुस्तके च दृश्यते । तदविरोध्यनादित्वसमकक्षत्वादिति भाष्यमिति भाति अथवा, तदविरोध्यनादित्वनभोनभस्त्वसमत्वात् –आहोस्वित् समकक्षत्वादिति वा ।

३ **अनुत्पत्तीति** । Text amended.

४ **भगवत इति** । भगवत शक्त्या सर्वं सभाव्यत इति केवलनिमित्तकारणत्वमेवेति भाव ।

## (४) ॥ तेजोऽधिकरणम् ॥

## सू०॥ ओं ॥ तेजोऽतस्तथा ह्याह ॥ ओं ॥ १० ॥

अनन्तरसङ्गतिमाह—एवं सर्वस्यापीति। उत्पत्तेरेवासिद्धौ कारणविशेषचिन्ताया अनवसरग्रस्तत्वेनाद्यद्वितीयाभ्यां सर्वस्योत्पत्तौ साधितायां[1] जनकीभूतस्य ब्रह्मणोऽप्यन्यजन्यत्वे पुनस्तत उत्पत्तिर्न सम्भवतीति शङ्कायां तृतीयाधिकरणेन परिहृतायां सर्वस्यापि ब्रह्मेतरस्याविवादेनोत्पत्तौ सिद्धायामेतच्चिन्तावसर इति भावः। [2]विवादाभावेनेति। अधिकरणद्वयप्रतिपादितवियत् मातरिश्वादीनां ब्रह्मान्यजन्यत्वप्रापकाभावाद् विवादाभावेन न तदर्थमधिकरणान्तरं कर्तव्यमिति भाव। यद्वा, पूर्वाधिकरणे सत इत्युक्तस्य ब्रह्मणोऽत्र "अतः" इति [3]परामर्शादनन्तरसङ्गतिर्द्रष्टव्या। श्रुतिक्रमेणाप्यनन्तरसङ्गतिं दर्शयन् विषयमाह—वायोरनन्तरप्राप्तमिति। "असम्भवस्तु"त्यनेनोक्तरीत्या व्यवधानं न दोष इति भाव। किमिति। अत्र तेज किं वायोर्जायते ब्रह्मणो वेति चिन्ता। तदर्थं ब्रह्मजातत्वश्रुति वायोरग्निरिति श्रुतिविरुद्धा न वेति। तदर्थं सा श्रुतिर्वायोर्मुख्यकारणत्वप्रतिपादकत्वेन निरवकाशोतद्वारपरत्वेन सावकाशेति। तदर्थं ब्रह्मणो द्वारतया वायुग्रहणं किं तद्रहितस्याशक्त्योत शक्तस्यापि लील्येति। तदर्थं तत्र प्रमाणं नास्त्युतास्तीति। वायोरग्निरित्यादेर्नान्यत उत्पत्तिर्ग्राह्येति भाष्यानुसारेण पूर्वपक्षमाह—वायोरिति। विष्णोरेव तेजस उत्पत्तौ द्वारकारणवैयर्थ्यमिति न्यायविवरणोक्तयुक्तिं वक्तुमाह—न चेति। विष्णोरेवेत्येवशब्दानुरोधादाह—[4]वायुमन्तरेणेति। आद्यपक्षोत्तरत्वेन न्यायविवरणं योजयति—आद्ये व्यर्थमिति। उभयकारणत्वनिवृत्त्यर्थमिति भाष्यानुसारेण द्वितीये दोषमाह—द्वितीय इति। तत्तेजोऽसृज-

---

१. साधितायामिति। Text amended

२. विवादेति। वियदादीना भगवतः सभव इत्यस्मिन्नर्थे इति भाव।

३. परामर्शेति। Text amended.

४. वायुमिति। "वायुद्वारमन्तरेणेति" "मध्वविलास" पुस्तकपाठ।

तेति श्रुतिर्ब्रह्मकारणत्वमात्रपरा वा ब्रह्ममात्रकारणत्वपरा वेति विकल्प हृदि निधाय क्रमेण पक्षद्वये दोषमाह—**तस्या इत्यादिना** । सूत्रे "अत" इत्येतत्पूर्वसूत्रस्थ"स"च्छब्दोक्तपरमात्मपरामर्शकं सावधारण च । "तथा"शब्दो वियदादिसमुच्चयार्थ । "हि"शब्दो हेत्वर्थ । असम्भव इत्युक्तप्रकृत्यर्थमात्रस्य विवक्षितप्रत्ययोगेनानुवृत्तिरित्यभिप्रेत्यप्रवृत्तस्य वायोरग्निरित्यादिभाष्यस्याभिप्रायमाह—**न**
11 **वायोरित्यादिना** । द्वारमनुसृत्यैव विष्णो प्रवृत्तिरिति **न्यायविवरणा**भिप्रायमाह—**वाय्वादेः अकारणत्वेऽपीति** । अनेनानुसृत्यैवेत्येवशब्दाध्याहृतेन लीलयेत्यनेन सम्बन्धो वा शक्तोऽपि स्वेच्छामनुसृत्यैवेत्यभिप्रायो वा उक्तो भवति ॥

ननु "वायोरग्निरि"ति श्रुतेर्भूतवायोरग्निं प्रत्युपादानत्वमात्रप्रतिपादकत्व "तत्तेजोऽसृजते"ति श्रुतेस्तु ब्रह्मण कर्तृत्वप्रतिपादकत्वम् । सति चैव श्रुत्योर्विरोधाभावादधिकरणमेवेद व्यर्थमिति दूरे उभयकारणत्वनिवृत्त्यर्थेति अभ्यधिकचिन्तावसर इत्याशयेन शङ्कते—**स्यादेतदिति । देवतात्वादिति** । तथा च श्रुतिद्वयस्यापि निमित्तपरत्वेन विरोधप्राप्तौ "वायोरग्नि"रिति श्रुतेर्देवताद्वारत्वमात्रपरत्वेन व्यवस्था वक्तुमायास इति भाव । **उपादानशक्तिश्चेति** । "तत्तेजोऽसृजत" इति श्रुतेर्ब्रह्मणो भूतवाय्वनुप्रवेशेन तद्गतोपादानत्वशक्तिप्रेरकत्वेनापि कारणत्वप्रतिपादकत्वमभिमेतम् । "वायोरग्नि"रिति श्रुतेर्ब्रह्मनैरपेक्ष्येणोपादानत्वप्रतिपादकत्वे विरोधप्राप्तौ ब्रह्मप्रेरितोपादानत्वशक्तियुक्तत्वरूपद्वारत्वप्रतिपादकत्वेन "वायोरग्निरिति" श्रुतेर्व्यवस्था वक्तुमायास इति भाव ॥ ४ ॥

॥ इति तेजोऽधिकरणम् ॥ ४ ॥

---

१ द्वारेति । निनेच्छानुरोधेन केवल लील्यैव वाय्वादिद्वारमनुसृत्य भगवत प्रवृत्तिरिति द्रष्टव्यम् ।

२ मायास इति । श्रुतिद्वयविरोधपरिहारार्थमायास इति भाव ।

## (५) ॥ अब्धिकरणम् ॥

### सू० ॥ ओं ॥ आपः ॥ ओं ॥ ११ ॥

श्रुतिक्रमेणैवानन्तरसङ्गतिं दर्शयन् विषयमाह—तेजसोऽनन्तरप्राप्ता इति । किमिति । अत्राप किं तेजसो जायन्त उत ब्रह्मण एवेति चिन्ता । तदर्थं ब्रह्मजातत्वश्रुति"रग्नेराप" इति श्रुतिबाधितोताबाधितेति । तदर्थं"मग्नेराप" इति श्रुत्यनुग्राहिका घर्मात् स्वेददृष्टिरूपा युक्तिस्तन्मूलभूता "तस्माद्यत्र क्वचे"ति श्रुतिश्च किं निरवकाशा द्वारकारणत्वपरत्वेन सावकाशेति । अग्नेराप इत्युक्तेऽपीति भाष्यानुरोधेनाऽऽह— अग्नेरेवेति । तेजस एवानुत्पत्त्यङ्गीकारे घर्मात् स्वेददृष्ट्यनुसार इति गुणाधिक्यमिति न्यायविवरणोक्तं तन्निवर्तनीयाशङ्कानिरासपूर्वकमाह—न चेति ॥ प्रत्यक्षव्याप्तिमूलकत्वेन युक्ते प्राबल्यमुक्त्वा श्रुतिसबादित्वेनापि तदाह—तथा च श्रुत्यन्तरमिति । ब्रह्मैवेत्यादिभाष्यस्योत्सूत्रितत्वशङ्कानिरासार्थमाह—अत्रापीति । ब्रह्मैवेति श्रुतेरित्यर्थ इति । उपलक्षणमेतत् । मुख्यार्थत्यागापत्तेरिति न्यायविवरणानुसारेण तदिदं सर्वमिति श्रौतसर्वशब्दमुख्यार्थत्यागापत्तेरित्यपि ग्राह्यम् । अन्यथा भाष्ये तन्नोदाहृियेतेति ज्ञेयम् । न्यायप्राप्तेति । यद्यपि पूर्वाधिकरण एव सौत्रतेज पदस्यान्योपलक्षकत्वमङ्गीकृत्य"आदि"पद भाष्ये प्रयोक्तव्यम् । प्रथमातिक्रमे कारणभावात् । तथाप्येतदधिकरणद्वयान्तेऽधिकरणद्वयार्थप्रमाणे उदाहरणीये, तत्र च वाय्वादीना ग्रहणात्तदनुसारेणात्रैव"आदि"पदप्रयोग इति भाव ॥ ५ ॥

॥ इत्यब्धिकरणम् ॥ ५ ॥

---

१ प्राबल्यमिति । युक्तिमद्वितत्वेन तेजोजातत्वश्रुते प्राबल्यमिति भाव ।

## (६) ॥ पृथिव्यधिकरणम् ॥

## सू०॥ ओं ॥ पृथिव्यधिकाररूपशब्दान्तरादिभ्यः ॥ ओं ॥ १२ ॥

अवसरलक्षणामनन्तरसङ्गतिमाह—**एवं सर्वस्येति** । "न वियदश्रुतेः" "एतेन मातरिश्वा व्याख्यातः" इत्यधिकरणाभ्यां नभोवाय्वादेः साक्षाद् ब्रह्मजातत्वे "तेजोऽतस्तथा ह्याह" "आपः" इत्यधिकरणाभ्यां च वाय्वादीनाम् आकाशादिद्वारा[1] ब्रह्मजातत्वे सिद्धे इत्यर्थः । अन्यद्वारा ब्रह्मजातत्वानिश्चये द्वारविषयकश्रुतिविचारस्यानवसरग्रस्तत्वादिति भावः । अनन्तरसङ्गत्यन्तरं सूचयन् विषयमाह—**प्रकृता इति** । **किमन्नस्येति** । अत्र पृथिवीत्यनन्तरम् अनिर्णये[2] उत पृथिव्या एवेति ज्ञेयः । अन्यथा **नापः पृथिव्याः कारणं नाप्यन्नस्येति** नात्रापां द्वारकारणत्वानिर्णयाच्छ्रुतिद्वयस्याप्रामाण्यं कल्प्यमिति पूर्वपक्षसिद्धान्तानानुगुण्यापत्तेः । अत्र 'ता अन्नमसृजन्त, ता आप ऐक्षन्त' इति श्रुतिद्वयं परस्परविरुद्धत्वेन, अप्रमाणमुत प्रबलानुरोधेन दुर्बलस्यार्थान्तरकल्पनया श्रुतिद्वयं प्रमाणं वेति चिन्ता तदर्थमापः किमन्नस्य पृथिव्या वा द्वारकारणमित्यनिर्णय उत पृथिव्या एवेति निर्णय इति । तदर्थं ता "अन्नमसृजन्ते"ति श्रौतोऽन्नशब्द किं प्रसिद्धान्नपरः किं वा पृथिवीपर इति । तदर्थं श्रौतान्नशब्दस्य प्रसिद्धान्नपरत्वसाधिका बहुवाक्यानुवृत्तित्ववृष्टिजत्वादियुक्तिः किं निरवकाशोत सावकाशेति । तदर्थं तद्युक्तिबाधकमन्नशब्दस्य पृथिवीपरत्वसाधकं च प्रमाणं नास्त्युतास्तीति । अतो विरुद्धत्वादप्रामाण्यमिति भाष्याभिप्रायमाह—
112 **नापः पृथिव्या इत्यादिना** ॥

ननु वियदाद्यधिकरणवदन्यतरश्रुत्यप्रामाण्येन पूर्वपक्षेऽपि ब्रह्मणो जगज्जन्मादिकारणत्वाक्षेपसम्भवात् परस्परविरुद्धत्वेन उभयाप्रामाण्येन पूर्वपक्षः कुत इत्यत आह—**निरवकाशत्वेनेति** । अद्भ्यो वा अन्नमुत्पद्यत इत्याद्युक्तप्रसिद्धान्नाख्यार्थाविरोधेन प्रसिद्धान्नस्वीकारे बहुवाक्यानुवर्तितेति गुणलाभ इति

---

१. **द्वारेति** । अन्यद्वारकैवोत्पत्तिरिति भगवत्सङ्कल्प इति भावः ।

२. **अनिर्णय इति** । किमन्नस्योत पृथिव्या इत्यनिर्णयः ।

न्यायविवरणं ता अन्नमिति श्रुतेर्निरवकाशत्वोपपादकत्वेन योजयति—अन्न-श्रुतेरिति । न्यायविवरणे आदिपदागृहीता लिङ्गप्रतिपादकश्रुतिमुदाहरति—तस्मादिति । विरुद्धत्वादप्रामाण्यमिति भाष्यानुरोधेन न्यायविवरणमुपलक्षणीकृत्य अद्भ्य पृथिवीति श्रुतेर्निरवकाशत्वं स्वयमुपपादयति—न च पृथिवी-पदेनेति । उक्तश्रुतिविरोधादिति ॥ "ओषधीभ्योऽन्नमि"ति श्रुतिविरोधादित्यर्थ । बहुकल्पनापातादिति । अन्नस्याब्जन्यत्वम् ओषधिजन्यत्वं पृथिव्या अब्जन्यत्व चेति बहुकल्पनापातादित्यर्थ । मुख्यार्थत्याग इत्यर्थ । भूतविषयत्वादिति । अन्नस्य भौतिकत्वेन भूतत्वाभावात् । भूतशब्देन भौतिकमेव व्यावृत्य तेन भूताभिमानिदेवतापीति ज्ञातव्यम् । प्रकरणस्य भूतविषयत्वादित्यादिना पृथिवीवत् कार्ष्ण्यप्राचुर्यमित्यन्तेनाधिकारादीना निरवकाशत्वाच्चेति न्यायविवरणमपि व्याख्यातं भवति । तत्रादिपदेन रूपाख्यलिङ्गस्यापौरुषेयत्वादियुक्तीना च ग्रहणमिति बहुवचनोपपत्तिरिति च ज्ञातव्यम् । अन्नशब्दस्य प्रयोगबाहुल्यात् पृथिव्यामपि शक्तिमत्त्वादिति न्यायविवरणानुसारेण ता अन्नमित्यादिभाष्यमवतारयति । इदानीं पृथिव्यामपीति, बहुवाक्यानुरोधोऽप्यत्रैवेति न्यायविवरणानुसारेण पूर्वोक्तयुक्तेः सावकाशत्वमाह—न च वृष्टिजत्वेत्यादिना । अद्भयो वा अन्नमुत्पद्यत इत्यादावन्नशब्देन पृथिव्यास्त"स्मायत्र क्व च शोचती"त्यादावन्नशब्देन पार्थिवस्य ग्रहणमिति बहुवाक्यानुरोधेऽपि सिद्धान्त एवेति न्यायविवरणग्रन्थार्थ । तेजोऽशितमितिर्नेदिति । तत्र तेजस एव भक्षणासम्भवाद्यथा तेजश्शब्दस्तैजसपरस्तथा पृथिवीवाचकोऽन्नशब्द पार्थिवपर इत्यर्थ ॥ ६ ॥

॥ इति पृथिव्यधिकरणम् ॥ ६ ॥

---

१ मुख्यार्थ इति । प्रबलप्रमाणविरोधमन्तरा मुख्यार्थस्य त्यागे नियामकाभावात् ।

२ अशितमिति । Text amended.

## (७) ॥ तदभिध्यानाधिकरणम् ॥

## सू०॥ ओं ॥ तदभिध्यानादेव तु तल्लिङ्गात् सः ॥ ओं ॥ १३ ॥

अनन्तरसङ्गतिमाह **एवमिति** । तत्संहारविषयश्रुतिविरोधपरिहारादिति । अधिभूतादिसंहारेत्यर्थ । सृष्ट्यनन्तरत्वेऽपि विष्णो सर्वस्थितिकर्तृत्वस्य सर्वसमतत्वेन विवादाभावात् संहर्तृत्वस्यान्यनिष्ठत्वे पितुरन्यस्य मारकत्वरूपयुक्तिवदत्र तादृशपूर्वपक्षयुक्त्यभावाच्च तदविचार्य संहारकर्तृत्वमेव विचार्यत इति भाव । यद्यपि "प्रकृतैतावत्त्वम्" इत्यत्र विष्णौ स्थितिकर्तृत्व विचार्यम्[१], तथाप्यत्र सर्वसंहर्तृत्वस्य विष्णुनिष्ठत्वे विचारित एव संहारकर्तु संहारादन्यरक्षाया अयोग इति पूर्वपक्षयुक्तेरुत्थाने संहारकत्वव्यतिरिक्तपालकत्वमेव तत्र समर्थ्यते, न तु पालकत्वस्य अन्यनिष्ठत्व [२]निवार्यत इति ज्ञातव्यम्—**किं भगवतेति** । अत्र भूतादिकं किं रुद्रेण लीयते, उतविष्णुनेति चिन्ता । तदर्थं "यत्प्रयन्ती"ति श्रुती "रुद्रो मा विशान्तक" इति श्रुतिबाधितत्वेनाप्रमाणमुत प्रमाणमिति । तदर्थं "रुद्रो मा विशान्तक" इति श्रुति किं युक्तत्वेन रुद्रस्य स्वातन्त्र्येण संहर्तृत्वप्रतिपादकतया निरवकाशोत विष्णुकर्तृकसंहारे रुद्रस्य द्वारमात्रपरतया सावकाशेति । तदर्थं विष्णुर्न संहर्ता तदुत्पादकत्वाल्लोकपितृवदिति युक्ति किं व्याप्त्यादिमत्त्वेनानाभासोत ममतादिदोषयुक्तत्वरूपोपाधिग्रस्तत्वेनाभासेति । समन्वयाध्यायोक्तरीत्या विशिष्य द्युभ्वाद्यधिकरणोक्तरीत्या च रुद्रादिशब्दाना मुख्यार्थत्वाभिप्राये तेनैव गतार्थता । "तदधीनत्वादर्थवदि"त्युक्तन्यायेनामुख्यार्थत्वाभिप्राये "तेजोऽतस्तथा ह्याह" त्यधिकरणेन गतार्थतेत्याशङ्क्य प्रतिषेधति—**न च वाच्यमिति** । रुद्रादीना स्यकारित्वाङ्गीकारे पितुरन्यस्य मारकत्वदृष्टेर्लोकदृष्ट्यनुसारित्वमिति गुण इति **न्यायविवरणो**क्ताम्यधिकाशङ्काहेतुभूता युक्तिमाह—**यथा कथञ्चिदित्यादिना** । **भाक्तार्थत्वेनेति** । "रुद्रो

---

१ **विचार्यमिति** । "विचार्यत" इति काणियूरस्वामिना पुस्तके, रामचन्द्राचार्याणां पुस्तके च दृश्यते ।

२ **निवार्यत इति** । Text amended.

मा विशान्तक" इति श्रुते. विष्णु-असंहृतपदार्थसंहर्तृत्वरूपभागविषयत्वेनेत्यर्थः। युक्तीति। क्वचिदपि विष्णो संहर्तृत्वाङ्गीकारे पितृत्वरूपयुक्तिविरोधानिस्तारादित्यर्थः। "असि" "आविश" इति मध्यमपुरुषानुरोधादाह—**रुद्रत्वमिति**। "मे"त्येतदस्मच्छब्दादेशरूप निषेधार्थकं च तन्त्रेणोपात्तमिति भावेनाह—**मा मां विशेति**। अन्यथा निषेधार्थकत्वे कर्मानुक्तिरस्मच्छब्दादेशरूपत्वेऽन्तक- P 113
प्रवेशप्रार्थनानुपपत्तिरिति भाव। यद्वा, श्रुतौ सवर्णदीर्घाङ्गीकारे माम् आविशेति पदाभिप्रायेण मामाविशेत्युक्तम्। अस्मिन् पक्षे प्राणाना ग्रन्थिरसि इति हेतूक्तिस्तेनान्तेति प्रवेशफलोक्तिश्चेति ज्ञेयम्। आप्यायस्वेत्यत्र कर्मानुक्तेरस्मच्छब्दादेशरूपस्यानुवृत्तिरित्यभिप्रेत्याह—**मामाप्यायस्वेति**॥ सूत्रेऽवधारणार्थक"तु"शब्दान्वितेन "स" इति तच्छब्देन "तेजोऽत इति" सूत्रस्थात शब्दोक्त परमात्मा परामृश्यत इति भावेनाह—**विष्णुरेव संहारकर्तेति**। सूत्रे तदभिध्यानादित्येतद्युक्तिप्रदर्शकं श्रुतिसूचकमपि भवतीति भाष्ये "तस्याभिध्यानात्" इति श्रुत्युदाहरणमित्यभिप्रेत्याह—**तस्याभिध्यानादिति**। **श्रुताविति**। विष्णोर्जगत्संहर्तृत्वे एतच्छ्रुतिप्रतिपादितससारमोक्षस्य भगवदिच्छाधीनत्वं कथं हेतुरित्याशङ्कापरिहाराय नायं साक्षाद्धेतु किं तु हेतुसाधकहेतुरित्याशयेन सूत्रे तल्लिङ्गादित्युक्तम्। तस्य च सूत्राशस्य तस्माद्बन्धलयस्य भगवदिच्छाधीनत्वलिङ्गात्स परमात्मा बन्धलयकर्तृत्वेनानुमीयत इत्यर्थ इत्यभिप्रेत्य प्रवृत्तस्य बन्धलयस्य तदभिध्याननिमित्तत्वलिङ्गात् तत्कर्तृत्वं प्रतीयत इति भाष्यस्याभिप्रायमाह—**किं चात** इत्यादिना। भाष्ये यथाश्रुतहेतुसाध्ययोर्वैयधिकरण्यशङ्कापरिहारायाह—**तत्कृत इति**। संसारान्मोक्ष इत्यनुवर्तते। अनेन भाष्ये कर्तृत्वं नाम कृतिमत्त्वं विवक्षितम्। बन्धलयस्येश्वरेच्छाधीनत्वलिङ्गेन तत्प्रयत्नाधीनत्वानुमानोपपत्तेरित्युक्तं भवति॥

नैनु बन्धलयस्य भगवत्कर्तृत्वमपि कथं जगत्संहर्तृत्वहेतुरित्यत सूत्रार्थलब्धाभिप्रायप्रदर्शनपर किमु सादेर्जगत इति भाष्यं व्याचष्टे—**एवं चानादेरिति**।

---

१ विष्णु इति। एकस्य भागस्य विष्णु सहारक अन्यस्य तु रुद्र इति भागश सहारोपपत्तेरित्यर्थवर्णनेन श्रुतिविरोधस्य परिहार सुशक इति भाव।

२ नन्विति। भवतु भवबन्धलयस्य कर्ता भगवान्। तथापि तेन कथं भगवत प्रपञ्चसंहारकर्तृत्वमिति शङ्कते। भवबन्धलयोऽन्य। जगत्सहारस्त्वन्य। किं केन सगतमिति शङ्कार्थ।

तस्याभिध्यानादित्यस्य जीवकर्तृध्यानपरत्वे तत्त्वभावादित्यनेन पुनरुक्तेर्विश्वमायानिवृत्ते सकृदेव जायमानत्वेन भूयश्चेत्यस्य तत्रान्वयासम्भवाच्च श्रुतिं यथावद् व्याचष्टे—**भगवति मनोयोजनादित्यादिना**। भूयश्चेति चशब्दाद् वीप्सालाभाद् भूयोभूय इत्युक्तम् । तत्त्वभावादित्यस्य **यथार्थध्यानाच्चेत्यर्थः**। **भगवदभिध्यानादिति**। भगवदिच्छायाः सकाशादित्यर्थ.। **स्पष्टश्रुतिभ्य इति**। अत्र यमप्येतीति भाष्योदाहृतश्रुतिव"न्न विष्णोर्विलयकृन्न विष्णोरन्यो विमुक्तिद" इति **न्यायविवरणोदाहृतापि** श्रुतिर्ग्राह्या। अत एव सामान्येन **स्पष्टश्रुतिभ्य** इत्युक्तम्। स्मृतौ हरेरपि प्रकृतत्वादत्रेत्यस्य तत्परत्वभ्रमं वारयितुं **परतन्त्रेऽपीति** व्याख्यानं कृतम्। ईरितमित्यस्य नपुंसकलिङ्गत्वेनैकदेशक्रिया चेत्यस्यानुवृत्त्ययोगादाह—**सृष्ट्यादिकमिति**। **पूर्वत्रेति**। पूर्वत्रापीत्यर्थः। तेन समस्तमित्यस्य न विशेष्यानुक्तिदोषः ॥

नन्वनया स्मृत्या कथं श्रुतिविरोधपरिहार इत्यतस्तद्वाक्यानां सावकाशत्वादिति **न्यायविवरणानुसारेण** स्मृत्यभिप्रायमाह—**परतन्त्रसंहर्तृत्वपरेति**। रुद्रस्य क्वचित् सहारद्वारत्वेनैवेति **न्यायविवरणानुसारेणो**त्तरस्मृतिमवतारयति—**पारतन्त्र्यं चेति**। आख्यारूपे यस्यासाविति रूपिण इतीनेरेवार्थ उक्तो न बहुव्रीहिरिति ज्ञातव्यम्। लोकपितृवैलक्षण्याद्विष्णोर्यथावाक्यमङ्गीकारोपपत्तेरिति **न्यायविवरणा**भिप्रायमाह—**ममत्वादिदोषराहित्येनेति**। अनेन ममत्वादिदोषयुक्तत्वं साधनधर्मावच्छिन्नसाध्यव्यापकमुपाधिरित्युक्तं भवति ॥ ७ ॥

॥ इति तदभिध्यानाधिकरणम् ॥ ७ ॥

---

## (८) ॥ विपर्ययाधिकरणम् ॥

**सू०॥ ओं ॥ विपर्ययेण तु क्रमो अत उपपद्यते च ॥ ओं ॥१४॥**

अनन्तरसङ्गतिमाह—**सर्वं भगवतेति**। पूर्वाधिकरणे इति शेषः। कर्तृविशेषनिर्धारणेन लये निर्धारित एव तत्र क्रमव्युत्क्रमरूपप्रकारविचारावसर इति

---

१ भूय-इति। Text amended.

२. पूर्वेति। Text restored.

भावः । **किमिति** । अत्राधिभूतादीनि किमुत्पत्तिक्रमेणैव लीयन्त उत तदपेक्षया व्युत्क्रमेणेति चिन्ता । तदर्थं व्युत्क्रमश्रुतिः क्रमश्रुत्यनुगृहीतत्वेन प्रबलोत नेति। तदर्थं बहुश्रुतिगतः क्रमशब्दः किमनुक्रमरूपक्रमपर उत व्युत्क्रमरूपक्रमपर इति । तदर्थं लोके पूर्वोत्पन्नानां पूर्वं लये पूर्वोत्पन्नत्वं प्रयोजकमुत सामर्थ्याभाव एव प्रयोजक इति । लोकानुसारित्वमिति **न्यायविवरणो**क्तयुक्तिमाह— **उत्पत्तिक्रमानुसारेणेति** । न्यायविवरणोदाहृताः श्रुतीराह—**क्रमादुत्पद्यत इति** । अवधारणार्थकतुशब्दस्य यथाश्रुत एव सम्बन्धः । लय इति सप्तम्यन्तपदाध्याहार इत्यभिप्रेत्य "विपर्ययेण तु क्रम" इति सूत्रांशं प्रतिज्ञाप्रदर्शनपरतया तावत् स्वयं व्याचष्टे—**उत्पत्तिक्रमेति**। क्रमस्तु विपर्ययेणेति सम्बन्धे "अत एव ही"ति श्रुतिगतिप्रदर्शकश्च सूत्रांश इति प्रवृत्तं क्रमवचनमपि विपरीतक्रमापेक्षयेति भाष्यं व्याचष्टे। **क्रमवाचिश्रुतेरपीति** । अनेन क्रमवाक्यस्य सावकाशत्वादिति **न्यायविवरण**मपि व्याख्यातं भवति। अवधारणार्थकतुशब्दस्य अत इत्यनेनापि सम्बन्धमभिप्रेत्य प्रवृत्तमत एव भाल्लवेयश्रुतिवचनादिति भाष्यं व्याचष्टे—**यस्यामेवेत्यादिना** । यस्यामेव तस्यामेवेत्यनेन पूर्वपक्षिणा साधकत्वेनोदाहृता तत एव श्रुतिवचनादेवेति भाष्याभिप्राय उक्तो भवति। बहुप्रकारत्वं क्रमस्येति । **न्यायविवरणा**नुसारेण स्मृत्यभिप्रायमाह—**अस्ति क्रमव्युत्क्रमयोरिति** । अनुक्रमव्युत्क्रमयोरित्यर्थः। **न्यायविवरणो**दाहृतश्रुतिमाह—**तथा च श्रुत्यन्तरमिति** । **परिहृत** इति । तत्रापि क्रमशब्दस्य व्युत्क्रमपरत्वादिति भावः । **लौकिकानां सामर्थ्यसाम्यादिति** । अनेन पूर्वोत्पन्नत्वहेतुः सामर्थ्याभावलक्षणोपाधियुक्त इत्युक्तं भवति । सन्निधानमिति पदस्वारस्यात् पूर्वोत्पन्न इति व्याख्यायैतेषामिति बहुवचनानुरोधेनाह—**प्रथमा चेति**। पूर्वव्याख्याने तु वीप्सयैव बहुवचनोपपत्तिरिति भावः ॥ ८ ॥

**॥ इति विपर्ययाधिकरणम् ॥ ८ ॥**

---

१. क्रमेति । क्रमो द्विविधः—व्युत्क्रम एकः ; अनुक्रमस्त्वन्य इति द्रष्टव्यम् ।

मनसश्च परामर्शकत्वेन सप्तम्यन्तः पष्ठ्यन्तश्चोपात्तः । तथा च तेषु चराचरेषु तस्य मनसा भावेन विज्ञानभावित्वादिति सूत्रार्थ इत्यभिप्रेत्य प्रकृतं चराचरेष्विति भाष्यं व्याचष्टे—**चराचरविषयेति** । न च लोकदृष्ट्यनुसारित्वरूपयुक्तिविरोधः; विज्ञानतत्त्वस्य मनस्तत्त्वापेक्षया सामर्थ्याधिक्यस्य प्रमितत्वेन युक्तेः पूर्वाधिकरणन्यायेनैव निरस्तत्वात् समसामर्थ्यस्यापि सम्भवादित्यस्य निर्मूलत्वेनैवोपेक्षणीयत्वादिति---**तत्त्वापरोक्ष्येति** । अत्र " यस्मादन्ते हरे दृशिः " इति वक्ष्यमाणानुरोधेन तत्त्वशब्देन तत्त्वाभिमानिदेवतानामपि ग्रहणम् । अत्राद्ये—लिङ्गमात्रेण पूर्वपक्षिते श्रुत्यादिरूपविशेषप्रमाणाभावोक्त्या सिद्धान्तः । द्वितीये—लिङ्गस्य सावकाशत्वोक्तिरिति सूत्रक्रमः ॥ ९ ॥

॥ इत्यन्तराधिकरणम् ॥ ९ ॥

---

## (१०) ॥ नात्माधिकरणम् ॥

### सू० ॥ ओं ॥ नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ ओं ॥ १७ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**सर्वोत्पत्तिलयकर्तृत्वेन प्रकृत** इति । पूर्वाधिकरणे विप्रतिपत्तिनिरासेन ब्रह्मव्यतिरिक्तस्य सर्वस्य लयोक्तौ तर्हि ब्रह्मणोऽपि चेतनत्वेन[1] तत्साम्याल्लयः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । **लीयत इति** । अत्र परमात्मा लीयते न वेति चिन्ता । तदर्थं"मन्यस्तमसि निलीय " इति श्रुतिर्ब्रह्मणो देहलये प्रमाणं न भवत्युत भवतीति । तदर्थं सा श्रुतिश्चेतनत्वयुक्तियुक्तत्वेन निरवकाशोतापिहितत्वपरत्वेन सावकाशेति । तदर्थं श्रुतिसावकाशत्वयुक्त्याभावसत्त्वयोः कल्पकं ब्रह्मणो देहनित्यत्वसाधकं प्रमाणं नास्त्युतास्तीति । " स इदं सर्वं विसृजति " इत्यादिलिङ्गादित्यनेन भाष्येऽधिकांशोदाहरणस्य प्रयोजनमुक्तम् । भाष्ये परमात्मापीत्यपिशब्दसूचितां चेतनत्वेन साम्याद्विष्णोरपि देहलय इति **न्यायविवरणो**-

---

१. **चेतनत्वेनेति** । सर्वलयकारणस्य ब्रह्मणोऽपि लयः किं न स्यादिति शङ्कते चेतनत्वात् सर्वान्त.पातित्वाच्च ।

दाहृतां युक्तिमाह—**विष्णुर्लययानिति** । "असम्भवस्तु" इत्यधिकरणेन गतार्थत्वं निरस्यति—**न च वक्तव्यमिति** । **स्वातन्त्र्यस्यापीति** । तथा च स्वातन्त्र्यस्याप्रयोजकत्वादनुत्पराशेषेणैवैतदधिकरणप्रवृत्तिरिति भावः । **ब्रह्मलयस्याश्रुतत्वादित्यनेन** । श्रुतत्वाचान्यथेति **न्यायविवरणमपि** व्याख्यातं भवति । **प्रादुर्भावश्चोच्यत इति** । "तपस्तन्महिमा जायतैकम्" इति श्रुतिशेषेणेत्यर्थः । **बाहुल्येनेति** । अनेन ताभ्य इति सूत्रगतस्य श्रुतिभ्य इति भाष्यगतस्य बहुवचनस्य प्रयोजनमुक्तं भवति । **देहनित्यत्वस्याप्युक्तत्वादिति** । अनेन "सर्वा एते चिदात्मनो ब्रह्मलयमनुप्राप्य विष्णोरुदरे संविशन्ति" इति तस्योदरे सर्वसंग्रहणादिश्रुतिभ्यो नित्यत्वावगतत्वात्तद्देहस्येति न्यायविवरणमुक्तार्थं भवति ॥ १० ॥

॥ इति नात्माधिकरणम् ॥ १० ॥

---

## (११) ॥ ज्ञाधिकरणम् ॥

## सू० ॥ ओं ॥ ज्ञोऽत एव ॥ ओं ॥ १८ ॥

सूचीकटाहन्यायेनाल्पमधिभूतादिविचारं कृत्वेदानीमापादसमाप्ति बहुलो जीवविचार इति सङ्गतिमाह—**एवमिति । किमिति** ॥ अत्र जीवः किमुत्पत्ति- P. 11 मान्न भवति उत भवतीति चिन्ता । तदर्थं "सव एते आत्मानो व्युचरन्ति" इति श्रुतिरनादित्वयुक्त्यनुगृहीतया "नित्यो नित्यानाम्" इति श्रुत्या बाधितोताबाधितेति । तदनुत्पत्तिश्रुतियुक्त्योरुत्पत्तिश्रुतेश्च किं स्वरूपोत्पत्तिरूपविरुद्धार्थविषयकत्वम् उत स्वरूपानुत्पत्तिपराधीनविशेषलाभरूपोत्पत्तिरूपाविरुद्धार्थविषयकत्वमिति । तदर्थं

---

१. **उदर इति** । लयसमये समस्तप्रपञ्चस्य ब्रह्मण उदरेऽवस्थानात्तत्रापि भेद एव राद्धान्तः । न कदापि ब्रह्मप्रपञ्चयोरभेद इति द्रष्टव्यम् ।

२. **नित्येति** । नित्यत्वावगमादिति पाठान्तरम् ।

३. **स्वरूपेति** । स्वरूपानुत्पत्ते पराधीनविशेषावाप्तिरूपोत्पत्तेश्च न विरोध इति द्रष्टव्यम् ।

## (९) ॥ अन्तराधिकरणम् ॥

## सू०॥ ओं ॥ अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ ओं ॥ १५ ॥

अधिभूतलयविषयश्रुतिविरोधपरिहारादिति । पूर्वाधिकरणोक्त-
114 व्युत्क्रमेण स्येऽत्र क्वचिदपवादनिरासादनन्तरसङ्गतिरिति ज्ञातव्यम् । किमिति । अत्राधिभूतादीनि किं मनस्तत्त्वविज्ञानतत्त्वे विना व्युत्क्रमेण लीयन्ते उत सर्वाण्यपि व्युत्क्रमेणैव लीयन्त इति चिन्ता। तदर्थं सर्वेषां व्युत्क्रमेण लयाभिधानात् "अक्षरात् परमादेव" इति श्रुतिः, "प्राणान्मनो मनसश्च विज्ञानम्" "यच्छेद्वाङ्मनसी प्राज्ञ" इति श्रुतिद्वयप्रतिपादितोत्पत्तिलययोरेव क्रमरूपलिङ्गदर्शनबाधिता उत न वेति। तदर्थं तल्लिङ्गे क्रमलोकदृष्ट्यनुसारित्वरूपे युक्तियुक्तत्वेन निरवकाश उत सावकाश इति। तदर्थं "प्राणान्मनो मनसश्च विज्ञानम्" इति सृष्टिश्रुतिगतमनोविज्ञानशब्दौ किं तत्त्वपरावुतान्तःकरणावबोधपराविति। तदर्थं तौ शब्दौ किं तत्त्वयोरेव शक्तौ किं वाऽन्तःकरणावबोधयोरपीति। तदर्थं तयोस्तत्र शक्तत्वेऽपि एतच्छ्रुतिगतमनोविज्ञानशब्दयोरन्तःकरणावबोधपरत्वनियामकं कार्यकारणभावावेदकान्वयव्यतिरेकरूपप्रमाणं नास्त्युतास्तीति। विज्ञानमनसो क्रमेणेति सौत्रनिर्देशे तदुभयव्यतिरिक्तानां व्युत्क्रमेण लय इत्यस्यार्थस्यालाभा"दन्तरा विज्ञानमनसी क्रमेणे'ति निर्देशः कृतः। उत्पत्तिक्रमेण लीयमानत्वेनाभिमते विज्ञानमनसी अन्तरेत्युक्तिसामर्थ्यात् सूत्रे क्रमशब्दोऽव्युत्क्रमपर इत्यभिप्रेत्य प्रवृत्तं विज्ञानमनसन्तरा विपरीतक्रम इति भाष्यं केषांचित् क्रमाल्लयः केषांचित् व्युत्क्रमाल्लय इत्यङ्गीकार इति न्यायविवरणानुरोधेन व्याचष्टे—किं तु केषांश्चिदिति । अनेनान्तरा विज्ञानमनसी व्युत्क्रम इति न्यायविवरणांशोऽपि व्याख्यातः । केषांचित् क्रमात् केषांचिद् व्युत्क्रमाल्लय इत्यङ्गीकारे लोकदृष्ट्यनुसारादिति न्यायविवरणोक्तमाह—लोकानुकूलमिति । न[२] च सामर्थ्येनेति । पूर्वाधिकरणे

---

१ अधीति। "अधिभूतादिलये'ति" मध्वविलास"पुस्तके पाठः ।

२ नेति। "सामर्थ्यतारतम्येति" "मध्वविलास पुस्तकपाठः ।

पूर्वमुत्पन्नानां सामर्थ्याधिक्यस्योत्तरोत्पन्नानां सामर्थ्याल्पत्वस्योक्तत्वेन पूर्वोत्तरोत्पन्न-मनस्तत्त्वविज्ञानतत्त्वयोरपि प्राप्तसामर्थ्ये तारतम्येन विरोध उत्पत्तिक्रमेण लयाङ्गीकार इत्यर्थः। **समसामर्थ्यस्यापीति**। "सामर्थ्याधिक्यमेतेषाम्' इति स्मृतौ पूर्वोत्पन्नानां सामर्थ्याधिक्यान्ययोगव्यवच्छेदकावधारणाभावादित्यर्थः। "सर्वं वा एतत् क्रमादुत्पद्यते क्रमात् विलीयत" इति श्रुतौ सर्वस्यापि व्युत्क्रमाल्लये सङ्ग्रहादिति **न्यायविवरणं** मनसि निधायाह—**सर्वेषामपीति**। सूत्रे तद्व्यपदेशः स चासौ व्यपदेशश्च तद्व्यपदेशो मनोविज्ञानमिति व्यपदेशः चराचरव्यपाश्रयः स्यात्। यद्यपि चञ्चलान्तःकरणावबोधरूपचरतत्त्वरूपाचर-विषयकः स्यात्। तथापि "प्राणान्मनो मनसश्च विज्ञानम्" इति श्रुतौ तद्व्यपदेशस्तु भाक्तः। अन्तःकरणावबोधरूपभागविषयक इति सूत्रांशयोजनामभिप्रेत्य प्रवृत्तं मनसश्च विज्ञानमिति व्यपदेशश्चराचरेषु भागापेक्षया स्यात्; न विज्ञानतत्त्वापेक्षयेति भाष्यं व्याचष्टे—**मनःशब्दो हीत्यादिना**। अनेन मनस्तत्त्वविज्ञानतत्त्वान्तःकरणावबोधरूपचराचरेषु मध्येऽन्त करणावबोधरूपभागापेक्षयेति न्यायविवरणं योजितं भवति[2]। इदानीं च ' चराचरव्यपाश्रयः " स्थावरजङ्गमरूपसर्वविषयको यस्तद्भावो मनोभाव आलोचनमिति यावत्। तेन भावित्वादुत्पन्नत्वादवबोधस्येति तद्भावभावित्वादिति समासान्तर्गतस्यापि बुद्ध्या विविक्तस्य तद्भाव इत्यस्य चराचरव्यपाश्रय इत्येतद्विशेषणमभिप्रेत्य प्रवृत्तं चराचरेष्वालोचनाद्विज्ञानं भवतीति भाष्यं व्याचष्टे—**चराचरविषय इति**। अनेन सौत्र"चराचरव्यपाश्रय"शब्दस्तद्विषयकपर इति ज्ञापनाय भाष्ये चराचरेष्विति विषयसप्तमीनिर्देश इत्युक्तं भवति। अनेन तल्लिङ्गस्य तु चराचर-व्यपाश्रयविज्ञानादिविषयत्वेनैव सावकाशत्वादिति **न्यायविवरणमुक्ततात्पर्यम्**। **न्यायविवरणे** आदिपदेन मनोग्रहणमिति ज्ञातव्यम्। सूत्रे चराचरव्यपाश्रयत्वस्य व्यपदेशस्तद्भाक्तयोरपि[3] विशेषणज्ञापनाय "चराचरव्यपाश्रय" इति पृथङ्निर्देशः कृत इति ज्ञातव्यम्। यद्वा, तद्भावेति तच्छब्दस्तन्त्रन्यायेन प्रकृतस्य चराचरस्य

---

१. सामर्थ्येति। Text amended.

२. भवनीति। Omission supplied.

३. अपीति। Text amended.

जीवस्य स्वरूपानुत्पत्तौ पराधीनविशेषलाभलक्षणोत्पत्तौ च विशेषप्रमाण नास्त्युता-स्तीति । अनादित्वाज्जीवस्य पराधीनविशेष प्राप्तिरिति **न्यायविवरणानुसारेण** पूर्वपक्षमाह—**न जीव उत्पत्तिमानिति।** यद्यपि पराधीनविशेषप्राप्तिरिति न्यायविवरणे सूत्रद्वयनिरसनीय निष्कृष्टमेव पूर्वपक्षसाध्यमुक्तम् । जीवस्याप्युत्पत्तिरुच्यत इत्यादिभाष्यानुसारेण प्रथमसूत्रनिरसनीयतया जीवो नोत्पत्तिमानिति सामान्येन साध्योक्ति । अन्यथा विशिष्य साध्यकरणे "ज्ञोऽत एवे"त्यस्यैव तन्निषेधकत्वेन विशिष्य पराधीनविशेषलाभलक्षणोत्पत्तिप्रतिपादकत्वेन चानादिनित्यस्य जीवस्योत्पत्ति श्रुतावपि कथ युज्यत इत्यादिव्याहृतत्वशङ्कानुदयेन "युक्तेश्चेति" द्वितीयसूत्रानवतारप्रसङ्ग इति भाव । **उत्पत्तेरेवाभावप्रसङ्गादिति** । जीवस्य प्रागभाव प्रति प्रतिप्रतियोगित्वे सिद्धान्त्यभिमतताया पूर्वं विद्यमानस्यैव जीवस्य देहोत्पत्तिरूपपराधीनविशेषलाभलक्षणोत्पत्तेरेवाभावप्रसङ्गादित्यर्थ । यद्वा

"धर्माऽधर्माश्रयत्वेन स्वीकार्योऽपि नरो लय"

इत्यनुव्याख्यानोक्तरीत्या प्रलये[1] सर्वोत्पत्तिमन्निमित्तकारणादृष्टाश्रयत्वेन जीवसत्त्वस्याङ्गीकार्यत्वात्तस्य प्रा[2]गभावप्रतियोगित्वे निराश्रयादृष्टासम्भवात् कारणाभावेनजगदुत्पत्तेरेवाभावप्रसङ्गादित्यर्थ । **आकाशादीनामिति** । अनादित्वरूप हेतुविशिष्टानामव्याकृताकाशादीना पराधीनविशेषलाभरूपोत्पत्तिमत्त्वेन व्यभिचार इत्यर्थ । आकाशादीना पक्षसमत्वेन न तत्र व्यभिचार इत्यभिप्रेत्याह—**असम्प्रतिपत्तेरिति।** "नित्यो नित्यानाम्" इति जीवस्यापि नित्यत्वमुक्तमिति भाष्यानुरोधादाह—**श्रुतिश्चेति** । युक्तेश्चेति सूत्रानुरोधादाह—**न च देहोत्पत्तेरिति।** सौत्रस्या"त एवे"त्यस्य व्याख्यानान्तरपर शब्दादेवेति भाष्य व्याचष्टे—**श्रुतिसिद्धत्वादिति** । अनेन"इद सर्वमसृजत"इति सर्वस्य गृहीतत्वादिति **न्यायविवरणांशो**ऽपि व्याख्यात । **नित्यत्वानिरोधेनैवेति** । "अविनष्टा एवे"ति

---

१ **प्रलय इति** । प्रलयकालेपि जीवादिप्रपञ्चस्य सूक्ष्मावस्थापन्नस्य भगवदुदरे सत्त्वादिति भाव ।

२ **प्रागभावेति** । यद्येव तर्हि निराश्रयत्वमदृष्टस्य प्रसज्येतेति भाव ।

श्रुत्यभिप्रायकथनपरेणानेन पराधीनविशेषवत्त्वेऽप्यनादित्वस्याविरोधादिति न्यायविवरणांशस्यापि तात्पर्यमुक्तम्। **पराधीनविशेषेति** ॥

नेनु[1] जीवस्य पराधीनविशेषलाभरूपोत्पत्तिर्वियदधिकरणन्यायसिद्धेति व्यर्थमिदमिति चेत्, न; उत्पत्तिश्रुतिः पराधीनविशेषावाप्तिरूपोत्पत्तिपरा चेदनुत्पत्तिश्रुतिरपि ब्रह्मणो जीववियदादावपि तदभावपरा स्यात्। अनेकार्थत्वस्यान्याय्यत्वादित्यतीतसर्वाक्षेपेण पूर्वपक्षिते ब्रह्मणि पराधीनविशेषावाप्तिरूपोत्पत्तिश्रुतिर्नास्ति। जीवादौ त्वस्तीति तदविरोधायानेकार्थत्वं न्याय्यमिति युक्तेश्चेति सूत्र एवोक्तेः; अत **एव असंप्रतिपत्तेरिति** टीकायां सर्वमाक्षिप्तमिति। इह जीवमात्रे युक्त्या देहयोगरूपोत्पत्तिरित्युच्यते। "एतेन" इत्यत्र मुख्यप्राणस्यैवोत्पत्तिर्विशेषयुनराक्षिप्य समाहितेति न तेनास्य गतार्थतेति ज्ञातव्यम्। अत्राद्ये—जीवस्य परमात्मनः सकाशादुत्पत्तौ श्रुतिरूपप्रमाणोक्तिः। द्वितीये—तद्बाधकत्वेनोक्ताया अनादित्वयुक्तेरप्रयोजकत्वोक्तिरिति सूत्रक्रमः ॥ ११ ॥

॥ इति ज्ञाधिकरणम् ॥ ११ ॥

---

## (१२) ॥ उत्क्रान्त्यधिकरणम् ॥

### सू० ॥ ओं ॥ उत्क्रान्तिगत्यागतीनाम् ॥ ओं ॥ २० ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृतो जीव** इति। धर्मिस्वरूपतः प्राथम्याज्जीवस्य तद्विचारानन्तरं तत्परिमाणविचारादनन्तरसङ्गतिरिति भाव — **किमिति**। अत्र जीव किं व्याप्त उताणुरिति[2] चिन्ता। तदर्थं जीवाणुत्वसाधिका"अणुर्ह्येष आत्मा" इति श्रुतिरुत्क्रान्त्यादियुक्तिश्च "व्याप्ता ह्यात्मान" इति श्रुत्या तत्र तत्र परिज्ञानलक्षणयुक्त्या च बाधिते उत अबाधिते इति। तदर्थं

---

१. **नन्विति**। अस्य गतार्थताशङ्कोद्धाव्यते।

२ **इतीति**। जीवाणुत्वमत्र व्यवस्थाप्यते। आत्मैक्यवादिभिर्न जीवाणुत्वमभ्युपगम्यते।

व्याप्तत्वसाधकश्रुतियुक्त्योः किं निरवकाशत्वमुत श्रुतेरीश्वरविषयत्वेन युक्तेश्चांशचिद्गुणव्याप्त्याऽन्यथासिद्धत्वेन सावकाशत्वम्। तदर्थं श्रुतेरीश्वरविषयत्वज्ञापकं प्रकरणश्रुत्यादिकं युक्तेश्चान्यथासिद्धत्वे अन्यत्रांशचिद्गुणव्याप्त्या सार्वत्रिककार्यकारणत्वे दर्शनरूपं ज्ञापकं नास्त्युतास्तीति। आत्मन इत्यनेन पुनरुक्तिं सर्वाभेदप्रतीतिं च निवारयितुमाह—**सर्वस्येति**। सर्वस्वरूपत्वप्रतीतिमपाकर्तुमाह—**सर्वरूपाः पूर्णा इति**। "सर्वः पूर्णगुणत्वतः" इत्युक्तेरिति भावः। न तावदणुरात्मेत्यनेन जीवस्यानणुत्वमिति न्यायविवरणांशो व्याख्यातः। सर्वदेहगस्य स्पर्शज्ञानाद्रसादीनां तत्र तत्र

P. 116 परिज्ञानादिति न्यायविवरणोक्तयुक्तिमाह—**सर्वदेहेति**। **उक्तदोषत्वादिति**। "एवं चात्माकात्स्न्र्यम्" इत्यत्रेत्यर्थः। अणुत्वस्योत्क्रान्त्यादिहेतूनां साध्यसाधनभावे पतत्रिशरीरे व्यभिचारः स्यादित्यतो भाष्ये अणुरेवेत्येवकारप्रयोगसूचितमुत्क्रान्तिगत्यागतिमत्त्वादित्यनेनोत्क्रान्तिगत्यादेरिति न्यायविवरणं व्याख्यातं भवति॥

ननु जीवस्य व्याप्तत्वाभावसाधनस्य मध्यमपरिमाणवत्त्वेनाऽपि उपपत्त्याऽर्थान्तरता स्यादित्यत आह—**अत इति**। अनेन, जीवोऽणुर्मध्यमपरिमाणानधिकरणत्वे सति व्याप्त्यनधिकरणद्रव्यत्वात्; परमाणुवत्; व्यतिरेकेण घटवदिति प्रयोगो दर्शितः। अनेनाणुरेवेति भाष्यं फलितप्रदर्शनपरमित्युक्तं भवति। एष ह्येवेति द्वितीयवाक्ये स्वात्मशब्दाभावात् सूत्रे उत्तरयोरिति द्वितीयग्रहणं कथमित्यत आह—**एष ह्येवेति**।

"यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह"

इत्यादिवचनादेष ह्येवेत्यादेः स्वात्मशब्दव्याख्यानरूपत्वं द्रष्टव्यम्।

"आतेन यातं मनसो जवीयसा
रथं यं वामृभवश्चक्रुरश्विना।
यस्य योगे दुहिता जायते दिव
उभे अहनी सुदिने विवस्वतः।"

---

१. **अर्थान्तरतेति**। जीवस्य व्याप्तत्वाभावेऽपि कथमणुत्वम्? मध्यमपरिमाण स्याज्जीव इति शङ्का।

" निमिषश्चिज्जवीयसा रथेनायातमश्विना ।
अन्तिपद्भूवुवाम "

इति मन्त्रद्वयम् । ऋभव इति देवानां साधारणं नाम ॥

" निर्मितो दैवतैः सर्वैर्विष्णुना वायुना सह ।
अधिष्ठितो रथो दिव्यः सोऽध्यात्मदेहनामकः ॥

सम्यग्योगो यदा तस्य मनोवाग्धर्मभिर्भवेत् ।
देहाख्यस्य रथस्यैव तदा नारायणात् प्रभोः ॥

विविधं वासवत्वात्तु विवस्वन्नामकाच्छुभम् ।
संसारवारकं ज्ञानं दिवो दुहितृनामकम् ॥

विष्णुतत्त्वापरोक्ष्याख्यमहनी द्वे च शोभने ॥
ज्ञानावस्था मुक्त्यवस्थेत्युभे एवाहनी परे ॥"

इत्याद्यैतरेयभाष्यानुसारेण व्याचष्टे—हे अश्विनावित्यादिना । यस्य योग इति निमित्तसप्तमीत्यभिप्रेत्याह—यत्सम्बन्धादिति । विवस्वत इत्यस्य तात्पर्यं भगवत्प्रसादेनेति । दिवो दुहितेत्यस्यार्थो विद्योत्पन्नतत्त्वज्ञानमिति । अस्य जायत इति श्रौतपदेनान्वय । उभे अहनीत्यस्यार्थ —जीवन्मुक्तिमुक्त्यवस्थे इति । सुदिन इत्यस्यार्थं साध्ये भवत इति । जायत इत्यस्य वचनविपरिणामेनानुवृत्तिमभिप्रेत्याह—भवतु इति । अत एव तद्भाष्ये विवस्वतो विष्णो सकाशाद्दिवो दुहिता अहनी च जायन्त इत्युक्तम् । भूजित्यस्यार्थोऽभिभवत्विति । श्रुतौ सदिति अव इत्यस्य विशेषणम् । अंशैः शरीरे व्याप्तत्वादिति । अणोरपि P. 117 जीवस्य शरीरे व्याप्तिश्चिद्गुणस्य [२]व्याप्तत्वेनोपपद्यत इति वाक्यद्वयेन सूक्ष्मतेजोरूपेण व्याप्त्या स्पर्शादिज्ञानोपपत्तिरित्यादिन्यायविवरणमपि व्याख्यातं

---

१. जीवन्मुक्तिरिति । नेयमद्वैत्यभिमतजीवन्मुक्तिरिति द्रष्टव्यम् । "जीवन्मुक्तिश्च सा मता" इतिवादिराजगुरुपादे "युक्तिमल्लिकाया" द्वैत्यभिमतजीवन्मुक्तिस्वरूपनिरूपण निपुणतममकारीति द्रष्टव्यम् ।

२. व्याप्तेति । Text amended.

भवति। **घटादिरूपस्येवेति।** नीलघटादिसम्बन्धबालार्कप्रभादौ प्रतीयमानमौरुण्यादिकं तु न्यायमतेऽपि न प्रभानिष्ठमिति भाव ॥

ननु दीपे गच्छति प्रभायामपि गतिदर्शनात् प्रभात्वेन द्रव्यत्वमिति चेत्, न, घटे गच्छति रूपस्यापि गतिदर्शनेन व्यभिचारात्। अन्यथा श्येने चलत्यचलत स्थाणोरिव तत्रैव रूपस्य स्थिति स्यादिति। **द्रव्यत्वसाधकताविनादादिति।** उत्तराधिकरणे गुणस्यापि गन्धस्य द्रव्य विहाय वृत्तेर्वक्ष्यमाणत्वादिति भाव। **तदनुविधानादिनेति।** न च च्छायाया व्यभिचार, भित्त्यादावचलेऽपि च्छायाया सूर्यप्रातिलोम्येन चलनात्। लोके माणिक्यप्रभादौ तद्गुणत्वव्यवहार।

"तेजोबलैश्वर्यमहावबोधसद्वीर्यशक्त्यादिगुणैकराशि"

इति स्मार्तस्तेजसि गुणत्वव्यवहारश्च गुणत्वे प्रमाणमिति दर्शयितुमादिशब्द। **कारणान्तरादर्शनादिति।** तदैव तत्र तैजसपरमाणव एव द्व्यणुकादिक्रमेणालोकमण्डलमारभन्त इत्यत्र मानाभावादिति भाव। **अप्रतीतिप्रसङ्गादिति।** परैरकार्यद्रव्यस्य बहिरिन्द्रियग्राह्यत्वानङ्गीकारेण चक्षुषा तदप्रतीतिप्रसङ्गादित्यर्थ। **तथा सति प्रदीपानुविधानानुपपत्तेरिति।** निबिडावयवेन्द्रनीलादावयवविदारणस्यासम्भवित्वात्तत्र प्रभा न स्यादित्यपि द्रष्टव्यम्। **विरोधादिति।** प्रभावयवतमसो सहावस्थानमेव न। विरोधादिति भाव। **क्रमेणैवेति।** पुन पुनर्दीपागमापगमयो पुन पुनस्तदवयवेषु विकीर्यमाणेषु उत्तरोत्तर प्रकाशबाहुल्य स्यादित्यर्थ। **घटादेरपीति।** सर्वं मूर्तं घटेन स्पृष्ट मूर्तत्वात् घटसयुक्तपटवदिति प्रयोगसम्भवादित्यर्थ ॥

अत्राद्ये—स्वपक्षसाधकहेतूक्ति। द्वितीये—प्रसङ्गात् प्रथमोक्तोल्कान्त्यादीना परमात्माधीनत्वप्रतिपादनम्। तृतीये—अणुत्वे व्याप्तिश्रुतिबाधमाशङ्क्य तस्या प्रकरणेनेश्वरपरत्वोक्ति। चतुर्थे—व्याप्तिश्रुतेरीश्वरपरत्वे

---

१ आरुण्यादिकमिति। Text amended

२ तयेति। Text restored

श्रुतिलिङ्गरूपमनल्पसाधकान्तरोक्ति । पञ्चमे—तत्र तत्र परिज्ञानरूपयुक्तेर्हरिच-
न्दनदृष्टान्तेनान्यथासिद्ध्युक्ति । षष्ठे—पञ्चमसूत्रोक्तदृष्टान्तदार्ष्टान्तिकयोर्वैषम्य-
शङ्कोद्धार । सप्तमे—मानुषादिसर्वजीवापेक्षया चिद्गुणव्याप्त्या प्रागुक्तयुक्तेरन्य-
थासिद्ध्युक्तिरिति सूत्रक्रम ॥ १२ ॥

॥ इत्युत्क्रान्त्यधिकरणम् ॥ १२ ॥

---

## (१३) व्यतिरेकाधिकरणम् ॥

## सू०॥ ओं ॥ व्यतिरेको गन्धवत्तथा च दर्शयति ॥ ओं ॥ २७ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृत** इति । पूर्वाधिकरणेऽणुत्वेन
साशत्वेन च प्रकृत इत्यर्थ । तथा च यदि जीवोऽणुस्तर्हि योगिनो बहुरूप-
त्वायोग इति पूर्वपक्षोत्थानाद्वा तस्य चा"विरोधश्चन्दनवदि"त्युक्तार्थोपपादकतया
सङ्गतौ स्थितायामिति सुधोक्तरीत्या अविरोधश्चन्दनवदित्युक्तम्, साशत्वमयुक्त
निरवयवत्वेन श्रुतत्वादित्याक्षेपाद्वाऽनन्तरसङ्गतिरिति भाव । **किमिति** । अत्र
जीव किमेकरूप किं वानेकरूप इति चिन्ता । तदर्थं जीवस्य बहुरूपत्वश्रुति
किं निरवयत्वश्रुत्यनुगृहीतया एकरूपत्वश्रुत्या बाधिता न वेति । तदर्थमेकरूपत्व-
श्रुति जीवस्याशराहित्यपरत्वेन निरवकाशोत स्वरूपैक्यमात्रपरत्वेन सावकाशा
वेति । तदर्थं भिन्नाशरहितस्य बहुरूपत्व न घटत उत योगसामर्थ्यात् घटत
इति । तदर्थं योगिनोऽघटितघटनाशक्तिमत्वे ईशेन गुणसाम्यमापद्यते न वेति ।
तदर्थं सा शक्ति किं योगिना स्वातन्त्र्येणोतेश्वरप्रसादेनेति । तदर्थं तत्र प्रमाण 118
नास्त्युतास्तीति । **निरवयव इति श्रुतेरिति** । अनेन पूर्वांशोदाहरणस्य
युक्तिसूचकत्वेनापि प्रयोजनमुक्त भवति—जीवस्य बहुरूपत्वशक्तावीशेन गुण-
साम्यमिति न्यायविवरण व्याचष्टे । **तथा सतीति** । "एक एव सन्नि"ति,
श्रुत्यनुसारेणाह—**तस्याः स्वरूपैक्यविषयत्वादिति** । **योगिनामपि बहु-**

---

१ **पूर्वेति** । पूर्वाधिकरणेऽणुत्वेन निश्चितो जीव । यद्येव योगिना कथमनेक
रूपग्रहणसामर्थ्यं युज्यत इति, पूर्वपक्षोपक्षेप इति द्रष्टव्यम् ।

**रूपत्वशक्तेरिति** । "तं यथा यथेश्वरः प्रकुरुते" इति श्रुत्यंशव्याख्यानपरेणानेनेशशक्त्यैव बहुरूपत्वादेरिति **न्यायविवरणमपि** व्याख्यातं भवति ॥ १३ ॥

॥ इति व्यतिरेकाधिकरणम् ॥ १३ ॥

---

## (१४) ॥ पृथगधिकरणम् ॥

## सू०॥ ओं ॥ पृथगुपदेशात् ॥ ओं ॥ २८ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृत** इति । योगाराधितेश्वराचिन्त्यशक्त्या यत्र बहुरूपत्वशक्तिमत्त्वेन **प्रकृत** इत्यर्थः । तथा च न पूर्वाधिकरणोक्तं जीवशक्तेरीशायत्तत्वं युक्तम् । तयोरभेदादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव· । यद्वा **सुधोक्त**रीत्या "अथातो ब्रह्मजिज्ञासेत्यादिभिर्व्यतिरेको गन्धवदि"त्यन्तैः प्रतिपादितो भेद अभ्यधिकाशङ्कया आक्षिप्य विशेषयुक्तिभिः सर्वशङ्कोद्धारेण समर्थ्यत इत्यनन्तरसङ्गतिरिति ज्ञातव्यम्[१] । **किमिति** । अत्र जीव परमात्मना न भिद्यते उत भिद्यत इति चिन्ता । तदर्थं भेदश्रुतिरभेदश्रुतिबाधिता उताभेदश्रुतिर्भेदश्रुतिबाधितेति ॥ तदर्थमभेदश्रुतिरद्वैते षड्विधतात्पर्यलिङ्गोपेतत्वेन प्रबलेत भेदश्रुतिर्विरुद्धधर्माधिकरणत्वादियुक्त्युपेतत्वेन प्रबलेति । तदर्थं भेदश्रुतेः प्राबल्याङ्गीकारेऽभेदश्रुतेरप्रामाण्यं प्राप्नोत्युत सादृश्याभेदप्रतिपादकत्वेन सावकाशतया न प्राप्नोतीति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । **तत्त्वमसीत्यादि श्रुतेरि**त्यनेन जीवेश्वरैक्यमिति **न्यायविवरणांशो**ऽपि व्याख्यात । **विरुद्धेति** । देशकालादिव्यवस्थापकाभावे सतीत्यपि विशेषणीयम् । अभेदस्य सर्वाभिमतमानविरोधं वदतानेन सर्वमानविरोधादिति **न्यायविवरण**मप्युक्ततात्पर्यकं भवति । **परमात्मगुणसदृशेत्या-**

---

१. **ज्ञातव्यमिति** । अस्मिन्नधिकरणे सभावितसकलाक्षेपप्रतिक्षेपपूर्वकं जीवब्रह्मणोः पारमार्थिकात्यन्तिकभेद समर्थ्यत इति विभावनीयम् । न्यह पि चायमर्थो **विजयीन्द्र** गुरुपादै "मध्वाध्वकण्टकोद्धारे" तथा **धनमालिमिश्रैः** "मध्वमुखालङ्कारे" ।

२. **सर्वेति** । Text amended "सर्वमानविरोधम्" इति पाठान्तरम् ।

दिना श्रुते सादृश्यैन्यादिना सावकाशत्वादिति **न्यायविवरणमपि** व्याख्यातं भवति। बहुमानविरोध एकस्य दौर्बल्याच्चेति **न्यायविवरणं** मनसि निधायाऽऽह—सत्यमित्यादिना। धर्मिग्राहिविरोधाच्चेति **न्यायविवरण** व्याचष्टे—**उपजीव्येति। असिपदमात्रस्य गौणार्थवर्णनमिति।** तत्त्व पदसमभिव्याहृतासिपदबलाद्धितत्व पदार्थतावच्छेदकयोर्ब्रह्मत्वजीवत्वयो सामानाधिकरण्यरूपस्य तदाश्रयब्रह्मजीवाभेदस्य लाभ । स च ब्रह्मत्वजीवत्वयोरेकवस्तुनिष्ठत्वलक्षणमुख्यसामानाधिकरण्यरूपस्तदाश्रयाभेद सर्वप्रमाणबाधित इति त परित्यज्य सदृशवस्तुनिष्ठत्वलक्षणामुख्यसामानाधिकरण्यरूपतदाश्रययो सादृश्यरूपोऽमुख्याभेदोऽसिपदैर्लभ्य इत्यभिप्राय । यथोक्तम**नुव्याख्याने**—

"अतो भेदवदेवैता श्रुतय प्रवदन्ति हि ।
पौराणानि च वाक्यानि सादृश्याभेदसश्रयात् ॥" इति।

अत एव **सुधायां** तद्व्याख्यानावसरे ततो वर पदद्वयस्य मुख्यार्थत्वम्[2] अभ्युपगम्य सामानाधिकरण्यमात्रगौणत्वमभ्युपगन्तुमित्युक्तम्। **कथमेव श्रुतिं व्याख्यातीति ॥** P 119

ननु "रूढियोगौ विना" इत्यस्य **कर्मनिर्णयटीकायां** न केवलो रूढो नापि केवलो यौगिकोऽस्तीत्यर्थ इति मुख्यवृत्तिद्वयसमुच्चयपरत्वेन व्याख्या-

---

१ **उपजीव्येति।** उपजीव्यप्रमाणबाधिता 'तत्त्वमसि' श्रुतिरिति भाव ।

२ **मुख्यार्थत्वमिति।** "तत्' त्व पदयोर्मुख्यार्थलाभ । "असि' पदस्य सादृश्यरूपाऽमुख्याऽभेदार्थलाभ इति द्रष्टव्यम्। उक्त च भगवत्पादै **"अनुव्याख्याने"** जिज्ञासानये—

"स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।
सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टत ॥

तथा 'सुधायाम्"—व्यवहारास्तु टीकाकृतोक्ता द्रष्टव्या इति। विस्तृत च "परिमले —(१) वशीकृतग्राम पुरुषमुद्दिश्यायमेक एव पुरुष इति (२) पाण्डित्यादिविशिष्टविप्रमुद्दिश्यायमेक एव ब्राह्मण इति, (३) साय गोष्ठ गाव एकीभूता इति, (४) पूर्वविवादग्रस्ता विप्रा अधुना एकी भूता इति (५) अतितेजस्विमाणवकमुद्दिश्याग्निर्माणवक इत्यादिव्यवहारा प्राचीनटीकाकारै पद्मनाभतीर्थैरुपपादिता द्रष्टव्या ।

तत्वात् कथमेतच्छङ्कावकाश इति इति चेत्, सत्यम्; यानात् सूतेरिति[1] वासुदेवशब्दस्य योगमुक्त्वा योगमात्रस्यातिप्रसङ्गपरिहारार्थं रूढिविशेषज्ञानार्थं योगश्चाङ्गीकार्य इत्याशयेनास्य प्रमाणस्याचार्यैस्तत्रोदाहृतत्वेन तावन्मात्रस्य प्रकृतोपयोगात् तद्वाक्यं तत्र तथा व्याख्यातम्। वस्तुतस्तु योगरूढेर्मुख्यवृत्त्यन्तरत्वेऽपि रूढियोगग्रहणेनैव गृहीतत्वात् रूढियोगौ विना समुचितमुख्यवृत्तिं विना गौण्याद्यमुख्यवृत्त्या केवलयोगेन केवलरूढ्या वा कश्चिदर्थो वेदगो नैव भवेदित्यर्थस्य प्रतिभासनात् वेदे मुख्यवृत्तिरेव नास्तीति शङ्कोत्थानमिति भावः। **केवलवृत्त्यन्तरस्य निषिद्धत्वादिति।** "नैवार्थो वेदग" इति निषेधस्य सामान्यरूपत्वेन रूढियोगौ विना योगस्य रूढिसाहित्यं रूढेर्योगसाहित्यं विना केवलयोगेन केवलरूढ्या वा कश्चिदर्थो वेदगो न भवेदिति रूढियोगयोः परस्परसाहित्यनिषेधस्येव[2] रूढियोगौ विना मुख्यवृत्तिसाहित्यं विना केवलया गौण्याद्यमुख्यवृत्त्या कश्चिदर्थो वेदगो न भवेदित्यमुख्यवृत्तेः मुख्यवृत्तिसाहित्यनिषेधोऽपि[3] एतद्वाक्यार्थ इति भाव। **सा च परकीयन्यायेनैवेति।** सा गौणीवृत्तिश्च परकीयन्यायेन तत्त्वमसीति पदविभागमभ्युपेत्येत्यर्थः। अत्राद्ये—स्वपक्षसाधकोक्तिः। द्वितीये—अद्वैतश्रुत्यप्रामाण्यपरिहाराय तासां गतिनयनमिति सूत्रक्रमः॥ १४॥

॥ इति पृथगधिकरणम्॥ १४॥

---

## (१५) ॥ याचदधिकरणम्॥

## सू०॥ ओं॥ यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्॥ ओं॥ ३०॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृतो जीव इति।** पूर्वाधिकरणे "उपदेशादि"ति सूत्रोपात्तबन्धन्मोक्षं तत एवाभिवाञ्छेदिति श्रुत्युक्तब्रह्मा-

---

१. इतीति। Text amended.

२. परस्परेति। परस्परसाहित्याभावे, अथवा परस्परसाहित्ये वेदार्थाभाव.।

३. मुख्येति। एवमेव मुख्याऽमुख्यवृत्तिसाहित्याभावे, अथवा परस्परसाहित्ये वेदार्थाभाव इति द्रष्टव्यम्।

धीनबन्धमोक्षवत्त्वेन प्रकृते इत्यर्थः । तथा च जीवस्यानित्यत्वान्न प्रागुक्तमोक्षो युज्यत इत्याक्षेपादनन्तरसङ्गतिरिति भावः । **नित्य इति** । अत्र जीवः किं नित्य उतानित्य इति चिन्ता । तदर्थं जीवनित्यत्वश्रुतिरुत्पत्तिमत्त्वरूपयुक्त्यनुगृहीतयाऽनित्यत्वश्रुत्या बाधितोत नेति । तदर्थं श्रुत्युक्तोत्पत्तिविनाशौ किं जीवस्वरूपस्योत तदुपाधेरेवेति । तदर्थं तदुपाधेरेवोत्पत्तिनाशावित्यङ्गीकारेऽपि जीवस्याप्यनित्यत्वादिकं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं जीवस्येश्वरप्रतिबिम्बत्वघटकोपाधि. किं बाह्यदेहादिरेवोत जीवस्वरूपमेवेति । तदर्थमुपाधिद्वैविध्यादौ प्रमाणं नास्त्युतास्तीति । **सफलमिति** । "न दोष" इति सूत्रांशनिरसनीयतया अनादिकर्मसम्बन्ध आनन्त्यावाप्तिश्च न युज्यत इति भाष्ये उक्तत्वादिति भावः । **सयुक्तिकत्वेनेति** । उत्पत्तिमत्त्वात् विनाशित्वं जीवस्येति **न्यायविवरणोक्तयुक्तिसहितत्वेनेत्यर्थः** । जीवस्यापि उत्पत्तिरुक्तेति भाष्यानुसारेण पक्षधर्मतामाह—**उक्ता खल्विति** । सूत्रे "नित्यत्वाच्च न दोष" इत्येव कृते उपाधिनाशप्रयुक्तनाशाभावलाभेऽपि बिम्बोपाधिसन्निधिनाशप्रयुक्तप्रतिबिम्बनाशाभावस्यालाभात् त्रितयनाशप्रयुक्तनाशाभावप्रतिपादनार्थं यावदात्मभावित्वादित्युक्तमित्यभिप्रेत्य प्रवृत्तयावत्परमात्मा तिष्ठत्यनाद्यनन्तत्वेनैवं जीवोऽपीति भाष्यस्याभिप्रायमाह—**प्रतिबिम्बस्येत्यादिना** । सौत्रात्मशब्दाभिप्रायमाह—**सर्वगतेति** । **नानादिकर्मसम्बन्धाद्यनुपपत्त्येति** । "न दोष" इति सूत्रांशव्याख्यानपरेणानेन नित्यत्वे तदभीष्टमोक्षाद्यसिद्धेरिति **न्यायविवरणम**प्युक्ततात्पर्यकम् । **अपि तु धात्वादीति** । अनेन हि पराधीनविशेषवत्त्वमात्रेण विनाशित्वमिति **न्यायविवरणम**प्युक्ततात्पर्यकं भवति । तद्गतमात्रपदाभिप्रायस्तु **न हि येनेत्यनेनोक्त** इति ज्ञातव्यम् । "नित्य पर" इति श्रुतेरित्यनेन तादृशानामेव नित्यत्वश्रुतेरिति **न्यायविवरणम**प्युक्तार्थम् । आत्मा नित्य. जीवोऽनित्य इति पदद्वयस्य भिन्नस्थानगतत्वान्न पुनरुक्तिरिति भावेनाह—**स्मृतिवचनद्वयाच्चेति**

---

१ **प्रकृत इति** । पूर्वाधिकरणे परमेश्वरसकाशादत्यन्तभिन्नत्वेन प्रकृत इत्यपि द्रष्टव्यम् ।

२ **यावदिति** । यावत्परमात्मा तिष्ठति तावज्जीवोऽपीति बिम्बप्रतिबिम्बभावोऽप्येवमिति भाव ।

अनेन सूत्रे "तद्दर्शनाच्चे"ति सम्बन्धे स्मृतिसमुच्चायक"श्च"शब्द इत्युक्तं भवति। भाष्योदाहृतश्रुतिस्मृतिभ्यां जीवस्वरूपस्य नित्यत्वं बाह्यदेहस्यानित्यत्वमित्येवोच्यते ; न तु स्वरूपस्यैव। प्रतिबिम्बत्वघटकत्वम्, न बाह्योपाधेरित्येतदुक्तम्। तथा च कथं ताभ्यामुक्ताखिलार्थप्रतिपत्तिरित्यतः स्वयमुक्ताशेषार्थप्रतिपादकं प्रमाणान्तरमाह—**उक्तं चैतदिति** ॥ १५ ॥

**॥ इति यावदधिकरणम् ॥ १५ ॥**

---

## (१६) ॥ पुंस्त्वाधिकरणम् ॥

## सू०॥ ओं ॥ पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ओं ॥ ३१ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृत इति**। "तद्गुणसारत्वादि"त्यत्र ज्ञानानन्दादिस्वरूपत्वेन[1] प्रकृत इत्यर्थ.। तथा च पूर्वत्र पृथगधिकरणीयाद्यसूत्रोक्तो बन्धान्मोक्षं तत एवाभिवाञ्छेदित्युपदेश उपपादितः। इह तु तदीयद्वितीयसूत्रोक्तं तद्गुणसारत्वमुपपाद्यते। तत्सूत्रोक्ततद्गुणसारत्वस्यात्रास्येति परामर्शादिति सङ्गतिरिति भावः। **ज्ञानादिरूप इति**। अत्र जीवः किं ज्ञानानन्दादिस्वरूपो न भवत्युत भवतीति चिन्ता। तदर्थं विज्ञानात्मेत्यादिरूपत्वश्रुति. दु.खाद्विमुक्त आनन्दी भवतीति श्रुत्या बाध्यत उत न बाध्यत इति चिन्ता। तदर्थं तच्छ्रुत्युपोद्वलिका स्वगुणाननुभूतिरूपा युक्तिः किं निरवकाशोत ज्ञानानन्दादीनामावृतत्वेनान्यथासिद्धेति। तदर्थं सतोऽप्यानन्दादेरावृतत्वं किं न सम्भवत्युत सम्भवतीति। तदर्थं तदावरकत्वं किं ज्ञानाभावस्यैवोत तन्निमित्तभावरूपाज्ञानस्य। तदर्थमज्ञानरूपावरणानङ्गीकारे देवादीनां सर्वदा स्वस्वरूपानुभवो न प्रसज्यत उत प्रसज्यत इति। तदर्थमानन्दादीनां मुक्तियोग्यादिस्वरूपत्वे प्रमाणं नास्त्युतास्तीति। भाष्ये नानन्दादिरूपत्वमिति

---

१. रूपत्वेनेति। जीवस्वरूपमद्द। तथा च स्वरूपानन्दाविर्भाव एव मोक्ष इति द्रष्टव्यम्।

आनन्दादिविरुद्धदुःखादिरूपत्वं प्रतीयते । तच्च दुःखाद्विमुक्त इत्यनेन विरुद्धमित्यतो व्याचष्टे—**आनन्दादिरूपत्वाभाव इति** । आनन्दी ज्ञानी बलीति तद्वत्त्वोक्त्या तत्स्वरूपत्वाभावस्यैव उक्तेरिति भावः । भाष्योदाहृतायां विज्ञानात्मेति षट्प्रश्नोपनिषदि आनन्द इति श्रुत्यन्तरे च जीवलिङ्गाभावात् पूर्वपक्षानुदय इति न शङ्क्यम् । आद्यश्रुतौ "प्राणा भूतानि[1] संप्रतिष्ठन्ति यत्रे"ति वाक्यशेषे द्वितीयश्रुतौ च "स परेणामुं लोकं नीयते स विमुच्यत" इति वाक्यशेषे परमात्माश्रितत्वादिजीवलिङ्गश्रवणादित्याह—**प्राणा भूतानीत्यादिना** । स्वगुणाननुभूतीति **न्यायविवरणां**शाभिप्रायमाह—**न ह्यानन्दादिरूपत्वमिति** । अनेन स्वत्वेन स्वरूपत्वेन गुणानामानन्दादीनामननुभूतिरिति व्याख्यातं भवति ॥ P. 120

ननु स्वरूपभूतानामप्यावृतत्वेनाननुभूत्युपपत्तेः कथमनुव्याख्याने "स्वगुणाननुभूतिः" इत्यननुभवमात्रं तत्साधकत्वेनोक्तमित्यतो न्यायविवरणे स्वगुणाननुभूत्यनुपपत्तेरित्युक्तमित्याशयेन तदभिप्रायमाह—**जीवस्याहमिति** । अनेन स्वरूपतभूतानां गुणानामनुभूतेरभावो येन प्रतिबन्धेन तत्स्वरूपगुणाननुभूतिः तस्यानुपपत्तेरिति **न्यायविवरणांशो** व्याख्यातो भवति । पूर्वं सामस्त्येनाभाव इति **न्यायविवरण**गतपूर्वपदसूचितयुक्तिमाह—**आनन्दादिरूपत्वे चेति** । प्रयत्नस्याभिव्यक्त्यर्थत्वमाशंक्य परिहरति—**अत्रावरणेति** । अनेन पूर्वं संसारदशायां सामस्त्येनाभिव्यक्तत्वेन स्वरूपेण चाभाव इति **न्यायविवरणा**भिप्राय उक्तो भवति । **तस्यैवानुपपत्तेरिति** । जीवस्याहमित्यनेन व्यवधानानुपपत्त्या ज्ञानाभावरूपाज्ञानस्यैवानुपपत्तेरुक्तत्वादित्यर्थः । **वैपरीत्यादिति** । शरीरस्यानन्दाद्यनुभवरूपभोगायतनत्वेन भोगप्रतिबन्धकत्वानुपपत्तेरिति भावः । **तद्गुणसारत्वमिति** । स्वरूपभूतज्ञानादिगुणसमुदाय इत्यर्थः । अत एव भाष्ये सतामेवानन्दादीनामिति गुणप्राधान्योक्तिर्बहुवचनं च । व्याख्यातं च सतो ज्ञानानन्दादेरिति । सूत्रे "आदि"पदप्रयोगात् बालस्येति भाष्यमुपलक्षणपरमित्य-

---

१. **भूतानीति** । Text amended.

२. **स्वरूपेति** । सदेव स्वरूपज्ञानादिकं समुचितसमये, अथवा परिपाककालेऽभिव्यज्यत इति भावः ।

भिप्रेत्य व्याचष्टे—**पुरुषयोषिदादीनामिति** । दार्ष्टान्तिके तदुक्तिरिति भाष्यानुरोधादाह—**नायं पूर्वमिति**। सौत्र"स्तु"शब्दो सतामेवेति भाष्येऽव धारणार्थो व्याख्यात । तस्य तात्पर्यं **मुक्तेः पूर्वमपि सत** इति। मुक्तौ आनन्दादीनमभिव्यक्त्यपेक्षया[1] मोक्षे विशेषेणाभिव्यक्तिरित्यर्थकश्च सौत्र"स्तु"-शब्द इत्यभिप्रेत्य **न्यायविवरणे** सुव्यक्तिन इत्युक्तमित्यभिप्रेत्याह—**ईश्वर-प्रसादेनेति** । अभिव्यक्तानन्दी भवतीति, श्रौतव्यपदेशस्य योगादुपपत्तेरिति सौत्राशस्यार्थमभिप्रेत्य प्रवृत्तमभिव्यक्त्यपेक्षया तदुक्तिरिति भाष्यं व्याचष्टे—**अभिव्यक्तिनिमित्तेनेति** । अनेन पूर्वमव्यक्ताना पश्चात् सुव्यक्त्युपपत्तेरिति **न्यायविवरणमपि**[2] सुव्यक्तानन्दी भवतीति व्यपदेशस्योपपत्तेरिति व्याख्यात भवति । पूर्वमव्यक्तानामिति **न्यायविवरणांशा**भिप्रायमाह—**प्रागनभि-व्यक्तत्वेनेति** । पश्चात् सुव्यक्त्युपपत्तेरिति **न्यायविवरणांशं** प्रकारान्तरेण व्याचष्टे—**तदभिव्यक्त्यर्थमिति** । अनेन सुयक्त्यै प्रयत्नस्योपपत्तेरिति व्याख्यान भवति । सूत्रे पूर्वसूत्रादस्येत्यनुवृत्ति । वाशब्दो व्यवस्थितविकल्पे । तथा चान्यथा अभिव्यक्त्यनङ्गीकारे[3] मध्यमजीवानामस्य ज्ञानानन्दादेर्नित्यो-पलब्ध्यनुपलब्धिप्रसङ्ग , अन्यतरनियम । मुक्तियोग्यानामानन्दादेरुपलब्धि-नियम । तमोयोग्यानामानन्दादेरनुपलब्धिनियम इति योजना । उक्तिलाघवाय मध्यमजीवाना प्रथममापादनमित्यभिप्रेत्य नित्यानन्दज्ञानबला इत्यादिप्रमाणानु सारेण सौत्रक्रममुल्लङ्घ्य प्रवृत्त व्यक्त्यनङ्गीकारे देवानामित्यादिभाष्यं व्याचष्टे—**यदि जीवस्वरूपस्येत्यादिना** । व्यक्त्यभावस्य नित्योपलब्ध्यापादनापादक-त्वादाह—**व्यक्तिरावरणनिवृत्तिरिति** । आवरणनिवृत्त्यभावस्यापि नित्योप-लब्ध्यापादनापादकत्वात्तत्र हेतुभूतावरणाभाव एवापादक इत्यभिप्रेत्योक्तम् । भाष्येऽ-सुराणामावरणाभावेनानन्दाद्युपलब्ध्यापादनमयुक्तम् , स्वरूपभूतानन्दादेरभावा-देवानुपलब्ध्युपपत्तेरनावरणस्याविद्यमानानुपलब्धि प्रत्यप्रयोजकत्वाच्चेत्यतो नेदमा

---

१ **अपेक्षयेति** । मुक्तौ ईषदभिव्यक्त्यभ्युपगमादिति "कण्टकोद्धारे" विज्ञ यीन्द्रगुरुपादा । मोक्षावस्थाभिव्यक्तिस्तु बहुविशेषविशिष्टेति ज्ञातव्यम् ।

२ **सुव्यक्तिरिति** । Text amended.

३. **अभीति** । "व्यक्त्यनङ्गीकार" इति पाठान्तरम् ।

वरणाभावस्य साक्षादापाद्यप्रदर्शनपरम् ; किं त्वावरणाभावेन सर्वदा दुःखो-पलब्धिरेवापाद्यते । तथा च नेयमानन्दाद्यनुपलब्धिरापाद्यत इत्यभिप्रेत्याह—**दुःखाद्यनुभव एव स्यादिति** । भाष्ये मध्यममनुष्याणामानन्दोपलब्धितद-भावापादिती । तत्र उपलब्ध्यभावापादनमयुक्तम् । आवरणाभावस्योपलब्धि प्रत्येव प्रयोजकत्वादित्याशङ्क्य न सुखानुपलब्धेरित्यनेन सुखोपलब्धेरेवाभाव आपाद्यते । किं तु केवलाया दुःखाद्यनुपलब्धिविशिष्टाया. सुखोपलब्धेर भावः । ततश्च सुखाद्यनुपलब्ध्यापादनेन दु.खाद्युपलब्धिरेवापादिता भवति । अतो न दोष इत्याह—**केवलतदुपलब्ध्यभाव इत्यादिना** । **समैवेति** । मध्यममनुष्याणां निश्चयरूपत्वात् सुखस्य दु स्वस्य चोपलब्धिः समैव स्यादित्यर्थ. । **अविद्यावरणमिति** । स्वप्रकाशजीवस्वरूपभूतस्याप्यानन्दादेरविद्यया आवरणं विक्षेपबलाद्युच्यत इति भाव । नित्यानन्द इति स्मृत्यनुसारेण श्रुत्यभिप्रायमाह—**एवमिति** । अन्यथोक्ततयावदर्थाप्रतिपादकत्वेन प्रकृतासङ्गतेरिति भाव । संसारदशायां तन्मात्रोपलब्ध्यभावादाह—**तद्योग्या इति** । अत्राद्ये—जीव-स्यानन्दादिरूपत्वे बाधकत्वेनोक्तश्रुतियुक्त्यो सदृष्टान्तं गत्युक्त्या तद्रूप-त्वसमर्थनम् । द्वितीये— प्रथमसूत्रोक्ताभिव्यक्त्यनङ्गीकारे बाधकोक्तिरिति सूत्रक्रम. ॥ १६ ॥

॥ इति पुरुत्वाधिकरणम् ॥ १६ ॥

---

## (१७) ॥ कर्तृत्वाधिकरणम् ॥

### सू०॥ ओं ॥ कर्ता शास्त्रार्थवत्त्वात् ॥ ओं ॥ ३३ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्रकृत इति** । अभिव्यक्तज्ञानान-न्दबलकर्तृत्वादिगुणस्वरूपत्वेन प्रकृत इत्यर्थ । तथा नास्त्वानन्दादीना सता-

---

१ स्यादिति । "भवेत्" इति "मध्वविलास"पुस्तकपाठ ।

२. तन्मात्रेति । Text amended.

मभिव्यक्ति, न तु कर्तृत्वस्य। तस्यै कदाप्यभावादिति पूर्वपक्षोत्थानात् सङ्गतिरिति भाव । **किमिति ।** अत्र जीव कर्ता न भवत्युत भवतीति चिन्ता । तदर्थं "यत् कर्म कुरुत" इत्यादिजीवकर्तृत्वश्रुति कल्पनालाघवयुक्त्युपोद्बलितया "नान्य कर्ते"ति श्रुत्या बाधिनोत नेति । तदर्थं जीवस्य कर्तृत्व किं काल्पनिकमुत स्वाभाविकमिति। तदर्थं नान्य कर्तेत्यादिश्रौतो निषेध किं नोपपद्यत उतोपपद्यत इति । तदर्थं सा श्रुतिर्जीवस्य कर्तृत्वमात्रनिषेधपरोत स्वतन्त्रकर्तृत्वनिषेधपरेति। तदर्थमीश्वराधीनशक्तित्वरूप पराधीनकर्तृत्व जीवस्य किं नोपपद्यत उतोपपद्यत इति । तदर्थं विधिप्रतिषेधशास्त्रस्य पराधीनकर्तृजीवविषयत्वेन वैयर्थ्यपरिहारो न सम्भवत्युत सम्भवतीति। तदर्थं जीवस्य पराधीनकर्तृत्वादौ प्रमाणं नास्त्युतास्तीति। भाष्योक्तपूर्वोक्तश्रुत्यो सन्देहबीजत्वप्रतीनावप्यस्मिन् पादे सर्वत्र श्रुतिविगानमेव सन्देहबीजमित्यभिप्रेत्योक्तम्—**श्रुतिविगान सूचयति ।** तदुपपादयति । **ईश्वरस्यैव कर्तृत्वमुक्तमित्यनेनेति ।** न्यायविवरणे इतरव्यपदेशादित्यत्रास्या (श्रुतेरुदाहृतत्वादित्यत्रास्या) श्रुतेरुदाहृतत्वादिति भाव । ईश्वरस्यैव कर्तृत्वमिति, भाष्योक्तयुक्तिमाह—**समर्थित हीति ।** अनेन हिताक्रियादिरूपा युक्तिरुक्ता भवति। ईश्वरस्यैव कर्तृत्वे कल्पनालाघवमिति **न्यायविवरणो**क्तयुक्तिमाह—**ईश्वरस्यैवेति ।** तर्हि लाघवाय जीवस्यैव कर्तृत्व भवत्वित्यत आह—**न खल्विति ।** जीवकर्तृत्वे हिताक्रियादिदोषप्रसक्तेर्बाधकस्योक्तत्वाच्चेत्यपि ग्राह्यम् । अत्र "शास्त्रार्थवत्त्वादि"ति हेतूक्त्या सूचित जीवस्य कर्तृत्वाभाव इति भाष्ये जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यादिति हेतूक्त्या सूचित (जीवस्य कर्तृत्वाभाव इति भाष्ये) जीवस्याकर्तृत्वे शास्त्रवैयर्थ्यादिति **न्यायविवरणे** चोक्त विपक्षबाधक-

121 तर्कमाह—**तदभाव इति ।** सौत्रप्रतिज्ञाव्याख्यानपरेण जीवोऽपि कर्तेति भाष्येण हेतुव्याख्यानपर तस्यापि कर्तृत्वे शास्त्रार्थसिद्धेश्चेति **न्यायविवरण** संयोजयति—**अतो जीवस्येति ।** **पारमार्थिकमेवेति ।** अनेन "कर्ते"ति पूर्वसूत्रादनुवृत्तस्य कर्तेत्र न स्वारोपितकर्तृत्ववानित्यर्थ इत्युक्त भवति। मोक्षेऽपी

१ तस्यैति। गत एवाभिव्यक्तिर्युज्यते । नाऽगत । जीवस्य कर्तृत्व नास्त्यगत इन। असत कर्तृत्वस्याभिव्यक्तिर्दरोगारिनति भाव ।

२ श्रुतीति। दर्शयति" इति "मध्यादर्श 'पुस्तकपाठ ।

त्वपिशब्दाभिप्रायमाह---विगलिताखिलकल्पनेऽपीति । भाष्ये साधनपद-प्रयोगानुरोधादाह---[1]संसारेऽपीति । उक्तरीत्या क्रमेण शङ्काद्वयनिवर्तकत्वात् सूत्रे "च"शब्दाभावः । भाष्ये तु "विहारोपदेशादित्य"नेन युक्त्या साधितमेव कर्तृत्वस्य पारमार्थिकत्वोपपादनादित्यनेनापि प्रत्यक्षेण साध्यत इति भावेन प्रतीतेश्चेति "च"शब्द इति ज्ञातव्यम् । यद्वा, "च"शब्दोऽप्यर्थको भिन्नक्रम इत्यभिप्रेत्योक्तम्---संसारेऽपीति । कारयितृनियतत्वं कर्तृत्वं चेति भाष्येण सूत्रे "उभयथा चे"ति "च"शब्दसम्बन्ध उक्तो भवति । परमात्माधीनमेवेति ॥ P 122
अनेन परा देवेति भाष्येण सौत्र"स्तु"शब्दोऽवधारणार्थो व्याख्यात इत्युक्तं भवति । सूत्रे पूर्वसूत्रात् विभक्तिविपरिणामेन पर इत्यनुवर्तते ।

"पूर्वकर्मप्रयत्नं च संस्कारं चाप्यपेक्ष्य तु"

इति स्मृत्यनुसारेण कृतशब्दः कर्मपर । योग्यतापि ग्राह्या । "तु"शब्द एवार्थः । तस्यावैषम्यादिभ्य एवेत्यपिसम्बन्ध इत्यभिप्रेत्य सूत्रे योजयति---अयं पर इत्यदिना । "वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इत्यनेन गतार्थतामस्य सूत्रस्याशङ्क्य परिहरति---उक्तोऽपीति । इत्युच्यत इति । तेन न व्याहतिरिति भाव । अत्र सूत्रक्रमस्त्ववतारक्रमेण टीकायामेव स्पष्ट ॥ १७ ॥

॥ इति कर्तृत्वाधिकरणम् ॥ १७ ॥

---

## (१८) ॥ अंशाधिकरणम् ॥

### सू० ॥ ओं ॥ अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ओं ॥ ४३ ॥

अनन्तरसङ्गतिं [2]सूचयति--- विषयमिति । प्रकृतो जीव इति । ईश्वराधीनकर्तृत्ववत्त्वेन पूर्वाधिकरणे प्रकृत इत्यर्थः । तथा च "तद्गुणसारत्वादि"त्यत्र

---

१ संसार इति । संसारदशायामपि जीवस्य कर्तृत्वं पारमार्थिकमेवेति तात्पर्यम् । अन्यथा साधनानुष्ठानानुपपत्ते ।

२. सूचयतीति । Text amended.

यदीश्वरसादृश्यमुक्तं जीवस्य यच्च " परात्तु तच्छ्रुतेः" इति परमात्माधीनत्वमुक्तं तदुभयरूपस्यांशत्वस्यात्र समर्थनादनन्तरसङ्गतिरिति भावः। यथोक्तमनुव्याख्याने " सादृश्यं चांशतास्य तु " इति। व्याख्यातं च **सुधायामस्य** जीवस्यपरमेश्वरांशता तु तत्सादृश्यम्, "च"शब्दात्तदधीनसत्तादित्वं चेत्यर्थ इति। **किमिति**। अत्र **नवेत्यनन्तरमित्यनिर्णय** उत ईश्वरांश एवेति शेषपूरणेन व्याख्येयम्। अत्र जीवः [१]किमीश्वरांश उत नेति चिन्त। तदर्थं श्रुत्योः सावधारणतया निरवकाशत्वेन परस्परविरोधेनाप्रामाण्यमेवोत भिन्नांशत्वस्वरूपांशत्वाभावविषयत्वेनाविरोधात् प्रामाण्यमिति। तदर्थं परमात्मांशत्वे जीवानां मत्स्यादिसाम्यं प्राप्नोत्युत नेति। तदर्थं मत्स्यादिभ्यो जीवानां प्रवृत्त्यादौ भगवदधीनत्वादिरूपवैलक्षण्यं नास्त्युतास्तीति। तदर्थं तत्र प्रमाणं नास्त्युतास्तीति। भाष्ये विशिष्य पूर्वपक्षानुक्तेः **न्यायविवरणे** च नानाश्रुतेरप्रामाण्यमिति अंशत्वानंशत्वश्रुत्योः परस्परविरोधेनाप्रामाण्यमित्यनिर्णयेनैव पूर्वपक्षोक्तेस्तदनुसारेण पूर्वपक्षमाह— **तत्र न जीव** इति। **वाक्यशेषविरोधादि**ति। तथा च युक्तेरप्रयोजकत्वेन तदुपोद्बलितश्रुतेः प्राबल्यमिति भावः। **वक्ष्याम** इति। "अंशो ह्येष" इति "पुत्रभ्रात्रि"त्यादि श्रुतिस्मृत्युदाहरणेनेत्यर्थः। परेणेति तृतीया पञ्चम्यर्थे इत्याह—**परादिति। जात इति व्यपदिश्यत** इति शेषोक्तिः। **कुत** इत्यस्य तात्पर्यं कस्य चेति। अधीत्यस्याधिकत्वेनेत्यर्थः। स्त्रियः सतीरिति ऋचमादितो व्याचष्टे—**या** इति। मे इति षष्ठ्यर्थः। **मदुपास्या** इति। को वक्तीत्यत आह—**एतद्दीर्घतमो वाक्यमिति। उक्तं चेति। अनुव्याख्यान** इति शेषः। जीवानामंशत्वं सूत्रत्रयेणोक्त्वा अनंशत्वश्रुतेर्गतिं चाह। मत्स्यादिसाम्यप्रतीतिनिरासायाह—
P 123 **मत्स्यादि असाम्यं चार्थ इति**। अन्यथोत्तरसूत्रपञ्चके मुखतो मत्स्याद्यसाम्यस्यार्थत अनंशत्वश्रुतिगतेश्च प्रतीतेरवतारभाष्यस्य न्यूनत्वप्रसङ्गादिति भावः। **भेदाभेदेति**। जीवादीनां भेदो मत्स्यादीनामभेद इत्यर्थः॥

" सूर्यमण्डलमान्येकस्तत्प्रकाशाभिमानवान्।
सूर्योऽथ सप्तमाब्धेश्च बाह्योदस्य च वारिपः॥

---

१. किमिति। Text reconstructed.

२. श्रुतेरिति। Text reconstructed.

कठिनत्वेन मेर्वादिपृथिव्या अपि देवता ।
धरादेव्येवमेवैको भगवान् विष्णुरव्ययः ॥

नानावताररूपेण स्थितः पूर्णगुणः सदा ।
विण्मूत्राद्यभिमानिन्यो यथापत्रष्टदेवताः ॥
सूर्यादिभ्यस्तथैवायं संसारी परमात् पृथक् ॥"

इति भाष्यविवरणपरानुव्याख्यानं मनसि निधाय भाष्यं व्याचष्टे—**तेजो जलेति । सर्वमवतिष्ठत इत्युक्त इति ॥**

"भावयत्येष सत्त्वेन लोकान् वै लोकभावनः ।
लीलावतारानुगतस्तिर्यङ्नरसुरादिषु ॥"

इत्यनेनेत्यर्थः । एते वराहाद्याः[1] स्वांशरूपाः कलाः । कृष्णस्तु वसुदेवपुत्रः, न स्वयं भगवानित्यन्यथाप्रतीतिनिरासाय स्वांशकला इत्यस्य फलितप्रदर्शनपरतया कृष्णस्त्विति पदम् एतेप्रोक्ता अवतारा मूलरूपो हरिः स्वयमेवेति—भागवततात्पर्यानुसारेण व्याचष्टे—**स्वयं भगवानिति ।** अनेन "तु"शब्द एवार्थ इत्युक्तं भवति । **वराहादयो लोकं मृण्डयन्तीति** । अनेनैत इत्यनूद्य भगवान् स्वयमित्यन्तेन मूलरूपाभेदः,

"इन्द्रादिव्याकुलं लोकं मृडयन्ति युगे युगे" ॥

इत्यनेन लोकसुखदत्वं चोच्यत इत्युक्तं भवति । "अतः" जडेश्वररूपयोः "परम्" अन्यूढगुणबृंहितम् । अनादिकाले कदाचिदप्यनपगतसत्त्वादिरूपम् । "अदृष्टाश्रुतवस्तुत्वात् पुनर्भव" इति भागवततात्पर्यानुसारेणा"तः परमि"त्यादि व्याचष्टे—**यदत इति ।** परमित्यस्यार्थो भिन्नमिति । अव्यक्तमित्यस्याकार्यमिति । व्यूढगुणेत्यस्यानाद्यनपगतेति । वस्तुशब्दार्थो भगवत्स्वरूपेति । पुनर्भव इत्यस्य संसरतीति । तदेव स्वरूपांशस्य भवतीति शेषोक्तिः । अत्र "अपि स्मर्यते"

---

१. **वराहाद्या इति ।** एते स्वांशकलाः । कृष्णस्तु भगवान् स्वयमिति भावः ।

इत्यनेन जीवस्येश्वरांशत्वे स्मृतिरुक्ता । "स्मरन्ति च" इत्यनेन त्वंशत्वेऽपि मत्स्याद्यवताराणां स्वरूपांशत्वं जीवानां भिन्नांशत्वमित्यत्र स्मृतिरुक्तेति भेदः ॥

"स एव दशधा प्रोक्तो विष्णुर्मत्स्यादिरूपकः ।
शतं नारायणाद्यात्मा विश्वाद्यात्मसहस्रकः ॥
परादिरूपो बहुधा सोऽनन्तात्माऽजितादिकः ॥"

इति बृहदारण्यकभाष्योदाहृतप्रमाणानुसारेणाऽऽह—शतधा नारायणादि- रित्यादिना ॥

"देहदोषैश्च दुष्टत्वादपभ्रष्टाख्यदेवताः ।
अन्याः सूर्यादिदेवेभ्यो ह्यनुग्राह्याश्च तैः सदा ॥"

इत्यनुव्याख्यानं मनसि निधाय भाष्यं व्याचष्टे—**तस्य चापभ्रष्टस्येति** । P 124 शरीरसम्बन्धित्वस्याभिन्नांशेऽपि सत्त्वाद्व्यभिचारस्ततो **स्वांशिकर्माऽनिर्मितेत्युक्तम्** । शरीरसम्बन्धित्वं तद्योग्यत्वम् । तेन न मुक्तेषु भागासिद्धिः । इत्यत **आहेति** । तथा च स्वांशिकर्माऽनिर्मितभौतिकशरीरसम्बन्धित्वस्य विवक्षितत्वान्न व्यभिचार इति भाव. । **शुश्रूषुस्तस्येति शेष** इति । समस्तश्लोकव्याख्यानं तु—शरीराणि हि भौतिकानि भवन्ति, भूतानि चेश्वरबुद्धिजानि, तत्कथं तानि बध्नी- युरित्यर्थः । अत्रेश्वरो हीत्यादिनाऽन्ये हेतवोऽभिधीयन्ते—विराट्, नित्याभिव्यक्त- रूप । वरदो मोक्षद. । सगुणः स्वातन्त्र्यादिगुणवान् । भूतानि प्रलीयन्ते यस्मिन् तत् अव्यक्तं तदभिमानिदेवता तस्य शुश्रूषुर्लिङ्गव्यत्ययश्छान्दस इति गीताभाष्यटीकयाऽवगन्तव्यम् । अस्त्वेतन्मूलरूपविषयमवताराणां तु देह- सम्बन्धित्वं तु स्यादेवेत्यत अवतारप्रसङ्गे चैतदुक्तमतोऽनवताराश्च पृथक् शङ्क्या इति गीताभाष्यं मनसि निधायाऽऽह—**अवतारप्रसङ्ग** इति । "यत्तदर्शिवान् ब्रह्मरूपं हयशिरोधरमि"ति हयग्रीवावतारप्रसङ्ग एतस्योक्तत्वात् । युक्तिसाम्यात् सर्वावतारेष्वपि देहसम्बन्धशङ्का न कार्येति भाव. । स्वरूपासिद्धिदृष्टान्तसाधन- वैकल्यं च परिहर्तुं **स्वांशिकर्माऽनिर्मितेत्युक्तम्** । स्वांशिकर्मनिर्मितदेह-

---

१. **मत्स्येति** । अवताराणा जीवाना चाशत्वेऽप्यवताराणां स्वरूपांशत्वं जीवानां स्वरूपभिन्नांशत्वमिति पारमार्थिकभेदसद्भावेन नांशत्वमभेदसाधकमिति द्रष्टव्यम् ।

सम्बन्धित्वस्य दृष्टान्ते सत्त्वेऽपि पक्षे तदभावान्नसूक्ष्मगर्भत्वम्। तथा च पक्षे विशेष्याभावेन दृष्टान्ते विशेषणाभावेण विशिष्टाभावोऽनुगत[1] इति भावः। "प्रकाशादिवदि"त्यनेनासदादीनां जीवानां च स्वरूपांशत्वभिन्नांशत्वात्मके उक्त-वैषम्ये तेजआद्यभिमानिवह्न्यादिदेवतांशयोः कालाग्न्याद्यभिमानिखद्योताद्यभिमानिनोः स्वरूपांशत्वभिन्नांशत्वरूपं वैषम्यं दृष्टान्तितम्। "ज्योतिरादिवदि"त्यनेन त्वंशत्वेऽप्यवताराणां जीवानां च असाम्ये हेत्वन्तरत्वेनोक्तदेहासम्बन्धसम्बन्ध-प्रयुक्ते अंश्यननुग्राह्यत्वानुग्राह्यत्वयो रूपवैषम्ये सूर्यमण्डलाद्यभिमानिन्यादिर्यां-शयोर्वियद्गतप्रकाशाद्यभिमानि अक्षिगोलकाद्यभिमानिनो परदेहसम्बन्धासम्बन्ध-प्रयुक्तमंश्यननुग्राह्यत्वानुग्राह्यत्वरूपं वैषम्यं दृष्टान्तितमिति भेदः टीकायामेव स्पष्टः॥

"रूपं रूपं प्रतिरूपो बभूव। तदस्य रूपं प्रतिचक्षणाय।
इन्द्रो मायाभिः पुरुरूप ईयते। युक्ता ह्यस्य हरय शता दश"॥

इति ऋचं व्याचष्टे—**जीवसमुदाय** इति। "शृण्वे वीर उग्रमुग्रमि"ति त्रिविधजीवसङ्घस्य प्रस्तुतत्वादेवमुक्तम्। मायाभिरित्यस्यार्थं **सामर्थ्येनेति**। पुरुरूप इत्यस्यार्थो अनन्तजीवबिम्बरूप[2] इति। **अत एवानंशत्वश्रुतिरिति**। अनेन दृष्टभेदानुसारेण तासां सामर्थ्योपपत्तेरिति **न्यायविवरणमपि** व्याख्यातं भवति। "प्रकाशवत्[3]" इत्यादीनाम् "आभास." एवेत्यन्तानां सर्वेषामपि सूत्राणामर्थतोऽनंशत्वश्रुतिगतिप्रदर्शकत्वात् तदवसाने तत्परन्**यायविवरण**-तात्पर्यमुक्तं भवति। अप्रामाण्यकल्पनस्य विपरीतज्ञानमूलत्वादिति **न्याय-विवरणं** तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**न चेत्यादिना**॥

अत्राद्ये—जीवानामीश्वरांशत्वं प्रतिज्ञाय "नानाव्यपदेशादि"त्यनेनानेक-विधभगवत्सम्बन्धित्वरूपांशत्वव्यपदेशरूपप्रमाणोक्तिः। "अन्यथा चापि दाशकि-

---

१. **अनुगत इति**। पक्षे दृष्टान्ते च विशिष्टाभावोऽस्तीति ज्ञातव्यम्।

२. **अनन्तेति**। अनन्ता वै जीवा परमात्मा एक एव स एव बिम्बरूप इति भाव.। अनन्ता. प्रतिबिम्बरूपा.।

३. **प्रकाशेति**। Text restored.

तवादित्वमधीयत एक" इत्यशेन श्रुत्युपोद्बलकभेदाभेदव्यपदेशान्यथानुपपत्ति रूपप्रमाणोक्ति । द्वितीये—तद्युक्त्युपोद्बलिकाया सामान्येनाशत्वप्रतिपादिकाया श्रुतेरुक्ति । तृतीये—श्रुतिमूलस्मृत्युक्ति । चतुर्थे—अशत्वेऽपि सदृष्टान्त जीवाना मत्स्याद्यसाम्यप्रतिज्ञा । पञ्चमे—दृष्टान्तमात्रस्यासाधकत्वात्तत्र स्मृतिरूपप्रमाणोक्ति । षष्ठे—सदृष्टान्त तदुपोद्बलकयुक्त्युक्ति । अपूर्णशक्तित्वस्य मत्स्याद्यसाम्यसाधकत्ववत् षष्ठोक्तदेहबद्धत्वस्यापदेहसम्बन्धसाधकत्वस्यापि सम्भवात्, सप्तमे—तदुक्ति । प्रतिबिम्बत्वस्य मत्स्याद्यसाम्य इव सप्तमोक्तापूर्णशक्तित्वेऽपि प्रयोजकसम्भवात् अष्टमे—तदुक्तिरिति सूत्रक्रम ॥ १८ ॥

॥ इत्यशाधिकरणम् ॥ १८ ॥

---

## (१९) ॥ अदृष्टाधिकरणम् ॥

## सू०॥ ओं ॥ अदृष्टानियमात् ॥ ओं ॥ ५१ ॥

अत्रानन्तरसङ्गति "आभास एव" इति पूर्वसूत्रोक्तप्रतिबिम्बभूतजीवानामित्यर्थकप्रतिबिम्बानामिति भाष्य एव स्पष्ट प्रतीयते । भगवदिति । अत्र जीव किं भगवत्प्रतिबिम्बो न भवत्युत भवतीति चिन्ता । तदर्थं रूपमिति श्रुतिर्वैचित्र्यरूपयुक्त्योपोद्बलितयानुमिताऽप्रतिबिम्बत्वश्रुत्या बाध्यत उत नेति । तदर्थं प्रतिबिम्बभूताना जीवाना वैचित्र्यरूपा युक्तिरेकभगवत्प्रतिबिम्बत्वे किं नोपपद्यत उतादृष्टादिवैचित्र्यरूपप्रकारान्तरेणोपपद्यत इति । प्रकरणवशादिति । श्रुतीना परस्परविरोधपरिहारात्मकपादरूपप्रकरणवशाच्छ्रुत्यन्तर प्रतिबिम्बत्वाभाव प्रतिपादकमनुमीयते इत्यर्थ । यद्यपि "नैवाशो न सम्बन्ध" इति प्रत्यक्ष श्रुतिरस्ति, तथापि प्रतिरूपपदोपेतत्वेन स्पष्ट प्रतिबिम्बत्वप्रतिपादक"रूप रूपम्" इति श्रुतिवत् स्पष्टप्रतिबिम्बत्वाभावप्रतिपादकप्रत्यक्षश्रुत्यभावाभिप्रायेणैव

---

१ अपूर्णेति । Omission supplied

२ अनुमीयत इति । स्पष्टश्रुत्यभावात् श्रुतिरनुमीयत इति भाव ।

मुक्तमिति ज्ञातव्यम् । वैचित्र्यमनाभासत्वकारणमिति न्यायविवरणोक्तयुक्तिं विवृणोति—अस्ति खल्विति । जीवानां सामान्यत आभासत्वेऽपीति न्यायविवरणाभिप्रायमाह—अशेषजीवानां भगवत्प्रतिबिम्बत्वेऽपीति । अदृष्टस्य विद्याकर्मादिरूपस्यानियमात् "वैचित्र्यादिति" सूत्रव्याख्यानपरमनादी-त्यादिभाष्यं व्याचष्टे—विद्यादृष्टवैचित्र्येणेति । अनेन विशेषादृष्टाद्वैचित्र्योप-पत्तेरिति न्यायविवरणमत्युक्ततात्पर्यकं भवति । युक्तेरविरुद्धत्वादिति । जीवानां P. 125
मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथासिद्धत्वादुपोद्बलकाभावेनान्या श्रुति-रनुमिता प्रतिबिम्बत्वश्रुतिर्जीवस्य निरुपाधिकप्रतिबिम्बत्वविषया सोपाधिकप्रति-बिम्बत्वाभावविषया ॥

"सोपाधिरनुपाधिश्च प्रतिबिम्बो [2]द्विधा मत "

"जीव ईशस्यानुपाधिरिन्द्रचापो यथा रवे."

इति श्रुतेर्जीवस्यानुपाधिकप्रतिबिम्बत्वादिति भाव ॥

अत्राद्ये—प्रतिबिम्बानां मिथो वैचित्र्यरूपयुक्तेरदृष्टवैचित्र्येणान्यथा-सिद्ध्युक्तिः । द्वितीये—अदृष्टवत् जीवगततयान्तरङ्गरागादिदोषवैचित्र्यस्य प्रतिबिम्बवैचित्र्यकारणत्वासम्भवोक्ति. । तृतीये—बहिरङ्ग[3]स्वर्गादिस्थानवैचित्र्यस्य कारणत्वाभावोक्तिरिति सूत्रक्रम ॥ १९ ॥

॥ इत्यदृष्टाधिकरणम् ॥ १९ ॥

---

अत्र पादे—आद्यमधिकरणत्रिकमुत्पत्त्यनुत्पत्तिश्रुत्योर्विरोधनिरासकत्वेनैका पेटिका । तत्राद्ये द्वितीये च—ब्रह्मेतरयोर्नभोनभस्वतोरुत्पत्त्या सिद्धान्त । तृतीये—ब्रह्मणोऽनुत्पत्त्या सिद्धान्त इति भेद । चतुर्थपञ्चमयोः उत्पत्तिमङ्गीकृत्य द्वार-

१. भगवदिति । एकभगवत्प्रतिबिम्बभूताऽशेषजीवोपलभ्यमानवैचित्र्यादिकमुप-पद्यत इति भाव. ।

२. द्विधेति । Text restored.

३. स्वर्गेति । Text amended.

कारणविषयश्रुतिविरोधपरिहारात्मकत्वेन तदधिकरणद्वयमेका पेटिका। षष्ठ—द्वारकारणत्वमङ्गीकृत्योत्पाद्यविशेषविषयश्रुतिविरोधपरिहारात्मकमेकमधिकरणमेका पेटिका। सप्ताष्टमनवमदशमानि—संहारविषयश्रुतिविरोधपरिहारात्मकत्वेनैका पेटिका। तत्राद्ये—संहर्तृविषयश्रुतिविरोधनिरासः। द्वितीयतृतीययोः—संहारक्रम-विषयश्रुतिविरोधपरिहार.। चतुर्थे—संहर्तुरपि संहारविषयश्रुतिविरोधपरिहारः। एकादशमारभ्यापादसमाप्तेर्नवाधिकरणानि जीवविषयश्रुतिविरोधनिरासकत्वेन एका पेटिका। तत्राधिकरणनवके यथाक्रमं जीवस्योत्पत्तिमत्त्व-अणुत्वे-अनेकदेहस्थितत्वे-श्वरभिन्नत्वानन्तत्त्वज्ञानानन्दादिरूपत्वपरतन्त्रकर्तृत्वेश्वरांशत्वतत्प्रतिबिम्बत्वरूपप्रमेयनवकविषयश्रुतिविरोधनिरास इत्यवान्तरभेदो द्रष्टव्यः ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्व-
प्रकाशिकाभाववोधे द्वितीयाध्यायस्य
तृतीयः पादः ॥ ३ ॥

---

१. अणुत्वेति। Text restored.

॥ श्रीवेदव्यासाय नमः ॥

# ॥ द्वितीयाध्यायस्य चतुर्थः पादः ॥

## (१) ॥ प्राणोत्पत्त्यधिकरणम् ॥

### सू०॥ ओं ॥ तथा प्राणाः ॥ ओं ॥ १. (३) ॥

"श्रुतिप्रायोपपत्तिभिः अविरोधश्चतुर्थे तु पादे सम्यक् समर्थ्यते" इत्यनुव्याख्यानं मनसि निधायाह—अत्रयुक्तीनामिति[1]। अनेन युक्तिसहितेति भाष्ये श्रुतिसिद्धत्वेन प्रबलेत्यादावुपस्कर्तव्यमित्युक्तं भवति।

"अध्यात्मप्रवणो भूत्वा तस्यासन्निहितत्वतः"

इत्यनुव्याख्यानं मनसि निधायाह—अध्यात्मविषयतया चेति। तत्रादाविति। P. 120 पूर्वाधिकरणेऽदृष्टानियमादि-अनाद्यविद्याकर्मादीत्युक्त्या कर्मादिपदोक्तज्ञानकरणत्वेनोपक्षिप्तानामिन्द्रियाणामुत्पत्तेरत्र विचारादनन्तरसङ्गतिरिति ज्ञातव्यम्। अत्र सर्वेष्वधिकरणेषु ईश्वरस्य श्रुतिसमन्वयेनोक्तमशेषजगत्कारणत्वमयुक्तमुत युक्तमिति प्रधानचिन्तानुवृत्तिर्द्रष्टव्या। अत एवात्र प्रत्यधिकरणं श्रुतिसमन्वयेन जगत्कारणसिद्ध्यर्थमित्याद्युक्तम्। तदयुक्तत्वयुक्तत्वे च "तथा प्राणाः" इत्यादौ साक्षात् सर्वजगत्कारणत्वाक्षेपपरिहाराभ्याम् 'सप्तगतेर्विशेषितत्वात्" इत्यादौ श्रुतिप्रामाण्याक्षेपपरिहाराभ्यामिति ज्ञातव्यम्। अत्र प्राणा. किमनुत्पत्तिमन्त उतोत्पत्तिमन्त इति चिन्ता। तदर्थं तदुत्पत्तिस्तदनुत्पत्तिश्रुतिविरुद्धा न वेति। तदर्थम् "प्राणा एवेदमग्र आसुः" इति तदनुत्पत्तिश्रुतिः किं युक्तियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थम् "नोपादानं हीन्द्रियाणाम्"इति स्मृत्युक्तयुक्तेर्गत्यन्तरं नास्त्युतास्तीति। तदर्थमिन्द्रियाणामुपचयादिरूपोत्पत्तौ श्रुतियुक्त्यादिविशेषप्रमाणं नास्त्युतास्तीति। उत्पत्तावपि श्रुतिरिति ॥

---

१. अत्रेति। "अनत्य"युक्तीनामिति " मध्वविलास"पुस्तपाठः।

"एतस्माज्जायते प्राणो मन सर्वेन्द्रियाणि च"

इति श्रुतिरित्यर्थ । प्राणानामुत्पत्त्यङ्गीकारे "प्राणा एवानादय" इत्यादिस्पष्टार्थ वद्विशेषश्रुतिविरोध इति **न्यायनिरण** मनसि निधायाह—**अस्याः स्पष्टार्थाया इति** ॥

ननूत्पत्तिश्रुतेरपी"न्द्रियाणि जायन्त" इत्युक्तत्वेन स्पष्टार्थतया निरवकाशत्वात् । कथ ततोऽस्या प्राबल्यमित्यत "नोपादान हीन्द्रियाणाम्" इति भाष्योक्तयुक्तिमाह—**प्राणा** इत्यादिना । **व्यतिरेकेणेति** । यद्यप्यन्वय दृष्टान्तो ब्रह्मास्ति तथापि [1]व्यतिरेकव्याप्तिं विना व्यभिचारशङ्काया अनिरासात् । उपादानकृता सृष्टिरिति भाष्योदाहृतस्मृत्यनुसारेण व्यतिरेक एवोक्त इति ज्ञातव्यम् । यथा यस्माद्युक्तिसमुदायात् । आकाशादय परमात्मन उत्पद्यन्ते तथा तस्मादेव[2] युक्तिसमुदायात् प्राणा अपि परमात्मन उत्पद्यन्त इति भाष्यार्थमभिप्रेत्याह—**उत्पत्तिमन्त एवेति** । **अत्र पुन निप्रतिपत्यभावे नेति** । तेज आदेर्ब्रह्मान्यकार्यत्वे घर्मात् स्वेददृष्टेरितिवदत्र प्राणाना ब्रह्मान्यकार्यत्वे प्रापकाभावेन विप्रतिपत्त्यभावेनेत्यर्थ । अन्यथोत्पत्तिश्रुतिबाहुल्यासम्भवादिति वियदधिकरणीयभाष्यानुसारेणासम्भवादित्येतत्प्रकारान्तरेण व्याचष्टे—**एतस्माज्जायत इति** । **श्रुत्यसम्भवोऽपि द्रष्टव्य इति** । अनेन "आत्मैवेद मग्र आसीत्, स प्राणमसृजत, स प्राणान्" इत्यादिवचनादनादित्व एव स्पष्टार्थविशेषश्रुतिविरोधादिति **न्यायविवरणमपि** व्याख्यात भवति । **प्रतिसृष्टिकाल मिति** । यस्मिन् प्रलयकालेऽनुपचयस्तदा न समर्थान्येव । यस्मिंस्तु सृष्टिकाले समर्थानि तदास्त्येवोपचय इत्यर्थ ॥

ननु इन्द्रियाणा भूतैरुपचये तैजसाहङ्कारकार्यत्ववाचि"तैजसानीन्द्रियाण्याहुरि"त्यादिप्रमाणविरोध इत्यत आह—**अत्राहङ्कारेति** ।

---

१ **व्यतिरेकेति** । व्यतिरेकव्याप्त्यैव निर्दोष व्यभिचारशङ्कानिवर्तकत्वमिति भाव ।

२ **तथेति** । यथा राजा इत्यादाविव नात्र दृष्टान्तदार्ष्टान्तिकभाव । परं तु युक्तिसमुदायस्यैकत्वं बोध्यम् ।

ननु तथापि तामसाहंकारे कार्याणां भूतानाम् "प्राणा एवेदमग्र आसुः, तेभ्यो भूतानि जज्ञिरे" इति भाष्योदाहृतश्रुतौ कथं प्राणकारणकत्वोक्तिरित्यत आह—**अहङ्कारोत्पन्नेति** ॥ ननु प्रागभावाप्रतियोगित्वादिरूपसाम्यसम्प्राप्तिरिष्टैवेत्यत आह—**मुख्यनित्यतायामिति । अनेनेति ।** परेण साम्यसम्प्राप्तेरित्यनेनेत्यर्थः। **उक्तयुक्त्यापीति।** अनेन "इदं सर्वमसृजत" इति सामान्यवचनस्याधिक्यं सिद्धान्ते विशेषमात्रश्रुतेः सकाशादुभयश्रुतेः प्राबल्यादिति न्यायविवरणमप्युक्ततात्पर्यकम् । अत्राद्ये—वियदादेः परमात्मोत्पन्नत्व उक्तयुक्त्यतिदेशेनेन्द्रियाणां परमात्मोत्पन्नत्वोक्तिः । द्वितीये—तद्बाधकत्वेन शङ्किताया अनादित्वश्रुतेः सहेतुकममुख्यार्थत्वोक्तिः । तृतीये—उत्पत्तिप्रमाणोपोद्बलक"स इदं सर्वमि"ति श्रुत्युक्तिरिति सूत्रक्रमः ॥ १ ॥

॥ इति प्राणोत्पत्त्यधिकरणम् ॥ १ ॥

---

## (२) ॥ तत्प्रागधिकरणम् ॥

### सू० ॥ ओं ॥ तत्प्राक् श्रुतेश्च ॥ ओं ॥ ४ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—अत्र **प्रकृतेन्द्रियान्तर्गतमन इति । किमिति ।** अत्र मनोऽनुत्पत्तिमदुतोत्पत्तिमदिति चिन्ता । तदर्थं तदुत्पत्तिरनुत्पत्तिश्रुतिविरुद्धा न वेति। तदर्थं नित्यं मनोऽनादित्वादित्यादियुक्त्या[3] श्रुतिर्मुख्यार्थोतामुख्यार्थेति । तदर्थमनुत्पत्तिश्रुतिर्युक्तियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थं"मन्ये न्द्रियेभ्यो विशिष्य मनसो नित्यत्वाभिधानादि"त्युक्तेर्गत्यन्तरं नास्त्युतास्तीति। तदर्थं मनस सृष्टिकाले किमिन्द्रियाणामिव बह्ववयवो-

---

१. असृजतेति । "सर्वमसृजते"ति "सर्व"शब्दघटितत्वेन प्राबल्यमिति भाव.।

२. अत्रेति । "मन एव मनुष्याणां कारणं बन्धमोक्षयो." इति मनसो वैशिष्ट्यं द्रष्टव्यम् ।

३. युक्त्येति । अनुमानेनेति भाव. । "नित्यं मनोऽनादित्वात्"इति श्रुतिरपि । "युक्त्येति" क्वचिन्नास्ति ।

पचय उत अल्पावयवोपचय इति। तदर्थं मनसोऽवयवोपचयादिरूपोत्पत्तौ विशेषप्रमाणं नास्त्युतास्तीति। पूर्वाधिकरणेन गतार्थताशङ्कां निरस्यति—न **चोत्पत्तीति**। कुतो नेत्यतो द्विधा ह्वा इत्यादिभाष्यं विशेषश्रुतिविरोध इति **न्यायविवरणानुसारेण** व्याचष्टे—**इन्द्रियाणामिति**। मनोव्यतिरिक्तानामित्यर्थः एतदेव च श्रुतेर्न्यायविवरणोक्तं विशेषरूपत्वम्, न तु धर्मनिर्देशमात्रम्।

"एतस्माज्जायते प्राणो मनःसर्वेन्द्रियाणि च॥"

इति सादित्वेऽपि तस्य सत्त्वादिति॥

ननु विशिष्य नित्यत्ववचनवत्"मनःसर्वेन्द्रियाणि चे"ति मनसः पृथग्जन्मवचनेन श्रुत्योः साम्यात् कथं निर्णय इत्यतो "न ह्यमना" इति श्रुतिविशेषोक्त-
127 युक्तिमाह—**किं चे त्यादिना**। **नित्यमेवेति**। अनुत्पत्तिमदेवेत्यर्थः। **पृथङ्मनस इति**। अनेन।

"एतस्माज्जायते प्राणो मन.सर्वेन्द्रियाणि च"

इति विशेषश्रुतिरिति **न्यायविवरणमप्युक्ततात्पर्यं** भवति। अन्येन्द्रियाण्यनित्यानीत्याक्षिप्य मनसो विशिष्य नित्यत्वाभिधानरूपयुक्तिनिरासाय सूत्रे "प्राक्"पदमित्यभिप्रेत्य प्रवृत्तं पूर्वोक्तत्वादिति भाष्यं तन्निरसनीयशङ्कानिरासपूर्वकं व्याचष्टे—**न चेत्यादिना**। श्रुते· पृथग्जन्माभिधानमात्राभिप्रायेणे"न्द्रियाणि मन" इति निर्देशः स्यात्; न तु "मन.सर्वेन्द्रियाणि चे"ति। एवं च श्रुतौ न केवलं पृथग्जन्माभिधानमात्रम्; किं तु विशिष्य नित्यत्वोक्तिरूपयुक्तिनिरासोऽप्यभिप्रेत इति सूत्रभाष्याशय इति भाव.। **श्रुतिविरोध** इति। "नित्यं मनोऽनादित्वादि"ति श्रुतिविरोध इत्यर्थ.। **सूक्ष्मस्वरूपसत्ताभ्युपगमादिति**। प्रलये मनसः सत्त्वाभावेऽल्पोपचयकारणादित्युक्तोऽल्पोपचयो नस्यादित्यर्थः। **अत एव न युक्तिविरोध** इति। उक्तरीत्या मनसोऽनादित्वेन पुंसो मनोवियोगाभावा-

---

१. अन्येति। Text reconstructed.

"अनित्यकोटौ निक्षिप्य" इति वाणियूरस्वामिना कोशे। तथा रामचन्द्राचार्याणा पुस्तकेऽपि।

"ब्रह्ममना इत्युक्तयुक्तिविरोधो नेत्यर्थ । न च विशिष्येति । अन्येन्द्रियाण्यनित्यकोटौ निक्षिप्य मनसो विशिष्य नित्यत्वोक्तिविरोध इत्यर्थ ॥ २ ॥

॥ इति तत्प्रागधिकरणम् ॥ २ ॥

---

## (३) ॥ तत्पूर्वकत्वाधिकरणम् ॥

## सू०॥ ओं ॥ तत्पूर्वकत्वाद्वाचः ॥ ओं ॥ ५ ॥

अनन्तरसङ्गतिं सुचयन् विषयमाह—**प्रकृतेन्द्रियान्तःपातिवागिन्द्रियमिति** । पूर्वं "मन एव पूर्वरूप वागुत्तररूपमि"ति श्रुते पूर्वरूपपदोक्तवागिन्द्रियकारणीभूतसाधारणं ज्ञानेन्द्रिय मनो विचार्य अनन्तरमुत्तरपदोक्तमन कार्यासाधारणकर्मेन्द्रियभूतवागिन्द्रियविचारादनन्तरसङ्गतिरिति भाव । **उत्पत्तिमदिति** । अत्र वागिन्द्रियमनुत्पत्तिमदुतोत्पत्तिमदिति चिन्ता। तदर्थं तदुत्पत्तिरनुत्पत्तिश्रुतिविरुद्धा न वेति । तदर्थं तदनुत्पत्तिश्रुतिर्मुख्यार्थोतामुख्यार्थेति । तदर्थं वाग्वाव नित्येति श्रुतिर्युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थमस्या हि श्रुतिरवतिष्ठत इत्युक्तयुक्तेर्गत्यन्तर नास्त्युतास्तीति । तदर्थं श्रुत्याश्रयत्व किं नित्य श्रुत्युच्चारणसामर्थ्यमुत तत्सन्निधियोग्यत्वमिति । तदर्थं श्रुत्याश्रयत्वस्य तत्सन्निधियोग्यत्वरूपत्वे प्रमाण नास्त्युतास्तीति । **श्रुतिसद्भावादिति** । "वाग्वाव नित्या" इति श्रुतिसद्भावादित्यर्थ । भाष्ये **न्यायविवरणवद्वाग्वाव** नित्येत्येतदादित्वेन श्रुत्युदाहरणे कर्तव्ये "नित्ययाऽनित्यया" "स्तौमि" इति यत्पूर्वोदाहरण तदनुरोधेनाह—**समाख्याश्रुतामिति** ।

> "नित्ययाऽनित्यया स्तौमि ब्रह्म तत्परम पदम् ।"
> "श्रुतिर्वाव नित्या अनित्या वाव स्मृतयो याश्च वाच ॥"

---

१. **प्रकृतेति** । "यन्मनसा मनुते तद्वाचा वक्ति" इति मनोविचारानन्तरं वाग्विचार इति द्रष्टव्यम् ।

इति समाख्याश्रुतावित्यर्थ । **उत्पत्तिश्रुत्यानुकूल्याच्चेति** । समाख्याबलात् "वाग्वावे"ति श्रुतेर्वेदविषयत्वे वागिन्द्रियोत्पत्तेर्बाधकाभावेन तदुत्पत्तिश्रुत्यानुकूल्याच्चेति भाव । समाख्याबाधकत्वेन ताव"दस्या ही"ति वाक्यशेषाभिप्रायमाह—**अस्यां हीति** । अनेन वाग्वाव नित्येति विशेषश्रुतिविरोध इति **न्यायविवरण**मुक्ततात्पर्यं भवति । अत एवैत**न्न्यायविवरण**निवर्तनीयतया प्रागुत्पत्तिश्रुत्यानुकूल्याच्चेत्युक्तम् । अनेनात्र **न्यायविवरणे** श्रुतेर्विशेपत्वं नाद्याधिकरण इव विशिष्य धर्मिनिर्देशमात्रं तत्साङ्कर्यम् । नापि द्वितीय इवान्येषामनित्यत्वोक्ति । तत्साङ्कर्यादेव । भाष्योदाहृतनित्ययेति वाक्ये तदभावाच्च । किं तु निरवकाशवाक्यशेषसाहित्यमपीत्युक्तं भवति । सयुक्तिकमिति, भाष्योक्तयुक्तिप्रदर्शनपरत्वेनापि **अस्यां हीति वाक्यशेषादिति** वाक्यशेष योजयति—**किं चेत्यादिना** । पूर्वाधिकरणेन गतार्थतामाशङ्कते—**अथापीति** । तन्निवर्तकभाष्योक्तयुक्त्यन्तरप्रदर्शनपरत्वेन"प्यस्या ही"ति वाक्यशेष योजयति—**श्रुतश्रुत्याश्रयत्वादेवेति** । श्रुत्याश्रयत्वेऽपि वाचोऽनादित्वश्रुते सूक्ष्मरूपानादित्वपरमुत्पत्तिश्रुतेरुपचयोत्पत्त्यर्थत्व च किं न स्यादित्यत आह—**श्रुत्याश्रयत्व नामेति** । अनेन वागिन्द्रियस्य नित्यत्व श्रुतिसन्निधियोग्यतेत्युदाहरिष्यमाणश्रुतिगतयोग्यतापदव्यावृत्त्या शङ्का दर्शिता । **मनोलक्षणकारणत्त्वेति** । अनेन तत्पूर्वं प्रकृत मन पूर्वं कारण यस्य तत्पूर्वक तस्य भावस्तत्त्व तस्मादिति सूत्रार्थ उक्तो भवति । विशेषश्रुतेरिति **न्यायविवरणे** पूर्वाधिकरणयोरिव न विशिष्य कीर्तनमात्र विवक्षितम् । किं तु निरवकाशवाक्यशेषसाहित्यमपीत्याह—**पूर्ववाक्यबलेनेति** । "तस्मान्मन एव पूर्वरूपमि"ति भाष्योदाहृतश्रुत्यपेक्षयाथ वाचा व्यवहरतीत्यस्य पूर्ववाक्यत्वादिदमुक्तम् । उपलक्षणं चैतत् । "मनसो वाव वागुदपद्यत वाचो व्याहरणमि"ति **न्यायविवरणो**दाहृतश्रुतिस्थोत्तरवाक्यबलेनेत्यपि ग्राह्यम् । **श्रुत्यादिविरोध** इति । आदिपदेना"स्या ही"ति वाक्यशेषप्रदर्शितसयुक्तिकमिति भाष्योक्तयुक्तिग्रहणम् । [2]**नित्यत्वोपचार** इति । एव च वाग्वेति, श्रुतेरुपचरितार्थत्वान्न तद्विरोध इति भाव । किं चेत्युक्तयुक्तिं निराह—

---

१ इतीति । Omission supplied.

२ नित्येति । "नित्यश्रुतिसन्निधानात्" इति टीकाकारा ।

**न चेत्यादिना।** "श्रुत्याश्रयत्वं नामे"त्यादिनोक्तयुक्तिं निरस्यति—**अत एवेति।** अनेन नित्यत्वं कुतश्च नेत्येतत् कुतश्चन विशेषश्रुत्या नित्याश्रयत्वयुक्त्या नित्यं श्रुत्युच्चारणसामर्थ्यलक्षणयुक्त्या च नित्यत्वं नेति व्याख्यातं भवति। मनस इति षष्ठीभ्रमं वारयति—**मनसः सकाशादिति।** न केवलं वागिन्द्रियस्येत्युदाहृतस्मृतिबलात् "द्वाग्वाव नित्ये"ति श्रुतेरुपचरितार्थत्वम्। "अस्यां ही"ति वाक्यशेषान्यथानुपपत्तिलक्षणान्तरानुपपत्त्यापीत्याह—**एवमभ्युपगम एवेति।** वागिन्द्रियस्योत्पत्तिमभ्युपगम्य श्रुतेरूपचरितार्थत्वाभ्युपगम एवेत्यर्थः। **नित्यत्व** इति सर्वथोत्पत्तिराहित्यलक्षण इत्यर्थः। **तस्या अपीति[1]।** नित्यत्वप्रतिपादकत्वेन प्रतीयमानाया अपि एतदर्थत्वात्। उपचयरूपोत्पत्तिमतोऽपि श्रुतिसन्निधियोग्यत्वरूपनित्यत्वार्थादित्यर्थः। तदेवोपपादयति। **वाग्वावेति**—उक्तार्थत्वाङ्गीकारे पूर्ववाक्यार्थोपपत्तिरपि नियामिकेत्यभिप्रेत्य नित्ययाऽनित्ययेति पूर्ववाक्यं योजयति—**एवं च सतीति।** "अस्यां ही"ति वाक्यशेषस्योपचारबीजप्रतिपादकत्वे सतीत्यर्थः। **पुराणाद्याश्रयत्वेन चेति।** अनेन "अस्यां ही"ति श्रुतिरित्येतदुपलक्षणम्। "अस्यां हि पुराणादिकमवतिष्ठन्त" इत्यपि ग्राह्यमित्युक्तं भवति॥

ननु श्रुतिपुराणाद्याश्रयत्वमात्रेण कथं वागिन्द्रियस्य नित्यत्वानित्यत्वे इत्यत आह—**एवं च समाख्यानुरोध** इति। तथा च समाख्याश्रुतौ श्रुतिर्वाव नित्याऽनित्या वाव स्मृतयो याश्चान्या वाच इति श्रुतिपुराणाद्याश्रययोर्नित्यत्वानित्यत्वस्योक्तत्वात्तत्र निर्णीतनित्यत्वानित्यत्वश्रुतिपुराणाद्याश्रयत्वेन वागिन्द्रियस्य नित्यत्वानित्यत्वे[2] घटेते इति भावः। अन्यथा स्वरूपेण नित्यत्वानित्यत्वविवक्षायां विरोधात् स्वरूपेण नित्यत्वमुपचितांशैरनित्यत्वमिति विवक्षायां वाक्यशेषादौ नित्यवेदाश्रयत्वाद्युक्त्ययोगात् वाक्पदेन विवक्षायां चास्यां हि श्रुतिरवतिष्ठत इति वाक्यशेषविरोधात्; अन्यथा वाक्यार्थो न युक्त इत्यर्थः। यद्वा, अन्यथा समाख्यानुरोधेन नित्ययाऽनित्यया स्तौमि परमात्मानमिति वाक्यस्य नित्यवेदाश्रयत्वेन नित्ययाऽनित्यपुराणाद्याश्रयत्वेनानित्ययेत्यर्थकत्वानङ्गीकारे तस्य

---

१. तस्य अपीति। Text restored.

२. नित्येति। नित्याश्रयेण नित्यत्वमनित्याश्रयेणाऽनित्यत्वमिति भावः।

वाक्यस्यार्थोपपत्तिर्न विद्यते । वाक्यशेषे नित्यया नित्येत्युक्तनित्यत्वं "वाचाव नित्ये"ति वाचः प्रतिज्ञाया"स्यां ही"ति तदुपपादनवदनित्यत्वप्रतिज्ञातदुपपादनयोरभावादिति भावः ॥ ३ ॥

॥ इति तत्पूर्वकत्वाधिकरणम् ॥ ३ ॥

---

## (४) ॥ सप्तगत्यधिकरणम् ॥

## ॥ ओं ॥ सप्तगतेर्विशेषितत्वाच्च ॥ ओं ॥ ६ ॥

128 **प्राणसङ्ख्येति** । धर्माणां मध्ये उत्पत्तिरूपधर्मस्य प्राथमिकत्वात् प्राणानामुत्पत्तिं[1] विचार्य अत्र तत्संख्या विचार्यत इत्यनन्तरसङ्गतिरिति भावः । **किं सप्तेति** । अत्र, प्रकृतप्राणाः किं सप्त द्वादशेत्यनिर्णय उत द्वादशैवेति निर्णय इति चिन्ता । तदर्थं "सप्त प्राणाः" "द्वादश वा एते प्राणा" इति श्रुती परस्परविरुद्धे उताविरुद्धे इति । तदर्थं प्राणानां द्वादशत्वे तच्छ्रुतिद्वयं न घटत उत घटत इति । तदर्थं सप्तत्वद्वादशत्वसंख्यावच्छेदकं नास्त्युतास्तीति । महापाठे निमित्ताभावे तेषामेवाभावापत्त्या द्वादशत्वस्यैवाभावेन तदवच्छेदकानुपपत्तिरन्यथा तदुपपत्तिरिति । अत्र श्रुतेरेव परस्परविरोध इति **न्यायविवरणे** उभयाप्रामाण्येन पूर्वपक्षितत्वाट्टीकायामपि सप्तैव प्राणा इत्यादिना च सप्तत्वद्वादशत्वश्रुत्योः समानबलत्वोक्त्या परस्परव्याघात इत्येक एव पूर्वपक्षो दर्शितः । तदनुसारेण सन्देहटीकापि सप्तोत द्वादशेति निर्णय इत्यध्याहारेण योज्या । **ग्रहाः सोमस्येति** । छन्दांसि च दधतोऽध्वरेषु ग्रहाः सोमस्य मिमते द्वादशेति श्रुतेरिति भाव. । सोमरसग्रहणार्था पात्रविशेषा इत्यर्थः । सप्तैवेति स्मृत्युक्तयुक्तिमाह— **किं चेत्यादिना** । **एकदैवत्याभिप्रायेणेति** । समसङ्ख्यादैवतकत्वाभिप्रायेणेत्यर्थः । द्वादशमासानां हि द्वादशादित्यादयो हि देवताः । एतद्युक्तिसूचनार्थमेव भाष्ये द्वादशमासा इति श्रुत्युदाहरणम् । अन्यथा द्वादश

---

१. **उत्पत्तिमिति** । उत्पत्तिलब्धसत्तायास्सर्वोपजीव्यत्वेन प्रथममुत्पत्तिं विचार्येति भाव. ।

वा एते प्राणा इत्येवोदाहरिष्यदिति भावः। **अन्यथा श्रुतेरिति**। द्वादशेत्यादिना प्राणादिसङ्ख्याकथनस्य वैयर्थ्यादिति भावः। **परस्परविरोधेनेति**। अनेन दशेमे पुरुषे प्राणा आत्मैकादश सप्त प्राणाः प्रभवन्ति तस्मादिति सङ्ख्याविशेषश्रुत्योरेव परस्परविरोध इति **न्यायविवरणमपि** व्याख्यातं भवति। **वाक्यशेषे सप्तानां ज्ञानार्थत्वेनेति**। अनेन "गुहाशयां निहिता. सप्त सप्ते"ति सप्तभावस्य बुद्धीन्द्रियविषयत्वेन विशेषितत्वादिति **न्यायविवरणमपि** व्याख्यातं भवति। गुहाशयायां बुद्धौ "लोपः समान" इति सूत्रादेकयकारलोपः। प्रतिपुरुषं सप्त सप्तेत्याथर्वणभाष्यं मनसि निधायाऽऽह—सप्त इमे लोका येषु चरन्ति प्राणा इति। गुहाशयां निहिता सप्त सप्तेति श्रुत्यर्थमाह—**गुहाहृदयमिति**। सप्तमीविभक्त्यर्थमाह—**तदर्थमिति**। अनेन गुहाशयामुद्दिश्य शेष इत्युक्तं भवति। लोका येषु प्राणेष्विति भ्रान्तिं वारयितुं यच्छब्दाध्याहारेण वाक्यं योजयति—**ये प्रतिशरीरमिति**। यत्र येषु लोकेष्वित्यर्थः। त इमे लोका सप्तेति सम्बन्धः॥

ननु सूत्रे सप्त प्राणा इति श्रुतेः सावकाशत्वमुक्तम्। न द्वादशत्वे प्रमाणम्। अतः कथं द्वादशत्वनिर्णय इत्यत"श्च"शब्देन तदप्युक्तमित्याशयेन प्रवृत्तं सप्त प्राणास्त्ववगतेरित्यादि भाष्यं तन्निर्वर्तनीयशङ्काप्रदर्शनपूर्वकमवतार्य व्याचष्टे—**विशेषणबलेनेत्यादिना**। **एतच्छ्रुताविति**। सप्त प्राणा इति श्रुतौ स्मृतेः श्रुतिसावकाशत्वप्रदर्शनेऽपि व्यापारोऽस्तीति दर्शयितुमुक्तम्। **एवं सावकाशायामिति**। **इतरापीति**। द्वादश वा एते प्राणा इति श्रुतिरत्र प्राणानां द्वादशत्वे उदाहर्तव्या—**उक्तविरुद्धमिति**। "तथा प्राणा" इति प्राणानां परमात्मोत्पन्नत्वोक्तेरित्यर्थः। सूत्रे "स्थित" इति विषयसप्तमीत्यभिप्रेत्य कर्मविषयत्वादित्युक्त भाष्ये तात्पर्यमाह—**कर्मार्थानीति**। कर्मकरणानीत्यर्थः। **एतावतैव वैलक्षण्येनेति**। अनेन सङ्ख्याश्रुत्योर्विषयवैलक्षण्यादिति **न्यायविवरणमपि** व्याख्यातं भवति॥

---

१ सप्तेति। द्वादशप्राणा इति सिद्धान्त। द्वादशत्वे प्रमाणमुक्तमिति द्रष्टव्यम्।

२ परमात्मेति। Text amended.

ननु निवर्तककर्मण स्थितिहेतुत्वात् ब्रह्मज्ञानस्य च तस्मादुद्धृत्य हेतुत्वात्तयो कथं स्थितिगतिशब्दावित्यत आह—**सजातीयत्वेनेति** । यथा यत्पपदाभ्या प्रापद्य तद्व्रोर्म पुरुष तस्मात् प्रपदे इत्याचक्षते इति श्रुत्युक्तस्य प्रपदशब्दनिमित्तस्य चतुर्मुखपादतलोपरिगतत्वेऽपि तज्जातीये पुरुषान्तरसम्बन्धिन्यपि तस्मिन् प्रपदशब्द । यथोक्तमैतरेयभाष्ये—

> "तस्मात् प्रपदनादेव प्रपदं नाम कीर्तितम् ।
> चतुर्मुखाकारवता नृणा पादतलोपरि ॥
> प्रपदाख्या वर्तते" ॥

इति तथेहापि प्रवृत्तिकर्मण संसारस्थितिहेतुत्वात् ब्रह्मज्ञानस्य तस्मादुद्गतिहेतुत्वात् सजातीययो कर्मान्तरज्ञानान्तरयोरपि स्थितिगतिशब्दावित्यर्थ । अत्राद्ये—"सप्त प्राणा" इति श्रुते सावकाशत्वप्रदर्शनपूर्वक प्राणाना द्वादशत्वे प्रमाणोक्ति । द्वितीये—"सप्त प्राणा" इति श्रुतौ प्राणानामसह्पाठेनासम्भवशङ्काव्यावृत्त्यर्थं सहापाठे निमित्तोक्तिरिति सूत्रक्रम ॥ ४ ॥

॥ इति सप्तगत्यधिकरणम् ॥ ४ ॥

---

## (५) ॥ अण्वधिकरणम् ॥

## सू० ॥ ओं ॥ अणवश्च ॥ ओं ॥ ८ ॥

**प्राणपरिमाणविषयेति** । पूर्वत्र सर्वप्राणविषयकपूर्वपक्षसिद्धान्तविशेष श्रुतिविषयसङ्ख्या[२] विचार्यात्र विशिष्य चक्षुरिन्द्रियविषयकपूर्वपक्षसिद्धान्तविशेष श्रुतिविषयपरिमाण विचार्यत इत्यनन्तरसङ्गतिरिति भाव । **किमिति** । अत्र प्राणा किं व्याप्ता उताणव इति चिन्ता । तदर्थं प्राणाणुत्व तद्व्याप्तिविरुद्धं न

---

१ **प्रवृत्तीति** । प्रवृत्तिकर्मानुष्ठानमप्यावश्यकमिति भाव ।

२ **सङ्ख्या इति** । प्राणसङ्ख्याविचारसमनन्तर प्राणपरिमाणविचार इति द्रष्टव्यम् ।

वेति। तदर्थं व्याप्तिश्रुति युक्तियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थं प्राणाना व्याप्ति किं स्वरूपेणोत प्रकाशगुणेनेति। तदर्थं प्राणाना स्वरूपाणुत्वे प्रकाशगुणेन व्याप्तत्वे विशेषप्रमाण नास्त्युतास्तीति। **कुतोऽत्रोक्ताणवः प्राणा इति।** श्रुतौ अणव इत्यनूद्य तेषा प्राणत्व विधीयत इत्युक्त भवति। "प्राणैर्हि-तद्वती"ति वाक्ये "हि"शब्दो हेत्वर्थक इति एतच्छब्देन पश्यतीत्याद्युक्तधात्वर्थ-परामर्श इत्यभिप्रेत्य तद्वाक्य व्याचष्टे—**ज्ञानकर्मकरणत्वलिङ्गादिति।** ज्ञानकर्मकरणत्वस्य प्राणासाधारणधर्मत्वादिति भाव। अनेनाणुभि पश्यत्यणुभि शृणोतीत्येतत्सर्वेन्द्रियोपलक्षकमित्युक्त भवति। तथा श्रुतेरिति भाष्यन्**यायनिव-रणो**दाहृताया "दिवीव चक्षु"श्रुतेरित्यर्थ। व्याप्त्याख्यविशेषवाचकश्रुतिविरोध इति **न्यायनिरण** मनसि निधायाह—**निष्णोर्व्याप्तत्व** इत्यादि। एतद्गर्भस्तु चक्षुर्दिवीव व्याप्त यदद्दृश्य फन्दर्शितमिति ऋग्भाष्यटीकाया यथा हि चक्षुराकाशे व्याप्तमपि न दृश्यते। केवल विषयोपलब्धिलक्षणेन फलेन अनुमीयते। तथा परमेश्वरस्वरूप सर्वगतमपि न दृश्यम्; किं त्वस्वतन्त्राणा पदार्थाना सत्ताप्रतीति-प्रवृत्तिभिर्ज्ञायत इत्युक्तम्। दूरश्रवणादिदर्शनादियुक्तिश्चेति भाष्योक्तयुक्तिमाह **किं चास्तीत्यादिना। अन्यथा करणत्वविरोधादिति।** व्यापारवत एव करण त्वाद्विषयप्राप्तिरूपसन्निकर्षस्यैव व्यापारत्वात्। तदभावे करणत्वविरोधादित्यर्थ। हेतोरन्यथासिद्धिं निवारयति—**न च स्थानमिति। तेजसा व्याप्तेति।** अनेन P पूर्वपक्षश्रुतियुक्त्यो सावकाशत्वप्रदर्शनार्थं सौत्र"श्च"शब्द इत्युक्त भवति। एव तर्हि साम्येनानिर्णय स्यादित्यत अणूनिह वा इन्द्रियाणि तेषा प्रकाशो व्याप्तत इति ततोऽप्यणुत्ववाचकविशेषश्रुतिविरोधादिति **न्यायनिरण** मनसि निधा याह—**विशेषश्रुतित्वाच्चेति।** चक्षु प्रकाशो व्याप्तत तेषा प्रकाशो व्याप्तत इत्य नेनैं "दिवीव चक्षुराततमि"ति व्याप्तिश्रुते सावकाशत्वप्रदर्शनात्ततोऽपि व्याप्ति वाचकश्रुतेरप्यणुत्ववाचकश्रुतेर्विशेष श्रुतित्वाच्चेत्यर्थ। पूर्वपक्षयुक्ते प्रतिकूलतर्क पराहतिमाह—**यदीन्द्रियाणीत्यादिना।** न केवल सर्वविषये सह समनस्के-

---

१ ज्ञानेति। प्रण विनेन्द्रियव्यापारानुपपत्तेरिति भाव।

२ न चेति। स्वस्थानम् इति "मध्वविलास" पुस्तकपाठ।

३ दिवीति। Text restored

न्द्रियसन्निकर्षस्य सत्त्वात् सर्वग्रहणप्रसङ्गः। किं तु तादृशसन्निकर्षस्य सदा सत्त्वप्राप्त्या सर्वदा च ग्रहणं स्यादित्याह—**सुप्त्याद्यभाव** इति। आदिपदेन मरणमूर्छादिग्रहणम्। शब्दो हीत्यादावत्र शब्दपदेन वर्णात्मकशब्द उच्यत इति ज्ञेयम्। **मानाभावादिति**। स एवायं गकार इति प्रत्यक्ष—"यावत् ब्रह्मविष्ठितं तावती वागि"ति श्रुतिरूपप्रमाणबाधाच्चेत्यपि ग्राह्यम्। **श्रोत्रस्यैव गमनोपपत्तेरिति** ॥

ननु श्रोत्रस्य चक्षुष इव गत्वाग्राहित्वे दिगादिशब्दे दिक्संशयो न स्यादिति चेत्; न। अगत्वाग्राहित्वे दिङ्निश्चयाभावप्रसङ्गात्। संशयादपि निश्चयो महीयान्। क्वचिच्छब्दे दिक्संशयस्तु रूपादाविव दोषबलाद्युक्त। न च श्रोत्रस्य गत्वाग्राहित्वे सङ्कोचे कारणाभावेन देवादिभाषितमपि गृहीयादिति वाच्यम्; चक्षुषोऽपि देवादिग्रहणप्रसङ्गात्। कार्यबलात् सङ्कोचस्योभयत्रापि तुल्यत्वादिति भाव। अन्यत्रापीति, प्राणाद्यारम्भ इत्यर्थ। **अनभ्युपगम इति**। दूरस्थश्रवणानभ्युपगम इत्यर्थ। दूरश्रवणादीत्युक्तयुक्तेरणूनि वा इन्द्रियाणि तेषा प्रकाशो व्याप्तत इति सावकाशत्वोक्त्यनुरोधेनायमभ्युपगमो ज्ञातव्य ॥ ५ ॥

॥ इत्यण्वधिकरणम् ॥ ५ ॥

---

## (६) ॥ श्रेष्ठाधिकरणम् ॥

## सू०॥ ओं ॥ श्रेष्ठश्च ॥ ओं ॥ ९ ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**सर्वप्राणप्रेरकः प्राणश्रुत्यासन्निधापित इति**। **उत्पत्तिमानिति**। अत्र मुख्यप्राणोऽनुत्पत्तिमानुतोत्पत्तिमा-

---

१ दिगिति। Text restored

२ अनभ्युपगम इति। Omission supplied

३ प्राणेति। Text amended.

निति चिन्ता। तदर्थं तदुत्पत्तिस्तदनुत्पत्तिश्रुतिविरुद्धा न वेति। तदर्थं "नैप प्राण उदेती"ति तदनुत्पत्तिश्रुतिः किं सर्वात्मनानुत्पत्तिपरोत देहादिस्थौल्येनोत्पत्तावपि स्वरूपसौक्ष्म्येणानुत्पत्तिपरेति। तदर्थमनुत्पत्तिश्रुति किं युक्तियुक्तत्वेन निरवकाशोत सावकाशेति। तदर्थं प्राणस्य यत्प्राप्तिरित्युक्तं सर्वजननमरणहेतुत्वरूपं माहात्म्यं किं विष्णुजातत्वेन तस्य नोपपद्यते उतोपपद्यत इति। तदर्थं विष्णोस्ततोऽप्यतिमाहात्म्यं नास्त्युतास्तीति। तदर्थं विष्णोस्ततोऽप्यतिमाहात्म्ये प्राणस्य विष्णुजातत्वे प्रमाणं नास्त्युतास्तीति। तदर्थं "आत्मत एष प्राणो जायत" इति श्रुतिगत प्राणशब्द· किं बाह्यवायुपर किं वा मुख्यप्राणपर इति। तदर्थं परमात्मन. सकाशात् प्राणोत्पत्तिश्रेष्ठा बाह्यवाय्वोरुत मुख्याप्राणस्येति। पृथङ्नोपदिश्यत इति, "एतेन मातरिश्वा व्याख्यात" इत्यनेन गतार्थता प्रतिषेधति—**न च मुख्यवाय्विति**। "एतेन मातरिश्वे"त्यत्र बाह्येन मुख्यवायुरूपेणोत्पत्तिरुक्ता। अत्रे त्वखिलजननमरणोत्पत्तिकारणेनाध्यात्मिकप्राणरूपेणाप्युत्पत्तिरुच्यत इति भेद·। तद्धेतुत्वेन भाष्यन्यायविवरणोक्तयुक्तिमाह—**तस्याखिलोत्पत्तीति**। सौत्र"च"शब्दसमुच्चयं दर्शयति—**यथेतर इति** ॥

नन्वखिलजननमरणकारणस्य मुख्यप्राणस्य कथं विष्णुजातत्वाभिधानमुपपन्नमित्यतस्ततोऽपि माहात्म्यात् विष्णोरिति **न्यायनिरणं** योजयति—**यत्प्राप्तिरित्याद्युक्तेति**। **न्यायनिरणोदाहृता** श्रुतिमुदाहरति—**तदुक्तमिति** ॥

अत्राद्ये—मुख्यप्राणस्य विष्णुजातत्वोक्ति। द्वितीये—तत्र प्रमाणत्वेनाभिमता"त्मन एष प्राणो जायत" इति श्रुतिगतप्राणशब्दस्य मुख्यप्राणपरत्वसिद्ध्यर्थं सहेतुकं 'बाह्यवायुचेष्टापरत्वाभावोक्तिरिति सूत्रक्रम ॥ ६ ॥

॥ इति श्रेष्ठाधिकरणम् ॥ ६ ॥

---

१ बाह्येति। Text reconstructed.

[illegible] Omission supplied

## (७) ॥ चक्षुराद्यधिकरणम् ॥

## सू०॥ ओं ॥ चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ ओं ॥ ११ ॥

**मुख्यप्राणविषयश्रुतीति**। पूर्वाधिकरणोक्तप्राणस्योत्पत्तिरिह पूर्वपक्षे[१] स्वातन्त्र्यादाक्षिप्यत इत्यनन्तरसङ्गतिरिति भावः । **स्वतन्त्र** इति । अत्र मुख्यप्राणः किं स्वतन्त्रः परतन्त्रो वेति चिन्ता । तदर्थं तत्पारतन्त्र्यश्रुतिः किं प्रबलस्वातन्त्र्यश्रुतिविरुद्धा न वेति । तदर्थं स्वातन्त्र्यश्रुतिः किं प्राणस्य मुख्येश्वरताभिप्रायेतावान्तरेश्वरत्वाभिप्रायेति—तदर्थं प्राणस्याखिलजगच्चेष्टकत्वलक्षणमाहात्म्यरूपयुक्तिरवान्तरेश्वरत्वविरोधिनी भवत्युत न भवतीति । तदर्थं प्राणस्य ततोऽप्यतिमाहात्म्यवद्विष्ण्वधीनत्वे विशेषप्रमाणं नास्त्युतास्तीति । तदर्थं तस्य परमात्माधीनत्वे सर्वात्मना चक्षुरादिसाम्यं प्राप्नोत्युत न प्राप्नोतीति । तदर्थं प्राणस्य जीवप्रयोजकत्वकारणमस्त्युत नास्तीति । यदाश्रयादस्य चेष्टेति भाष्योक्तयुक्तिमाह—**अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेनेति** । अनेनेत्यादिमाहात्म्यवचनान्मुख्यप्राणस्य नोत्पत्तिरिति **न्यायविवरणे** आदिपदं यदाश्रयस्य चेष्टेति प्रमाणपरम् । उत्पत्तिपदं "पारतन्त्र्यस्याप्युपलक्षकम्" **इत्यनुव्याख्यानो**क्तमाहात्म्यरूपो न्याय अधिकरणद्वयसम्बन्धित्वेन युगपदेव विवृत इत्युक्तं भवति । "स्थूलत्वेनोदेती"त्युत्पत्तिश्रुतेः सावकाशत्वं[२] चाह—**लीलयेति**। सूत्रे "तु"शब्द "एवा"र्थकः। वदित्यनन्तरं परमात्मवश इति शेष इत्यभिप्रेत्य प्रवृत्तं चक्षुरादिवदित्यादिभाष्यं व्याचष्टे—**मुख्यप्राण इति** । **चक्षुरादिवदेवेति** । अनेन सूत्रे यथाश्रुतोऽप्येवकारार्थकतुशब्दान्वयः । भाष्ये चक्षुरादिवदेवेत्यप्येवकारसम्बन्ध इत्युक्तं भवति । सर्वकर्तापीत्यादिभाष्योदाहृतं वचनम्—

"महत्त्वान्महतां विष्णुः कर्ता प्राणस्य चैकराट्"

इति **न्यायविवरणोदाहृत**वचनोपलक्षकम् । **युक्तिविरोधादिति** । उभयोरपि पराधीनत्वप्राप्तेश्चान्योन्यानुरोधे तु न सर्वैश्वर्यमित्युक्तरीत्या "यतो नैवेश्वरद्वयम्"

---

१. **पक्ष इति** । स्वातन्त्र्यमवलम्ब्य पूर्वपक्षोत्थानमिति भावः । स्वतन्त्रस्योत्पत्त्ययोगादिति ।

२. **सावकाशेति** । Omission supplied.

इत्युक्तयुक्तिविरोधादित्यर्थ. । इतरेषां प्रमाणानां करणत्वादिति भाष्यस्यो-त्सूत्रितत्वं निरस्यति—चशब्द इति । **कर्तृप्रयोज्येति ।** सुषुप्तौ प्रयत्नाभावे चक्षुरादीनां [1]व्यापारादर्शनाज्जीवप्रयोज्यत्वं मुख्यप्राणस्य तु तदापि व्यापारदर्शनात् तदप्रयोज्यत्वमिति भाव: ॥

अत्राद्ये—मुख्यप्राणस्य चक्षुरादिवदेव [2]परमात्माधीनत्वोक्तिः । द्वितीये—चक्षुरादिसाम्यव्यवच्छेदाय प्राणस्य [3]जीवाकरणत्वोक्तिरिति सूत्रक्रमः ॥ ७ ॥

॥ **इति चक्षुराद्यधिकरणम्** ॥ ७ ॥

---

## (८) पञ्चवृत्त्यधिकरणम् ॥

## सू० ॥ ओं ॥ पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ ओं ॥ १३ ॥

अनन्तरसङ्गतिं सूचयन् विषमाह—मुख्यप्राणप्रसङ्गसन्निधापित इति । P 1 **किमिति ।** अत्र प्राणादय पञ्च किं मुख्यप्राणस्य दासा उत तत्स्वरूपाणीति निर्णयो [4]न सम्भवत्युत सम्भवतीति चिन्ता । तदर्थं प्राणादेर्मुख्यप्राणस्वरूप-त्वतद्दासत्वश्रुती किं परस्परविरुद्धे उत नेति । तदर्थं श्रुतिद्वयमेकविधप्राण-विषयमुतोभयप्राणविषयमिति । तदर्थं प्राणाज्ञया कर्मकारिषु प्राणादिषु पायू-पस्थेऽपानमित्याद्युक्तं व्यक्तसद्गुणत्वं किं न सम्भवत्युत सम्भवतीति । तदर्थं मुख्यप्राणस्वरूपाणां तद्दासानां च तारतम्येन व्यक्तसद्गुणत्वे विशेषप्रमाणं नास्त्युतास्तीति । प्राणापानादय इत्यादिभाष्योक्तयुक्तिमाह—**प्राणादय** इति । **तदाज्ञया कर्मकारित्वादिति ।** प्राणादीना च कर्माणि ।

---

१. **व्यापारेति ।** मुख्यप्राणस्य सुषुप्तावपि व्यापारविशिष्टत्वान्न जीवप्रयोज्यत्व-मिति द्रष्टव्यम् ।

२. **परमात्मेति ।** अत एव न स्वातन्त्र्यमिति भाव. ।

३. **जीवेति ।** जीवाऽप्रयोज्यत्वमिति भाव ।

४. **नेति ।** Omission supplied.

"प्राणापानाविडाया च पिङ्गलाया च वर्तेत ।
व्यान सन्धिषु सर्वत्र चोदानो ब्रह्मनाडिग ॥
सर्वेनैव समानस्तु सम चरति सर्वश ॥"

इति भारतवचनाज्ज्ञेयानि[1] । प्राणान्नया कर्मकारित्वे श्रुतिमाह—**तथा च श्रुतिरिति** । प्राणादिपञ्चकव्यक्तसद्गुणत्वान्मुख्यप्राणवृत्तित्वमेवेति न्याय विवरणोक्तपूर्वपक्षयुक्तिमाह—**मुख्यप्राणस्वरूपाणि चैतानीति** । असिद्धि परिहारार्थं व्यक्तसद्गुणत्वे प्रमाणमाह—**पायूपस्थे** इत्यादिना । अतस्तदाश्रया नित्यमिति पूर्वपक्षभाष्ये मुख्यदासत्त्वे युक्त्युक्ते प्राणादिपञ्चकस्य व्यक्तगुणत्वा न्मुख्यप्राणवृत्तित्वमिति **न्यायविवरणे** च मुख्यप्राणस्वरूपत्वे युक्त्युक्ते श्रुत्यो समबलत्वादनिर्णयरूपपूर्वपक्षफलमाह—**एव चेति** । **तद्वृत्तयोऽपीति** । तत्स्वरूपभूता इत्यर्थ । **पञ्चदासवानिति** । अनेन सूत्रे "मनोवद्वि"ति दृष्टान्तबलेन "पञ्चवृत्तिरि"त्यनन्तर पञ्चदासवानिति शेष इत्युक्त भवति । **चेतसो व्याप्ति श्चेतनेति** ।

" बहुस्मरणशक्तिस्तु चेतनेत्यभिधीयते "

इति हि वचनम् । मुख्यप्राणस्य ततोऽपि सद्गुणत्वादिति **न्यायविवरण** योजयति—**मुख्यप्राणस्येति** । न्यायविवरणोदाहृता श्रुतिमाह—**अशेषेति** ।

ननु पायूपस्थेपानमिति सद्गुणत्वप्रतिपादक श्रुतेर्मुख्यप्राणस्वरूपविषयत्वाङ्गीकारेणैवोपपत्तौ सद्गुणद्वैविध्य कुत[2] कल्प्यत इत्यत आह—**दासानुपक्रम्येति** । इतरान् प्राणान् पृथक् पृथगेव सन्निधत्त इति दासानुपक्रम्य तदनन्तरमेव पायूपस्थेपानमित्यादीना सद्गुण्योक्तिरित्यर्थ ॥ ८ ॥

**॥ इति पञ्चवृत्त्यधिकरणम् ॥ ८ ॥**

---

१ **ज्ञेयानीति** । हृदि प्राणो गुदेऽपान समानो नाभिग स्मृत ।
उदान कण्ठदेशस्थो व्यान सर्वशरीरग ॥" इत्यन्यत्र ।

२ **कुत इति** । Text amended

## (९) ॥ इत्यणुश्चाधिकरणम् ॥

## सू०॥ ओं ॥ अणुश्च ॥ ओं ॥ १४ ॥

**परिमाणविपर्येति** । पूर्वाधिकरणोक्तप्राणादिभेरकत्वाधिकसद्गुणत्वाय प्राणस्य विभुत्वमप्यस्त्विति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भावः । **व्याप्त इति** । अत्र मुख्यप्राणः किं व्याप्त उताणुरिति चिन्ता । तदर्थं तदणुत्वं व्याप्तत्वश्रुतिविरुद्धं न वेति । तदर्थं व्याप्तत्वश्रुति युक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं "यत. सर्वं जगद्व्याप्य" इति श्रुतिः किमान्तरमुख्यप्राणरूपाभिप्राया किं बाह्यमुख्यवायुरूपाभिप्रायेति । तदर्थं तस्य बाह्यरूपेण व्याप्तत्वे आन्तररूपेणाणुत्वे किं प्रमाणं नास्त्युतास्तीति । अन्यथेत्युक्तव्याप्त्यभावस्य केन धार्यत इत्याक्षेपे साक्षाद्धेतुत्वासम्भवादाह—**व्याप्त्यभावेऽसौ न धारयेदिति** ॥ यत. सर्वमिति भाष्योक्तयुक्तिमाह—**सर्वेति** । अत्र **न्यायविवरणोदाहृतां** श्रुतिमुदाहरति—**तथा चेति** । प्रमाणान्तरमप्याह—**सप्तस्कन्ध इति** । **बहिर्देहादिति** । अनेन सौत्र"श्च"शब्दो व्याप्तत्वश्रुतेः सावकाशत्वप्रदर्शनार्थ इत्युक्तं भवति । **वाक्यशेषोद्धार इति** । "प्राणो वाव ईशितव्येश" इत्यादिवाक्यशेषोद्धार इत्यर्थः । **विशेषश्रुतित्वादिति** । अन्तर्वाणुर्बहिर्महानिति अणुत्वमहत्त्वयोर्व्यवस्थाया प्रतिपादकत्वेन विशेषश्रुतित्वादित्यर्थ. । अणुर्वै मुख्यप्राणो यदुत्क्रामति नाडीभिरिति इष्टायुक्तिरणुत्वे प्राणस्येति **न्यायविवरणं** संयोजयति—**नाडीति** ॥ ९ ॥

॥ इत्यणुश्चाधिकरणम् ॥ ९ ॥

---

१. **अन्तरिति** । विरुद्धार्थनिष्ठविरोधपरिहारकारणव्यवस्थाप्रतिपादकत्वमिति द्रष्टव्यम् ।

## (१०) ॥ ज्योतिराद्यधिकरणम् ॥

## सू०॥ ओं ॥ ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ ओं ॥ १५ ॥

ननु प्राणाना करणत्वे सिद्धे ब्रह्मकरणत्वादिविचारावसरस्तदेव कुत
32 सिद्धमित्यत आह—**अधिकरणसङ्गतिमिति**। ननु 'अकारणत्वाच्च' इति सूत्रेण मुख्यप्राणस्याकारणत्वमेवोक्तमिति कथ कारणत्व प्राणानामुक्तमित्यत आह—**"च"शब्देनेति**। अत एवेतरेषा प्राणाना करणत्वादिति तत्सूत्रभाष्य उक्तम्। **किमिति**॥ चक्षुरादिवदित्यत्र करणत्वेन प्रकृतानि चक्षुरादीनि जीवकरणान्युत ब्रह्मकरणानीति चिन्ता। तदर्थं ब्रह्मकरणत्व जीवकरणत्व-श्रुतिविरुद्ध न वेति। तदर्थं "जीवस्य करणान्याहु" इति श्रुति "यस्माच्च-द्वशगा" इत्युक्तिश्च जीवस्वामिकत्वाभिप्रयोतेश्वरस्वामिकत्वेऽपि जीव प्रति क्रियासाधनत्वमात्राभिप्रायेति। तदेर्थं प्राणानामीश्वरस्वामिकत्वे जीव प्रति क्रिया साधनत्वमात्रे च प्रमाण नास्त्युतास्तीति। यस्मादिति श्रुतिशेषोक्त्युक्तिमाह—**जीववशत्वेनेति**। अनेनेन्द्रियाणा जीवकरणत्वे दृष्टायुक्तिरिति **न्यायविवरण मपि** व्याख्यात भवति। सूत्रे "तु"शब्दो जीवकरणत्वरूपविपक्षव्यावृत्त्यर्थ-मेवकारार्थं करणे प्रवर्तयतीत्युपस्कारो ज्योतिराद्यधिष्ठानमित्यस्यैवैतदर्थ-त्वेनावृत्तिर्वा। तदिति पद व्यस्त समस्त च। व्यस्ततच्छब्दबलाद्यच्छब्दलाभ। "ज्योतिराद्यधिष्ठानमि"ति हेत्वर्थगर्भमित्यभिप्रेत्य प्रवृत्त यत् ज्योतिराद्यधिष्ठानमिति भाष्य व्याचष्टे—**ब्रह्मैवेत्यादिना**। "य प्राणे तिष्ठन्नि"त्यादौ प्राणशब्दस्येन्द्रिय परत्वे "यश्चक्षुषि तिष्ठन्नि"त्यादे पौनरुक्त्यापातेन तस्य मुख्यप्राणपरत्वे कथमत्र तदुदाहरणमित्यत"स्तदामननादि"ति युक्तिप्रदर्शकमपीत्यभिप्रेत्य तदुदाहरणमित्या-शयेनाह—**सर्वप्राणप्रेरकेति**। "यश्चक्षुषि तिष्ठन्नि"त्यादिदृष्टयुक्तेरीश्वरकरणत्वा-नङ्गीकार इति **न्यायविवरण** "तदामननादि"त्येतत्प्राणाना ब्रह्मकरणत्वे श्रुति-प्रदर्शकतया व्याख्यातमित्यभिप्रेत्याह—**यश्चक्षुषीति**।

---

१ जीवेति। जीवकरणत्वप्रतिपादकश्रुतिरिति भाव।

ननु कारणक्रमेण वचने आकाशाद्यधिष्ठानमिति कार्यक्रमेण वचने पृथिव्याद्यधिष्ठानमिति वक्तव्ये ज्योतिराद्यधिष्ठानमिति किं[1] निमित्तमित्यत आह—**चक्षुरादिवदिति । प्रकृतत्वादिति ।** उपलक्षणं चैतत् । "चक्षुषा दर्शयती"ति श्रुतौ चक्षुष आदित्वेन ग्रहणादित्यपि ग्राह्यम् । **स्वकरणैरेवेति ।** अनेन लौकिकदृष्टेस्त्वीदृशेनैव जीवानुसारित्वक्लृप्त्योपपत्तेरिति **न्यायविवरणमपि** व्याख्यातं भवति । **जीवकरणत्वे तदुपपत्तिरिति ।** मुख्यप्राणस्य जीवकरणत्वाभावादकारणत्वहेतुनेत्याद्युक्तोपपत्तिरित्यर्थः । **जीवापेक्षया ब्रह्मकरणत्वमिति ।** "अकरणत्वाच्चे"ति सूत्रे मुख्यप्राणस्य मुख्यत्वप्रयोजकाकारणत्वप्रतियोगित्वेन यत्करणत्वमितरप्राणानां "च" शब्देनोक्तं तज्जीवेनैव करणैः कारयति परमात्मेत्याद्युक्तरीत्या जीववशत्वेन ब्रह्मप्रयोज्यत्वरूपं करणत्वं तत्र सूत्रे विवक्षितम् । मुख्यप्राणस्य जीवापेक्षया ब्रह्मकरणत्वाभावान्मुख्यत्वोपपत्तिरिति भाव. । प्राणवत्पदेन कथं प्राणादय· सन्निधापिता इत्यत आह—**न हीति ॥**

ननु जीवकरणसम्बन्धनित्यत्वस्यैव प्रकृतोपयोगात् तस्येत्यनेनैव प्राणवत्पदप्रकृतजीवकरणसम्बन्धपरामर्शसम्भवात् सूत्रे "च"शब्दस्यैव वैयर्थ्ये कथमेवं तद्व्याख्यानं भाष्य इत्यत आह—**सम्बन्धिनोरभाव** इति । तदुक्तिः । तस्येति परामृष्टजीवस्य "च"शब्दगृहीतप्राणाना च नित्यत्वोक्तिरित्यर्थः ॥

अत्राद्ये—प्राणानां ब्रह्मकरणत्वप्रतिज्ञापूर्वकं तत्र श्रुतियुक्तिरूपप्रमाणोक्तिः । द्वितीये—जीवकरणत्वश्रुतेरीश्वरक्लृप्तजीवानुसारित्वार्थकत्वेन सावकाशत्वोक्तिः। तृतीये—"जीवस्य करणान्याहुरि"ति श्रौतव्यवहारस्यौपचारिकत्वमभिप्रेत्य प्राणवत्पदप्रकृतजीवकरणतत्सम्बन्धानां नित्यत्वोक्तिरूपोपचारबीजोक्तिरिति सूत्रक्रमः ॥ १० ॥

॥ इति ज्योतिराद्यधिकरणम् ॥ १० ॥

---

१. **किमिति ।** किं नियामकमिति भाव ।

२. **ब्रह्मेति ।** Text amended.

## (११) ॥ त इन्द्रियाधिकरणम् ॥

### सू० ॥ ओं ॥ त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ ओं ॥ १८ (२०) ॥

अनन्तरसङ्गतिं सूचयन् विषयमाह—**प्राक् प्रकृतमिन्द्रियत्वमिति ।** पूर्वाधिकरणे करणभूतचक्षुरादिप्राणप्रसङ्गेन तदिन्द्रियत्वस्यापि प्रकृतत्वादित्यर्थ । यद्वा पूर्वं मुख्यप्राणस्य जीव प्रत्यकरणत्वमुक्तम् । तस्यापीन्द्रियत्वेन त प्रति करणत्वादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति । **किमिति ।** अत्र प्राणपदोक्ताना त्रयोदशानामपीन्द्रियत्वमुत द्वादशानामेवेति चिन्ता । तदर्थं द्वादशानमेवेन्द्रियत्व "प्राणा वा इन्द्रियाणी"ति श्रुतिविरुद्ध न वेति । तदर्थं सामान्यश्रुति किमिद द्रवणयुक्तियुक्तत्वेन निरवकाशोत "द्वादश वा" इति विशेषश्रुत्यनुसारेणैकपरित्यागेनेतरप्राणमात्रविषयत्वेन सावकाशेति । एकपरित्यागेऽपि चक्षुरादीतरप्राणेष्वेवान्यतरपरित्याग उत मुख्यप्राणपरित्याग इति । तदर्थं मुख्यप्राणस्य चक्षुरादिभ्य इद द्रवणराहित्यसर्वकर्तृकारयितृत्वादिरूपो विशेषो नास्त्युतास्तीति । मुख्यप्राणस्याप्यन्यसाम्यमिति **न्यायविवरणाशा**भिप्रायमाह—**तथात्व** इति । द्वितीयसूत्रनिवर्तनीयामाह—**न हीति ।** ईशवशत्वसाम्येनेति **न्यायविवरणानुसारेणाह—उभयोरिति ॥**

ननूभयोरीशवशत्वाविशेषेऽपि जीवापेक्षया प्रत्यकरणत्वाभावादिरूपविशेषेण तस्यानिन्द्रियत्व स्यादित्यत आह—**प्रातिस्विकेति ।** **चक्षुरादिष्वेवमिति ।** चक्षुर्नेन्द्रियमिति चेत, न, तथात्वे श्रोत्रस्यानिन्द्रियत्व किं न स्यादित्यादि द्रष्टव्यमित्यर्थ । सूत्राशव्याख्यानपर त एवेन्द्रियाणीति भाष्यमेवकारव्यावर्त्यप्रदर्शनपूर्वक व्याचष्टे—**न ते सर्वे** इत्यादिना । "अन्यत्र श्रेष्ठादि"ति सूत्राशव्याख्यानपरमुख्यप्राणमृत इत्येतद्व्याचष्टे—**तत्र च मुख्यप्राणमिति ।** इद द्रवणमित्युक्तेर्मुख्यप्राणे असिद्धि वक्तु "द्रवता ही"ति श्रुतिविशेषोदाहरणमित्यभि

---

१ पूर्वमिति । Text amended

२ जीवेति । Text amended

प्रेत्याह—इद द्रवणवत इति। **सर्वकर्तृकारयितृत्वेनेति**। "द्रवता ही"त्यनेनैव मुख्यप्राणस्येदं द्रवणाभावत्वोक्तेरत्र स्थित इत्युक्तस्येदं द्रवणाभावानुक्तिरिति ज्ञातव्यम्। उपलक्षणंचैतत्। "यस्मिन्निदं सर्वमध्याध्नोत्प्राणस्यैतद्वशे सर्वं त्रिदिवे यत्प्रतिष्ठितमि"त्यादिश्रुतेरीशसाम्यस्यापि भावादिति *न्यायविवरणोक्त*-प्रकारेणापीशसाम्यं ज्ञेयम्। **प्रागुक्तविरोध इति**। चक्षुरादिवदित्युक्तविरोध इत्यर्थ ॥

अत्राद्ये—मुख्यप्राणव्यतिरिक्तप्राणानामिन्द्रियत्वप्रतिज्ञापूर्वक तत्र श्रुति-रूपप्रमाणोक्ति । द्वितीये—मुख्यप्राणपरित्यागेन[1] तदितरद्वादशप्राणानामिन्द्रि-यत्वाङ्गीकारे मुख्यप्राणस्य चक्षुरादीतरप्राणप्रतिबन्धादिपरिहारार्थं चक्षुरादिभ्यो मुख्यप्राणस्य श्रुतिप्रमाणेन सर्वकर्तृकारयितृत्वेनेशसाम्यरूपविशेषोक्ति । मुख्य-प्राणस्येशसाम्ये तस्येशाधीनत्वमस्ति न वा[2] आद्ये तस्यानिन्द्रियत्वासम्भव । द्वितीये—प्रागुक्तविरोध इत्याशङ्कापरिहाराय, तृतीये—मुख्यप्राणस्य चक्षुरादीना चेशवशत्वाविशेषेऽपि चक्षुरादीना जीवप्रयत्नापेक्षप्रवृत्तित्वे प्रत्यक्षस्य मुख्य-प्राणप्रवृत्ते केवलेश्वराधीनत्वे श्रुतिरूपप्रमाणस्य चोक्तिरिति सूत्रक्रम ॥ ११ ॥

॥ इति तदिन्द्रियाधिकरणम् ॥ ११ ॥

---

## (१२) ॥ संज्ञाधिकरणम् ॥

### सू०॥ ओं ॥ संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ ओं ॥ २१ ॥

अनन्तरसङ्गतिं दर्शयन् विषयमाह—**इन्द्रियादीनामाश्रय इति**। **किमिति**। अत्र[3] नामरूपात्मकदेहादिप्रपञ्च किं विरिञ्चिसृष्ट उत परमात्मसृष्ट

---

१ त्यागेनेति। Text reconstructed.

२ श्रुतीति। मुख्यप्राणप्रवृत्त केवलेश्वराधीनत्वेन, तदतिरिक्तद्वादशप्राणाना-मिन्द्रियत्वाङ्गीकार इति भाव ।

३. अत्रेति। Omission supplied.

इति चिन्ता। तदर्थं परमात्मस्रष्टृत्वे "विरिञ्चो वा इदं सर्वं विरेचयती"ति विरिञ्च-स्रष्टृत्वं श्रुतिविरुद्धं न वेति। तदर्थं "विरिञ्चो वा" इति श्रुतिः यस्माद्विरेचयेदित्युक्तयुक्तियुक्तत्वेन विरिञ्चस्य द्वारत्वमात्राभिप्रायकतया सावकाशेति। तदर्थं विरिञ्चस्य सर्वस्रष्टृत्वशक्तिर्नास्त्युतास्तीति। विपूर्वो दधातिः करोत्यर्थे इत्यन्यत्रोक्तत्वात् विरेचयति विदधातीति पुनरुक्तमित्यत आह—**विरेचयतीत्यस्यैव व्याख्यानमिति**। नामरूपकर्तृत्वस्य परमशब्दनिर्वचनत्वायोगात् तथा प्रतीतिं वारयितुमाह— **नामरूपकर्तृत्वमिति**। अनेन कस्माद्धेतोः विष्णुः परम उच्यत इति परमत्वे हेतुप्रश्ने हि यस्मात्तदुत्तमादेव नामरूपे व्याक्रियेते इति व्याप्तिमुक्त्वा तस्मादेनं नामरूपकर्तारं परममाहुरिति श्रुतियोजना भवति।

"यस्माद्विरचयेत् सर्वं विरिञ्चस्तेन भण्यते"

इत्युक्तयुक्तियुक्तत्वादेवेत्यर्थः। "तेजोऽतस्तथा ह्याहे"त्यादिन्यायेन गतार्थताशङ्कापरिहाराय विरिञ्चस्यापि कर्तृत्वशक्तेः स एव शरीरादिस्रष्टेति **न्यायविवरण**-मभ्यधिकाशङ्काप्रदर्शकतया तन्निवर्तनीयशङ्काप्रतिषेधपूर्वकं व्याचष्टे--**न च**
34 **विरिञ्च** इत्यादिना। सूत्रे "तु"शब्द एवार्थः। त्रिवृत्कुर्वत इति विशेषणस्य परादिति विशेष्यपदमुपस्कर्तव्यमित्यभिप्रेत्य प्रवृत्तं नामरूपेत्यादिभाष्यं व्याचष्टे-**परमात्मन इति**। धीर इत्यादिपुंलिङ्गानुरोधेनाऽऽह—**यदिति** लिङ्गविपर्यास। इति।

"त्रिवृत्क्रिया यतो विष्णो रूपं च तदपेक्षया।
रूपापेक्षं तथा नाम"

इति वक्ष्यमाणस्मृत्यनुसारेण त्रिवृत्करणापेक्षत्वान्नामरूपयोरिति भाष्यं व्याचष्टे-**नामरूपादिकरणमिति**। **सावकाशतामिति**। अनेन विरिञ्चस्य तु द्वारतयैवो-

१. विरेचयतीति। "अस्य व्याख्यानम्" इति "मध्वविलास"पुस्तकपाठः।

२. परमेति। Text reconstructed.

३. नामेति। "नामादिकरणं" "सावकाशत्वम्" इति—"मध्वविलास"—पुस्तकपाठः।

पद्यतेरिति न्यायविवरणमपि व्याख्यातं भवति। इत्यादेस्तस्यैव कर्तृत्वशक्तिरिति न्यायविवरणानुसारेण स्मृतिमवतार्य व्याचष्टे—**कर्तृत्वशक्तिरिति** ॥ १२ ॥

॥ इति संज्ञाधिकरणम् ॥ १२ ॥

## (१३) ॥ मांसाधिकरणम् ॥

**सू०॥ ओं ॥ मांसादिभौमं यथाशब्दमितरयोश्च ॥ ओं ॥ २२ ॥**

**शरीरकारणविषयेति** । पूर्वाधिकरणे देहादेः कर्तोक्तः । इह तु उपादानं चिन्त्यत इत्यनन्तरसङ्गतिरिति भावः । **किमिति** । अत्र देहः किं पृथिव्याद्येकैकभूतमात्रोपादानकः उत भूतत्रयोपादानक इति चिन्ता। तदर्थं भूतत्रयोपादानकत्वं पृथिवीशरीरमित्यादिश्रुतिविरुद्धं न वेति । तदर्थं पृथिवीमित्यादिश्रुतिः काठिन्यतत्परत्वरूपयुक्तियुक्तत्वेन निरवकाशोत सावकाशेति । तदर्थं देहस्य भूतत्रयात्मकत्वेऽप्याप्यत्वादिश्रुत्यादिकं तत्तद्भूतभागाधिक्येन नोपपद्यत उतोपपद्यत इति । तदर्थं तत्र विशेषप्रमाणं नास्त्युतास्तीति । द्वितीयनिवर्तनीयपरं मिश्रत्वाद्भूतानां मिश्रतायामपि विशेष इति **न्यायविवरणं** योजयति—**शरीरे भूतानामिति** । न्यायविवरणे शेषोक्तिरियम् । अविशेष इत्यस्यार्थो **विशेषोक्त्ययोगादिति** । "अस्थि च भवत्याप अस्रग्वाव तेजो-मज्जाविशेषत" इति प्रमाणानुसारेणाप्तेजसोश्चेति भाष्यं व्याचष्टे—**अप्तेजसो-श्चेति । कार्यमिति** शेषोक्तिः । **इतरावपि पक्षाविति** । यच्छरीरे द्रवं तदेवाप्यं सर्वशरीरम् । यच्छरीरे उष्णं मज्जादि तदेव तैजसं न सर्वशरीरमिति इतरावपि पक्षौ प्रतिषेध्यावित्यर्थः । **तत्तद्भूतविशेषसंयोगापेक्षयेति** । अनेन मिश्रतायामपि विशेषोक्तिरिति **न्यायविवरण**मुक्ततात्पर्यकं भवति। स्वर्गस्थानामित्येतदनुरोधेनाह—**पृथिवीस्थानामित्यर्थ** इति। अत्राद्ये—देहस्य श्रुतिप्रमाणकभूतत्रयात्मकत्वोक्तिः । द्वितीये—बाधकोद्धार इति सूत्रक्रमः ॥ १३ ॥ P 135

॥ इति मांसाधिकरणम् ॥ १३ ॥

---

१ **कर्तृत्वमिति** । "सर्वकर्तृत्वशक्ति" इति "मध्वविलास"पुस्तकपाठः ।

२. **पृथिवीति** । "पृथिवीस्थितानाम्" इति "मध्वविलास"पुस्तकपाठः ।

अत्र पादे आद्यमधिकरणपञ्चकं प्राणरूपैकार्थप्रतिपादकत्वेनैका पेटिका। तत्राद्यत्रयं प्राणोत्पत्तिप्रतिपादकत्वेनावान्तरपेटिका। तत्राद्ये—सर्वप्राणानां द्वितीये-मनसः, तृतीये-वाच उत्पत्तिसमर्थनम्। चतुर्थे-प्राणसङ्ख्यायाः। पञ्चमे-तत्परिमाणस्य विचार इति। उत्तरमधिकरणचतुष्टयं मुख्यप्राणरूपैकार्थप्रतिपादकत्वेनैका पेटिका। तत्राद्ये-तस्योत्पत्तिसमर्थनम्। द्वितीये-स्वातन्त्र्यनिरास.। तृतीये-मुख्यप्राणस्य प्राणादिपञ्चदासवत्त्वस्य प्रतिपादनम्। चतुर्थे—तत्परिमाणविचार इति। प्राणानां ब्रह्मकरणत्वप्रतिपादकतयाद्यपेटिकान्तर्भावनीयस्यापि दशमाधि-[1]करणस्य चक्षुरादिवदित्यधिकरणानन्तरस्यैवोत्थानात् पृथक्करणं युक्तमिति तदेकमेवाधिकरणमेका पेटिका। एवमेकादशाधिकरणस्यापि मुख्यप्राणविचारपरत्वेन [2]द्वितीयपेटिकायामन्तर्भावनीयस्यापि पूर्वाधिकरणमुपजीव्यैवोत्थानमिति तदेकमेवाधिकरणमेका पेटिका। द्वादशत्रयोदशयोः शरीररूपैकार्थप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका। तत्राद्ये—शरीकर्तुः, द्वितीये—तदुपादानस्य विचार इति॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्व-
प्रकाशिकाभावबोधे द्वितीयाध्यायस्य
चतुर्थः पादः॥

॥ द्वितीयोऽध्यायः सम्पूर्णः॥

---

१. दशमेति। Text amended

२. द्वितीयेति। Text reconstructed.

॥ श्रीः ॥

॥ श्री वेदव्यासाय नमः ॥

# ॥ अथ तृतीयोऽध्यायः ॥

## ॥ प्रथमः पादः ॥ १ ॥

### (१) ॥ तदन्तराधिकरणम् ॥

समन्वयाविरोधप्रतिपादनानन्तरं साधनविचारस्यानन्तर्यलक्षणां सङ्गतिं प्रतिपादयितुं भाष्ये अयं तृतीयाध्याय इत्युक्तमित्यभिप्रेत्य —

" समन्वयाविरोधाभ्यां संजाते वस्तुनिर्णये ।
किं मया कार्यमित्येव स्याद्बुद्धिरधिकारिणि ॥ "

इत्यनुव्याख्यानानुसारेण भाष्याभिप्रायमाह—अथातो ब्रह्मजिज्ञासेत्यादिना। अथ ब्रह्मजिज्ञासापदाभ्यामिति। अधिकारानन्तर्यार्थका "थ" शब्देन P. 137
तद्विशेषणतया वैराग्यभक्त्यादेः ब्रह्मजिज्ञासापदेनापरोक्षज्ञानजनकश्रवणादिरूपोपासनायाश्च प्रतिपादनमिति मोक्षसाधनज्ञानस्य पदद्वयेन प्रतिपादनादिति भावः ।

[1]वैराग्यतो भक्तिदार्ढ्यं तेनोपासा यदा भवेत् ।
आपरोक्ष्यं ततो विष्णोरिति पादक्रमो भवेत् ॥

---

१. **वैराग्यत इति।** अस्य साधनाध्याय इति नाम। प्रथमे समन्वयाख्ये भगवान् विष्णुरेव सकलजगज्जन्मादिनिमित्तकारण संसारबन्धनिवृत्तिलक्षणमोक्षस्य सर्वपुरुषार्थमूर्धाभिषिक्तस्य लाभाय भजनीय इति समर्थितम् ।

तत्कथम् ? प्रथमाध्यायसमर्थितोऽर्थश्चतुर्विधविरोधाभिभूतो दृश्यते। विरोधपरिहारमन्तरा समुद्दिष्टार्थसिद्धिर्न भवेदिति चतुर्विधविरोधपरिहाराय प्रयतितव्यम्।

अविरोधाख्ये द्वितीये अध्याये भगवान् बादरायण समावितसमस्तविरोधजातं पर्यहार्षीत् ।

उपास्यवस्तुनिर्णयो जात । तन्निर्णयसम्बन्धिनो विरोधाश्च निरस्ताः ।

इत्यनुव्याख्यानं मनसि निधाय प्रथमपाद इति भाष्याभिप्रायमाह—भगवत्प्रसाद—इत्यादिना ॥

## सू०॥ ओं ॥ तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ ओं १ ॥

**भूतावियोगसमर्थनादिति ।** पूर्वसूत्रे येषा भूताना वैशेष्येण विशेष व्यवहार समर्थित, तेषामत्र सपरिष्वक्त इति जीवावियोगसमर्थनादनन्तर सङ्गतिरिति भाव। यद्वा पूर्वाधिकरणे प्रकृतशरीरस्य "तदन्तरे"ति "त"च्छब्देन परामर्शाद्वानन्तरसङ्गतिर्द्रष्टव्या । **मुमुक्षुणेति** ॥ अत्र जिज्ञासासूत्रोक्तवैराग्यादिकमननुष्ठेयमुतानुष्ठेयमिति चिन्ता। तदर्थं प्रसिद्धमरणस्यमोक्षत्व युक्तमयुक्त वेति।

---

तदनन्तरमुपास्यब्रह्मसाक्षात्कार सपादनीय । तदर्थं विहिताना साधनानामनुष्ठान कार्यम् ।

तस्मात् सयमन्वयाऽविरोधसाधनानन्तरमनुपदमेव साधनविचार प्रतिपाद्यतेऽस्मिन्नध्याये ।

वैराग्य विना भक्तिर्नोपजायते । भक्तिं विना नोपासना साध्या । उपासना विना भगवत्साक्षात्कारो न भवेत् ।

एव च प्रथम वराग्यम्, वैराग्यात् भक्तिराविर्भवति । भक्तिसाध्या उपासना। उपासनासाध्यो भगवत्साक्षात्कार ।

तथा चास्याध्यायस्य प्रथमे पादे वराग्यनिरूपणम्, द्वितीये भक्तिस्वरूपादिविवेचनम्, तृतीये भगवदुपासनाप्रकारादिप्रपञ्चन, चतुर्थ भगवत्साक्षात्कारसमर्थनमिति क्रमो वेदितव्य ।

मायाशबलसगुणब्रह्मावलम्बनेन सर्वस्यास्य समर्थन कथ निर्विशेषब्रह्मवादिभि क्रियत इति विचारणीय भवति ।

आत्मैव ब्रह्मेति किं केन प्राप्यताम्? साधनानुष्ठान च किमर्थम्? प्राप्यप्रयोजनाभावात् ।

१ **अत्रेति।** जिज्ञासासूत्र एव वैराग्यस्यावश्यकता समर्थिता। अधिकारसमर्थनावसरे वैराग्यमन्तरा जिज्ञासायमेव प्रवृत्त्यनुदयादित्यधिकारवैराग्ययोरविनाभाव प्रदर्शित इति ज्ञेयम् ।

तदर्थं प्रसिद्धमरणे जीवस्य भूतवियोगोऽस्त्युत नास्तीति । तदर्थं भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति । **नियतत्वादिति ।** अनेन स्वाभाविकं मरण- P. 13 मेव मुक्तिरिति **न्यायविवरण**गतस्वाभाविकपदतात्पर्यमुक्तं भवति । " मुक्ति-साधनत्वेन ज्ञानादिगुणाधिक्योपदेशात् " इति **न्यायविवरणं** व्याचष्टे—**आत्मा चेति** ॥ " भूतविमोचनस्य मोक्षत्वेऽपि " इत्यादिना " भूतवियोगस्यैवाभावात् " इत्यन्तेन शरीरान्तरप्रतिपत्तौ भूतपरिष्वक्त एव गच्छतीति भाष्यस्य मरणे भूतवियोगस्यैवाभावादिति **न्यायविवरणस्य** च हेतुहेतुमद्भावापन्नार्थप्रतिपादकतयार्थ उक्तो भवति । **शरीरान्तरप्राप्त्यर्थत्वादिति ।** अनेन सूत्रे "त" च्छब्दः पूर्वाधिकरणप्राप्तशरीरपरामर्शकः । सप्तमी च तादर्थ्ये इत्युक्तं भवति । **अद्भिः संपरिष्वक्त इति ।** अनेनापामेव पुरुषनामवत्त्वाभावाच्छ्रुतावप् शब्दो तद्युक्त-जीवोपलक्षक इत्युक्तं भवति । स्पष्टं चात्र **न्यायविवरणो**दाहृतप्रमाणमाह—**भूतयुक्त इति** ॥ १ ॥

॥ इति तदन्तराधिकरणम् ॥ १ ॥

---

## (२) ॥ त्र्यात्मकत्वाधिकरणम् ॥

## सू० ॥ ओं ॥ त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ओं ॥ २ ॥

**[1]समस्तभूतपरिष्वक्तस्येति ॥** पूर्वाधिकरणे भूतपरिष्वक्त इति सामान्यतो भूतपरिष्वङ्गोक्त्यावेव समस्तभूतपरिष्वङ्गविचारोत्थानादनन्तरसङ्गतिरिति भावः । अत्र किं सर्वाणीति भूतानि जीवेन सह न गच्छन्त्युत गच्छन्तीति चिन्ता । तदर्थं प्रश्नव्याख्यानयोराप इत्युक्तिरयुक्तोत युक्तेति । तदर्थमपामप्मात्ररूपत्वमुत भूतत्रयात्मकत्वमिति । तदर्थं भूतत्रयात्मकास्वप्सु अप्शब्दप्रयोगो न युज्यत उत युज्यत इति । " इति पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इत्यत्र भूतानीति सामान्यनामानुक्त्वा आप इति विशेषनामकथनादपामेव सहगतिरिति **न्यायविवरणं** मनसि निधाय पूर्वपक्षमाह— **आप एवेति ।** अनेनापामेव

---

1. **समस्तेति ।** समस्तभूतसंपरिष्वक्तस्येति " मध्वविलास " पुस्तकपाठ ।

सहगतिरिति साध्यप्रतिपादकांशो व्याख्यातः। सर्वाणीत्यनेनैवकारव्यावृत्त्यांशकथनम्। "आप" इत्यनेन तु "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती"त्यत्राप इति विशेषनामकथनादित्येतद्व्याख्यातम्। अन्यथेत्यनेन भूतानीति सामान्यनामानुक्त्वेत्यस्य तात्पर्यमुक्तं भवति। **अपां क्षितिसलिलानलात्मत्वेनेति**[2]। अनेन त्र्यात्मकत्वादपामर्थतः सर्वभूतानां गतिप्राप्तिरिति **न्यायविवरणमुक्तार्थं** भवति। अपामिति विशिष्योक्तिस्वारस्यादाह—**नन्वपामिति**। अध्यायान्त इति।

"पार्थिवानां शरीराणामर्धेन पृथिवी स्मृता"।

इत्यादिप्रमाणानुसारेण पार्थिवशरीरे पृथिव्या भागचतुष्टयमपां भागत्रयं तेजस एको भागः। स्वर्गस्थतैजसशरीरेतेजसो भागचतुष्टयम् अपां भागत्रयं पृथिव्या एको भाग.। आप्यशरीरे अपां भागचतुष्टयं पृथिव्या भागत्रयं तेजस एको भाग इति कथनेन त्रिविधशरीरेषु संभूयापां भागदशकं पृथिव्या भगाष्टकं तेजसो भागषट्कसिद्धेरित्यर्थ.॥ २॥

॥ इति त्र्यात्मकत्वाधिकरणम्॥ २॥

---

## (३)॥ प्राणगत्यधिकरणम्॥

## सू० ॥ ओं ॥ प्राणगतेश्च ॥ ओं ॥ ३ ॥

**अत्र पुनरिति**। आर्थिककल्पनायां कृतायामेव तन्मूलभूतविशेषप्रमाणजिज्ञासोदयादनन्तरसङ्गतिरिति भावः। **किं जीवेनेति**। अत्र भूतानां जीवेन सह गतिर्नास्त्युतास्तीति चिन्ता। तदर्थं प्रश्नव्याख्यानयोः प्रतीतानामपां गमनेन सर्वभूतानि गच्छन्तीत्यार्थिककल्पनायां विशेषप्रमाणं नास्त्युतास्तीति। तदर्थं भूतानां प्राणैरविनाभावो नास्त्युतास्तीति। एवं च भूतानां प्राणैरविना-

---

१. **सर्वाणीति**। वस्तुतस्तु सर्वभूतपरिष्वक्त एव जीवो गच्छति परलोकमिति विभावनीयम्।

२. **आत्मत्वेनेति**। आत्मकत्वेनेति "मध्वविलास" पुस्तकपाठः।

भावाभावे तत्सहगन्तृप्राणाविनाभूतत्वरूपहेतोरसिद्धया विशेषप्रमाणाभावान्निर्मूलकार्थिककल्पनाया अयोगेन सर्वभूतानां जीवेन न सहगतिरिति पूर्वपक्षे, अविनाभावसत्त्वे उक्तहेतुसिद्धावुपपत्तिरूपविशेषप्रमाणमूलकार्थिककल्पनाया युक्तत्वात् सर्वभूतानां जीवेन सहगतिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः। **नगच्छन्तीति**। अनेन तदभाव इति **न्यायविवरणांशो** व्याख्यातः। **भूतानीति**। अनेन भूतानि गच्छन्तीति सहैवानुक्तेरिति **न्यायविवरणांशो** व्याख्यातः। **तयोरपीति**। अनेन तयोरपीति शेषपूरणेन पूर्वोदाहृत एव **न्यायविवरण**भागः प्रकारान्तरेण व्याख्यातः। ननु पूर्वाधिकरणे सहगमने तासा व्याप्तत्वेन भूतानामपि सहगमनसिद्धिरित्युक्तत्वात् कथमनुक्तिरित्यत आह **आर्थिककल्पनाया** इति। नन्वत्र

"भूतयुक्तः परं लोकमिमं लोकं च गच्छति"

इति विशेषप्रमाणस्योक्तत्वात् कथमेतच्छङ्कावकाश इति चेत्, न; सूत्रकारेण[1] तस्यानुक्तत्वात्। भाष्यकारैस्तु शिष्यहितैषणया **न्यायविवरणे** तदुदाहृतमिति। अनुमानं दर्शयितुं हेतुसिद्ध्यर्थमाह—**अस्तीति**। अतः प्राणगतेरित्यनेन प्राणगतेरुपपत्तेः उक्तत्वादिति **न्यायविवरणं** व्याख्यातं भवति॥

ननु प्राणगतिरित्यनेन तत्सहगन्तृप्राणेत्यस्य विशेषणस्योक्तत्वेऽपि तदविनाभूतत्वरूपं विशेष्यं नोक्तमित्यत आह—**चशब्द इति**॥ ३॥ P 139

॥ इति प्राणगत्यधिकरणम् ॥ ३॥

---

1. **सूत्रकारेणेति**। अल्पाक्षरत्वादिनियमघटितसूत्रकारेण तत्तदर्थसाधकप्रमाणवाक्यानां कण्ठत उदाहरणस्य कर्तुमशक्यत्वात्। भाष्य एव तदुदाहरणं न्याय्यमिति भावः।

## (४) ॥ अग्न्यादिगत्यधिकरणम् ॥

### सू०॥ ओं ॥ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ओं ॥ ४ ॥

**प्राणगत्येति** । तथा च पूर्वोक्तप्राणगतिसमर्थनादनन्तरसङ्गतिरिति भावः । **जीवेन सहेति** । अत्र प्राणानां जीवेन सहगतिर्नास्त्युतास्तीति चिन्ता । तदर्थ- "अग्निं वागप्येती"त्यादिश्रुतिः कार्त्स्न्येन प्राणानामग्न्यादीन् प्रति गतिं प्रतिपादयति उत भागत इति । **यत्रास्येति** । भाष्यव्याख्यानपरेणानेनाग्निं वागप्येतीत्यन्यथोक्तेः प्राणानां च न सहगतिरिति न्यायविवरणमप्युक्तार्थं भवति । **प्राणानां भागेनेति** । अनेन प्राणानां द्विरूपत्वादिति **न्यायविरणं** व्याख्यातं भवति । **अनेनेति** । भूतनिवृत्तिर्नामाग्न्यादिमूलरूपाणि प्रतिगच्छद्भिः प्राणभागैः सह भूतानामेव गमनम् ; न तु सर्वेषां भूतानाम् । तत्संप्रयोगो नाम पुनस्तैः सह तेषां शरीरे प्रवेश एवेति व्याख्यातं भवतीत्यर्थः ॥ ४ ॥

॥ इति अग्न्यादिगत्यधिकरणम् ॥ ४ ॥

---

## (५) ॥ प्रथमेश्रवणाधिकरणम् ॥

### सू०॥ ओं ॥ प्रथमे श्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ओं ॥ ५ ॥

**अत्र पुनरिति** । "व्यात्मकत्वादि"त्युक्ताधिकरणकल्पनायाः कल्पनामूल- भूतविशेषप्रमाणं विना स्वरूपं न निर्वहतीति "प्राणगतेश्चे"त्याद्यधिकरणद्वयेन स्वरूपनिर्वाहकोपपत्तिरूपविशेषप्रमाणोऽस्त्यनन्तरमवसरप्राप्तमव्याप्तिरूपं कल्पकं विचार्यत इत्यनन्तरसङ्गतिरिति भाव । **किं जीवेनेति** । अत्र भूतानां जीवेन सहगमनं नास्त्युतास्तीति चिन्ता । तदर्थमुपपत्तिमूलकनयोक्तं भूतगमनकल्पकमपां

---

१. **अत्रेति** । जीवेन सह गमनाभावान्मरणमेव मोक्ष इति व्यर्थं साधनप्रदर्शनमिति पूर्वपक्षाभिप्राय. ।

जीवेन सहगमनं नास्त्युतास्तीति । तदर्थमुपक्रमे[1] श्रुतः श्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणाबाद्युपलक्षक इति । तदर्थमुपक्रमादुपसंहारो दुर्बलः प्रबलो वेति । एवं चा"पः पुरुषवचस" इत्युपसंहारस्य दौर्बल्ये बाधकाभावेनोपक्रमगतश्रद्धाशब्दस्य स्वार्थमात्रपरत्वे अव्गत्यसिद्धौ कल्पकाभावेन भूतगत्यसिद्धिरिति पूर्वपक्षे उपसंहारस्याधिक्ये तदनुसारेणोपक्रमगत श्रद्धाशब्दस्याब्लक्षकतयाऽपां जीवेन सहगतिरूपकल्पकसिद्धौ भूतगतिसिद्धिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्यः । **न जीवेनेति ।** एतेन भूतानामसहगतिरिति न्यायविवरणगतसाध्यप्रतिपादकांशो व्याख्यातः । **प्रथमाग्नौ होमश्रवणादिति ।** अनेन "प्रथमे श्रवणात्" इति सूत्रांशः अकारप्रश्लेषं विना प्रथमाग्नौ श्रूयत इति भाष्येण व्याख्यात इत्युक्तं भवति । **भूतानामपीति ।** न भूतानि जुह्वतीति भाष्यव्याख्यानपरेणानेन प्रथमतो न भूतानि जुह्वतीति विशेषानुक्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति । **तथोक्तिप्रसङ्गादित्यनेन** प्रथमे श्रवणादिति सूत्रांश अकारप्रश्लेषेण प्रथमे उपक्रमे तथा प्रथमे अग्नौ भूतानि जुह्वतीति विशेषश्रवणादिति न भूतानि जुह्वतीति भाष्येण विशेषानुक्तेरिति न्यायविवरणेन च व्याख्यात इत्युक्तं भवति । अत एव वक्ष्यति—**प्रथमाग्नौ भूतसहितस्य होमाश्रवणादिति ॥**

नन्वश्रवणमात्रस्य "प्राणगतेः" इत्युक्तयुक्तिबाधकस्यायोगात् कथम् "प्राणगतेश्च" इत्येतदनन्तरमेतदधिकरणोत्थानमिति चेत्, न ; यस्यामार्थिककल्पनायां प्राणगतिरूपोपपत्तिर्मूलत्वेनोच्यते, सानुपपन्ना ; प्रथमे श्रवणे नावादिरूपं कल्पकासिद्धेरित्याक्षेपसमाधानार्थस्यास्य तदनन्तरमप्युत्थानसंभवादिति । नन्वपां श्रद्धारूपत्वाभावात् कथं श्रद्धारूपेणेत्युक्तमित्यतः श्रद्धाशब्दस्यापि ता एवार्थ इति न्यायविवरणं मनसि निधाय तदर्थमाह—**श्रद्धाशब्दार्थरूपतयेति ॥** ननु श्रद्धाशब्दस्याप्सु योगरूढयोरभावात् कथं तदर्थत्वमित्यत आह—**अयं खल्विति ।**

---

१. **उपक्रम इति ।** उपक्रमस्य प्रथमोपस्थितत्वेऽपि, उपक्रमोपसंहारयोः संभूयैकवाक्यतानिर्णयस्यावश्यंभावादुपसंहारानुसारेणैवोपक्रमस्यार्थनिर्णयो भवेदिति ज्ञातव्यम् ।

२. **अकारेति ।** अकारप्रश्लेषं विना तत्प्रश्लेषेण चेति वर्णनमर्थद्वयस्य कृतमिति ज्ञेयम् ।

यथा श्रद्धामात्रस्य होम्यत्वाभावात् श्रद्धाशब्दस्य तन्मात्रार्थत्वानुपपत्त्या श्रद्धायुक्त-जीवोपलक्षकत्व तयोपसहारान्यथानुपपत्त्यावुपलक्षकत्वमप्यङ्गीकार्यमिति भाव । **उपसंहार** इति । अनेनोपसहारोपपत्तेरिति भाष्यव्याख्यानपरेण भूतानि जुहुती-त्युपक्रमादपि " इति तु पञ्चम्यामाहुतावाप पुरुषवचसो भवन्ति " इत्युपस-हारस्याधिक्यात्तदनुसारेणोपक्रमोक्तश्रद्धाशब्दस्यापि ता एवार्थ इत्युपपत्तेरिति **न्यायविवरण**मप्युक्तार्थ(तात्पर्य) भवति । **अन्यथा विरोधेने**त्यनेनोप-क्रमविरोधेनोपसहारानुपपत्तेरुपक्रमप्रामाण्यार्थमेवोपसहारानुसारित्वमङ्गीकर्तव्यमिति **न्यायविवरणं** व्याख्यात भवति ॥

ननु स्यादियमुपसहारानुसारेणोपक्रमार्थकल्पना । यद्युपसहारेऽपा जीवेन सहगतिश्रवणमेव स्यात् । न चैवम् । आप इति सामान्योक्तेरागमनमात्र विषयत्वोपपत्तेरित्याशङ्क्य प्रतिषेधति—**न चेति** । कुत इत्यत आह—**भूतानीति** । यद्युपसहारस्य आगमनमात्रविषयत्व तर्हि मरणानन्तर भूताना जीवेन सहगमना भावसिद्ध्यर्थमुत्क्रान्तो भूतानि त्यजतीति वक्तव्य स्यात् । आगमनकाले जीवस्याद्भि साहित्यसिद्ध्यर्थ तस्या आहुते " सोमो राजा सभवति । वर्ष सभवति । अन्नं सभवति । रेत सभवति " इति वत् आप [2]सभवन्तीत्यपि वक्तव्य स्यात् । न चैवमुक्तिरस्ति । तथाचाप्राप्तस्यानुवादायोगादाप इत्यनुवाद-बलान्मरणानन्तर सहगतानामेवापा पुनरागमनमिति ज्ञायत इति भाव ॥

ननु रेत सभवतीत्यत्र रेत शब्दस्यापदत्वसभवेनापा प्रकृतत्वादाप इत्यनुवादोपपत्तिरिति चेत्, न, तस्याहुते रेत सभवतीति रेतसोऽन्नकार्य-त्वोक्ते । न ह्यपामन्नकार्यत्वमस्ति । एव चेत्यनेन प्रकरणे रेतोरूपाया पञ्चम्या-माहुतौ योषाग्नौ हुताया मरणानन्तर जीवेन सहागता पुन भूतत्रयात्मिका आप

---

१ **उपसहार इति** । उपसहारानुसारेणैवार्थनिर्णय कर्तव्य इति भाव । निपुणतममुपपादितोऽय सिद्धान्तो **विजयीन्द्रगुरुपादावरचिते उपसहारविजये** ।

२ **सभवन्तीति** । भवन्तीति "मध्वविलास"पुस्तकपाठ । सोमो राजा सभवतीति वर्तते । तदनुसारेण " सभवन्तीति " स्यादपि ।

पुरुषवचसो भवन्तीत्यर्थ सपद्यत इति ज्ञातव्यम्। व्याख्यानस्य पश्चात्तनत्व-नियमादिति न्यायविवरण व्याख्यातु तन्निवर्तनीयामाशङ्कामाह—तथापीति। वैपरीत्यस्यापि सभवादिति भाव । उदाहृतन्यायविवरणाभिप्रायमाह—उप-सहारस्येत्यादिना। उपक्रमानुसारित्वनियमेऽप्युपसहारस्योपसहारेणैवोपक्रमार्थो ज्ञायत इति न्यायविवरण व्याख्याति—न च वाच्यमिति ॥ ५ ॥

॥ इति प्रथमेश्रवणाधिकरणम् ॥ ५ ॥

---

## (६) ॥ अश्रुतत्वाधिकरणम् ॥

### सू० ॥ ओं ॥ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ओं ॥ ६ ॥

अत्र पुनरिति। मूलभूतोपपत्तिरूपविशेषप्रमाणसहितार्थिककल्पनाक्षेप-समाधानादनन्तरसङ्गतिरिति भाव । जीवेन सहेति। अत्र भूताना जीवेन सहगतिर्नास्त्युतास्तीति चिन्ता। तदर्थं प्राणगतिरूपोपपत्त्युपोद्बलितमार्थिक-श्रवणमसाधक साधक वेति। तदर्थं भूतानि जीवेन सह गच्छन्तीति विशेषत साक्षाच्छ्रवणं नास्त्युतास्तीति ॥

ननु "तदन्तरप्रतिपत्तौ" इत्यनेनैव भूताना जीवेन सहगते समर्थित-त्वेन *भूतानि गच्छन्ति न वेति सन्देहस्यैवानुदयात् कथमेषामधिकरणानामुत्था-*नमित्यत आह—पृथक् पृथग्विचारत्वादिति। अय भाव —अत्राद्येऽधि- P 140
करणे भूतसपरिष्वक्तो रहतीति प्रतिज्ञाय तत्र प्रमाणत्वेनोदाहृतयो प्रश्ननिरूप-

---

१ व्यादयानस्येति। प्रथमोपस्थित व्याख्येयम्। चरमोपस्थित व्याख्यानमिति नियम । तथा च सदिग्धार्थत्वे सति प्रथमोपस्थित व्याख्येयमिति विजयीन्द्रगुरुपादा उपसहारविजये। मीमासकाभिमतोपक्रमप्राबल्यस्य तथैव "उपक्रमपराक्रमे" प्रति पादितस्यार्थस्य खण्डन व्यासराजतीर्थविरचिते तर्कताण्डवे विजयीन्द्रविरचिते उपसहारविजये च द्रष्टव्यम्।

२ नन्विति। पृथगधिकरणारम्भप्रयोजनमिमति शङ्कते।

णयोरप्शब्दस्यैव श्रवणात् कथं ताभ्यां सकलभूतानां जीवेन सहगतिसिद्धिरित्याशङ्कानिरासाय तयोः श्रूयमाणाप्शब्दः किमम्मात्रपर उत सकलभूतपर इति संदेहे नायमप्शब्दोऽम्मात्रपरः ; किं त्वपां त्र्यात्मकत्वात् सकलभूतपरः । अप्शब्दप्रयोगाय भूयस्त्वनिमित्तत्वादिति प्रवृत्तस्य द्वितीयाधिकरणस्य पृथग्विचारपरत्वम् । नन्वपां त्र्यात्मकत्वेन तासां जीवेन सहगत्या सकलभूतानां सहगतिकल्पना तदा भवेत्, यदि भूतानां जीवेन सहगतौ विशेषप्रमाणं स्यात् । आर्थिककल्पनाया विशेषप्रमाणानुरोधित्वादित्याशङ्कानिरासाय किमार्थिककल्पनामूलभूतविशेषप्रमाणमस्ति न वेति सन्देहे न विशेषप्रमाणाभावः, किं तु भूतानि जीवेन सह गच्छन्ति ; तत्सहगन्तृप्रमाणाविनाभूतत्वादित्युपपत्तिरूपविशेषप्रमाणमस्ति[1] । ततश्च निर्णयोपपत्तिरिति प्रवृत्तस्य तृतीयाधिणरणस्य पृथग्विचारपरत्वम् ॥

नन्वेवं सत्येतदुपपत्तिबलादेव प्रश्नव्याख्यानगताप्शब्दस्य सकलभूतपरत्वसंभवे द्वितीयाधिकरणं व्यर्थमिति चेत्, न ; उपपत्तिबलादपि संभावितमेव कल्पनीयमित्यपां त्र्यात्मकत्वभूयस्त्वाभ्यामप्शब्दस्य सकलभूतपरत्वसंभावकतया तत्सार्थक्योपपत्तेरिति । ननु "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येती"त्यादिश्रुत्या वागादिप्राणानां स्वमूलरूपाग्न्यादीन् प्रति गमनप्रतीत्या जीवेन सह गत्यभावात्तत्सहगन्तृमाणाविनाभूतत्वरूपहेतुरसिद्ध इत्याशङ्कानिरासाय प्रवृत्तस्य चतुर्थाधिकरणस्य स्पष्टं पृत्रग्विचारपरत्वम् । ननूक्तोपपत्तिबलादपि भूतत्रयात्मिकानामपां जीवेन सहगत्याऽर्थात् सकसभूतानामपि सहगमनमिति कल्पना तदा स्यात्, यद्यपामेव जीवेन सहगतिः स्यात् । नैतदस्ति । "तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति" इत्युपक्रमे प्रथमाग्नौ होम्यतयापामश्रवणादिति शङ्कानिरासायोपक्रमगतश्रद्धाशब्दः किं स्वार्थमात्रपर उतोपसंहारानुसारेणापामप्युपलक्षक इति सन्देहे न स्वार्थमात्रपरः ; किं तूपसंहारमात्रस्योपक्रमव्याख्यानपरत्वेन प्राबल्यात तदनुसारेणोपक्रमस्य नेतव्यत्वात्तद्गतश्रद्धाशब्दस्यापामुपलक्षकत्वमप्यस्तीति प्रतिपादयितुं प्रवृत्तस्य पञ्चमाधिकरणस्य पृथग्विचारपरत्वम् । ननूक्तोपपत्त्यार्थि-

---

१. अस्तीति । विशेषप्रमाणसद्भावेन पृथगधिकरणारम्भः सप्रयोजनक इति भावः । विशेषप्रमाणमनुमानमिति वेदितव्यम् ।

फकल्पनाभ्यां सर्वभूतानां जीवेन सहगतिर्नसिद्ध्यति । "अग्निं वागप्येति" इति वत् " भूतानि जीवेन स गच्छन्ति" इति विशेषरूपप्रत्यक्षश्रुत्यभावादित्या शङ्कानिरासाय भूतानां जीवेन सह गमनस्य प्रतिपादिकाश्रुतिर्नास्त्युतास्तीति सन्देहे न नास्ति ; किं त्वस्ति । "अथैनं यजमानं किं न जहाति भूतान्येव भूतैरवगच्छन्ति" इति विशेषश्रुते प्रत्यक्षत श्रवणादिति प्रतिपादयितुं प्रवृत्तस्य षष्ठाधिकरणस्य पृथग्विचारपरत्वमिति ॥

नन्वेवं सन्देहादिभेदेनैषामधिकरणानां पृथक्पृथग्विचारपरत्वे "अग्न्यादिगतिश्रुते." इत्यधिकरणव्यतिरिक्तेषु चतुर्ष्वधिकरणेषु भूतानि जीवेन सह गच्छन्ति न वेति सन्देह कथं टीकायामेव प्रदर्शित इति चेत्, सत्यम् । अपामेव सहगति. भूतानि सहगच्छन्तीति सहैवानुक्तेस्तदभावो भूतानामसहगतिरिति **न्यायविवरणानुसारेण** तस्या मूलसन्देहप्रदर्शनपरत्वादिति ज्ञातव्यम् । अतीताधिकरणेषु प्रथमद्वितीयपञ्चमैर्भूताना जीवेन सहगतावार्थिकश्रवणं युक्तितयोक्तम् । तृतीयचतुर्थाभ्या प्राणगतिस्तत्र युक्तितयोक्ता । तदुभयोपमर्दनेनेहाधिकरणे पूर्वपक्षोऽभिप्रेत इत्याह—**न च वाच्यमिति । न्यायविवरणानु**सारेणार्थिकश्रवणोपमर्दनायापामित्युक्तम् । अग्न्यादिगतिरिति भाष्यानुसारेण प्राणगत्युपमर्दनाय प्राणाना चेत्युक्तमिति ज्ञेयम् । भाष्यगतप्रत्यक्षपदाभिप्रायमाह—**साक्षादिति** । विशेषाश्रवणनियम एव बलवानिति **न्यायविरणा**भिप्रायमाह—**आर्थिकश्रवणादिति** ॥

ननु प्राणगतिरूपोपपत्तिमूलकत्वेनार्थिकश्रवणमपि बलवदित्यत आह— **सति हीति-वैदिक इत्यनेन** प्रत्यक्षामूलकत्वमुक्तम् । तथा चोपाधिप्रतिपक्षनिरासकप्रत्यक्षागममूलकत्वाभावादुपपत्तिरपि न साधिकेत्यर्थ अग्न्यादिग-

---

१. **प्रत्यक्षेनि** । स्पष्टश्रुतिरिति यावत् । श्रुतौ स्पष्टत्व च, अभिमतार्थप्रतिपादनानुकूलशब्दघटितत्वमिति द्रष्टव्यम् ।

२ **नन्विति** । पृथक् पृथक् सन्देहप्रदर्शनेनाधिकरणाना पृथक् पृथक विचारपरत्वे अधिकरणचतुष्टये कथमेकस्यैव संशयस्य निरूपणमिति शङ्काभिप्राय ।

तिरित्यादिभाष्यस्य यथा खल्वित्यादिव्याख्यानमुपपादयति—**अतःशब्द इत्यादिना । उभयार्थे चेति** । एकत्रोच्चारणे उभयार्थे इत्यर्थः । अक्षादिशब्दवन्नानार्थत्वस्य पूर्वार्धेनैव सिद्धत्वात् । एतावन्मात्रस्यैव प्रकृतोपयोगेऽप्यतःशब्दस्योत्तरार्धेऽश्रवणात् पूर्वार्धोदाहरणमिति द्रष्टव्यम् । आर्थिकश्रवणमप्यनुक्तिं बाधत एवेति **न्यायविवरणोक्तां** युक्तिमाह—**आर्थिकश्रवणस्यापीति** । यत्किञ्चिद्विशेषवति सामान्याभावसंभवे दृष्टान्तमाह—**न हीति** । प्रत्यक्षागमसमानार्थत्वाभावेऽपि युक्तेर्व्याप्त्यादिग्राहिप्रत्यक्षागममूलकत्वमात्रेण साधकत्वमित्याह—**युक्तेरपीति । तच्चास्तीति** । "यत्र वा व भूतानि तत्र करणानी"ति व्याप्तिग्राहकं "करणैर्वा व न वियुज्यत" इति पक्षधर्मताग्राहकं च प्रमाणमस्तीत्यर्थः । स्थानान्तरश्रवणस्याप्येतदनुरूपत्वादार्थिकश्रवणमप्यनुक्तिं बाधत एव किमुत स्थानान्तरगतं स्पष्टश्रवणमिति कैमुत्यार्थमेव "नेष्टादिकारिणां प्रतीते"रिति परिहारान्तरमुक्तमिति **न्यायविवरणोक्तं** सूत्रसिद्धान्तांशतात्पर्यमाह-**यदा चैवमिति** ॥ ६ ॥

॥ इत्यश्रुतत्वाधिकरणम् ॥ ६ ॥

---

## (७) भाक्ताधिकरणम् ॥

## सू० ॥ ओं ॥ भाक्तं वाऽनात्मवित्त्वात्तथाहि दर्शयति ॥ ओं ॥ ७ ॥

**वैराग्यादेरावश्यकसाधनत्वसमर्थनादिति** । तथा चात्र प्रथमाधिकरणे "संपरिष्वक्त" इत्यनेन न मरणमात्रे भूतवियोगः । किं तु मुक्तिरूप-

---

१. **अत इति** । "अतःशब्दस्तु हेत्वर्थे तथेत्यर्थे च वर्तते ।
उभयार्थे च भवति यथा शब्दविदो विदुः ॥"

इति वचनादिति **टीकाकाराः** ।

श्रुतिगतितात्पर्योक्तवचनमिति **भावदीपकाराः** ।

२. **मुक्तिरूपेति** । प्रतिजन्म मरणं भवति । तन्मरणे न भूतवियोगः । चरमशरीरपरित्यागलक्षणमुक्तिरूपमरण एव भूतवियोग इति विभावनीयम् ।

मरण एवेत्यत्र ज्ञानसदसद्भाव एव नियामक इति यत्सूचितं तदयुक्तम् ; मोक्षस्य कर्मसाध्यत्वोक्तेरिति शङ्कापरिहारादनन्तरसङ्गतिरिति भावः। न चैवं तदानन्तर्यं स्यादिति वाच्यम् ; प्रश्ननिरूपणरूपहेतुसमर्थनपराधिकरणपञ्चकस्यावश्यकत्वेन तदनन्तरमेवावसरप्राप्तत्वादिति भावः। **किं मुमुक्षुणावश्यमनुष्ठेयं न वेति सन्देह** इति। अत्र वैराग्यादि किं मुमुक्षुणा अवश्यमनुष्ठेयमुत नेति चिन्ता। तदर्थं मोक्षः कर्मसाध्यो न वेति। तदर्थम् "अपामसोमम्" इत्याद्यर्थवादैः[1] कर्मणो मोक्षसाधनत्वप्रतिपादक उत नेति। तदर्थममृतशब्दः साक्षात्कर्मसाध्यमोक्षरूपमुख्यार्थपर उत गौण्यादिनार्थान्तरपर इति। **उभयविधसाधनेति**। *यत्र कार्येऽनेकेषां साधनता, तत्रैकैकस्यावश्यानुष्ठेयत्वाभावः। यत्र त्वेकमेव साधनं तस्यावश्यमनुष्ठेयत्वमिति भावः*। कर्मैवैतत्साधनमिति **न्यायविवरणस्याभिप्रायमाह—तद्विनेति**। कुत इत्यत आह—**अपामेति**। अनेन "अपाम सोमममृता अभूम" इति विशेषत एव मोक्षफलस्याप्युक्तेरिति **न्यायविवरणमुक्ततात्पर्यकं** भवति। इत्यादिश्रुतिविरोध इत्यादिभाष्यं **न्यायविवरणैक्वान्यतया** योजयति—**अन्यथेति**॥

नन्वेवमपि[2] कर्मवद्वैराग्यादिसाध्यज्ञानस्यापि मोक्षसाधनत्वाद्यथारुचि तस्याप्यनुष्ठानसंभवान्न वैराग्यादेर्वैयर्थ्यमित्यत आह **अत** इति। **तत्र यद्यस्यामिति**–भागतस्तदमृतत्वमिति *भाष्यव्याख्यानपरेणानेनामृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरिति* **न्यायविवरणं** तावदेकेन प्रकारेण व्याख्यात भवति। **किञ्चित्कालीनमिति**। मन्वन्तराद्यवच्छिन्नकालेषु मरणरहितत्वरूपगुणयोगेनामृता इवामृता इति *गौणार्थतयेत्यर्थः*। **काम्यकर्मिणामनात्मविच्चादिति**। तथा चात्मविद एव हि मुख्यमिति भाष्येण "अनात्मवित्त्वात्" इति सौत्रो हेतुः "भाक्तम्" इत्यत्रैव योजित इति भावः। **तमेवं विद्वानितीति**। अनेन "नान्यः पन्था अयनाय विद्यते" इति **न्यायविवरणमप्युक्तार्थं** भवति

---

१. **अर्थवाद इति**। *अर्थवादस्य स्वार्थे प्रमाण्यं नास्ति। केवलसोमपानेनाऽमृतत्वस्य लाभो न भवेदिति स्पष्टम्*।

२. **नन्विति**। कर्मणो मोक्षसाधनत्वमस्तु, एवमपि वैराग्यादेर्व्यर्थता कथमिति प्रश्नाभिप्रायः।

कुतोऽन्येषा तदभावस्योक्तिरित्यत आह—**काम्यकर्मणेति**। "हि"शब्दो यस्मादित्यर्थे। **मुख्यामृतत्वमिति**। अमृतशब्दस्य मोक्षे योगरूढिलक्षण-मुख्यवृत्ते सद्भावादिति भाव। **कर्मनिर्णयटीकायां** तु तत्साधनज्ञानलक्षणये त्यस्मिन्नेव पक्षे प्रकारान्तरमुक्तमित्यवधेयम्। यद्यमृतपदेन मुख्यामृतत्वमेवोच्यते, तर्ह्यङ्गीकृत कर्मणो मोक्षसाधनत्वमित्यभिप्रेत्य पृच्छति। **किं नामेति** ॥ **तच्चेति**। अनेनामृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरिति **न्यायविवरण** प्रकारान्तरेण व्याख्यात भवति। **तथा हि—वाक्यशेष** इति। तथा चाय श्रुत्यर्थ[१]— सोममपामामृता अभूमेति कर्ममोक्षयो कार्यकारणभाव उक्त। स न साक्षात् किं तु परम्परयेत्युच्यते। अगन्म ज्योतिरिति प्रकाशरूप ब्रह्मागन्म जानीम। ज्योति ज्ञानमगन्म प्राप्नुम इति वा। तत किमित्यत उच्यते—**अविदामेति**। मार्गरूपानर्चिरादि देवानविदाम प्राप्नुम इति। न चैव सत्याद्यान्तिमपक्षयोरेत द्वाक्यशेषविरोधेन कथ पूर्वश्रुतिस्तदर्थपरमिति वाच्यम्, अत्राद्ये पक्षे—कथ कर्मणा स्वर्ग इत्यत उच्यते। अगन्मेति। चन्द्रमस ज्योतिरगन्म मार्गरूपान् धूमादिदेवानविदामेत्यस्य तृतीये च–सोमयागेन (पानेन) कथमानन्दातिशय इत्यत उच्यते—**अगन्मेति**। यत पूर्वं ज्योतिरपरोक्षज्ञानमगन्म ततो देवान् यथायोग्य देवादित्वमविदामेत्यर्थस्य सभवेन तद्विरोधाभावादिति भाव। **आत्मज्ञानलब्ध** इति। तथा च मोक्षलक्षणमुख्यामृतवाचकस्यामृतशब्दस्य तदेकदेशानन्दातिशये लक्षणया प्रवृत्तिरिति भाव। अनेनामृतशब्दस्य यथायोग्यमेवार्थकल्पनोपपत्तेरिति **न्यायविवरण** प्रकारान्तरेण व्याख्यात भवति ॥

ननु यदि कर्मण आनन्दातिशयहेतुत्व तर्ह्यङ्गीकृतमेव मोक्षसाधनत्वम्, तस्यैव मोक्षत्वात्। तद्व्यतिरिक्तस्य कर्मासाध्यस्य ज्ञानमात्रसाध्यस्य मोक्षस्या श्रवणात्। **तथा च न तेन मोक्ष इति**। **आत्मज्ञानलब्धमोक्ष** इति च कथमुक्तमित्यत आह—**सर्वेयेति**[२]। यच्चोक्तम्—

---

१ श्रुत्यर्थ इति। कर्मण परम्परयैव मोक्षसाधनत्वमिति श्रुत्यर्थ इति द्रष्टव्यम्।

२ सर्वेयति। निर्दोषसंसारनिवृत्तिर्न कर्मणा केवलेनेति विभावनीयम्।

" सर्वदु:खनिवृत्तिस्तु ज्ञानिनो निश्चितैव हि ।
उपासया कर्मभिश्च भक्त्याद्यानन्दचित्रता ॥ " इति ।

**इत्यादिश्रुत्यैवेति** । आत्मविदामेव मुख्यामृतत्वमित्यर्थान्तरप्रतिपादनायोदाहृतयैवेत्यर्थः । आदिपदेन तत्त(द)सृजत इत्येतस्य ग्रहणम् । अविदितोऽपि परमात्मा स्वर्गादि भोजयत्येवेत्यतो न भुनक्तीत्येतस्य तात्पर्यमाह– **नामृतत्वमिति** । ननूपासककर्मणो ज्ञानहेतुत्वात् कथमात्मविदपेक्षयेत्यत्रार्थे "आत्मानमेवे"ति श्रुतिः प्रमाणमित्यत आह—**जानाति चेति** । परमात्मन सकाशाद्यद् प्राप्तुमिच्छति तत्सर्वं कर्म स्वयं[1] सृजतीत्यन्यथाप्रतीतिनिरासाय व्याचष्टे– **स मुक्तो यद्यदिति** । "आत्मविदपेक्षया[2] " इति, " भागतस्तदमृतत्वमित्यस्मिन्नर्थः " इति " पारंपर्येणेत्यत्र " इति वाक्यत्रयेण **न्यायविवरणोदा**हृतयोः ' स य आत्मानमेव लोकमुपास्ते " " यावदिन्द्रो यावन्मनु. " इति श्रुत्योरादिपदोपात्तायाः " कर्मणा ज्ञानमातनोति " इत्यादिश्रुतेश्च तत्तदर्थपरत्वमप्युक्तं भवति ॥ ७ ॥

॥ इति भाक्ताधिकरणम् ॥ ७ ॥

---

## (८) ॥ कृतात्ययाधिकरणम् ॥

## सू० ॥ ओं ॥ कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्याम् ॥ ओं ॥ ८ ॥

**अत्रापीति** । पूर्वाधिकरणे " भाक्तम् " इत्यनेन कर्मणो " यावदिन्द्रो यावन्मनु " इत्यादिश्रुत्यनुसारेण पुनरावृत्तिस्वर्गफलकत्वोक्तावेव पुनरागच्छन् P 14

---

१. **स्वयमिति** । अभिलषितपदार्थसर्जने न कर्मणः कथमपि स्वातन्त्र्यं विद्यते । परमात्मप्रसादद्वारा कर्म सृजतीति द्रष्टव्यम् । यतो भगवानेव स्वल्पशेषकर्मफलवितरणादिस्वतन्त्र इति वस्तुतत्त्वम् ।

२. **आत्मविदिति** । मुख्यममृतत्वं आत्मविदामेवेति भावः ।

जीवः किं स्वर्ग एव सर्वं कर्म क्षपयित्वा गच्छति, उत कर्मशेषवानिति जिज्ञासोदयादेतदधिकरणप्रवृत्तिरित्यनन्तरसङ्गतिरिति भावः। **मुमुक्षुणाव-श्यमिति।** अत्र वैराग्यादिकं मुमुक्षुणावश्यमनुष्ठेयमुतानुष्ठेयमिति चिन्ता। तदर्थं स्वर्गादौ सहागतस्य कृत्स्नस्य बन्धककर्मणः किं भोगेन क्षय उत नेति। तदर्थं पुनः कर्म न करोत्युत करोतीति। तथा च पुनः पुनः कर्माकरणे द्वित्रावर्तनेन पूर्वं संपादितस्य सर्वस्यापि कर्मणः स्वर्ग एव भोगेन क्षेप्तुं शक्यत्वात् न मोक्षार्थं वैराग्याद्यनुष्ठेयमिति, पूर्वपक्षे पुनः पुनः कर्मकरणे बहुत्वात्स्वर्ग एव भोगेन क्षेप्तुमशक्यत्वात् तदर्थं वैराग्यादिकमनुष्ठेयमिति, सिद्धान्ते च फलफलि-भावो ज्ञातव्यः ॥

ननु भोगेन कर्मणां क्षयेऽपि बन्धनिवृत्तिलक्षणा मुक्तिः कथमित्यत आह—**कर्मनिबन्धन** इति। अनुशयस्यापि सहभावात् स्वर्ग एव फलदत्वमिति न्यायविवरणं सयोजयितुं तन्निवर्तनीयामाशङ्कां प्रतिषेधति—**न च भोगकाल** इति। इदानीमुदाहृतं **न्यायविवरणं** योजयति—**स्वर्गादिष्विति** ॥

ननु स्वर्गादावपि कर्मान्तरापादनसंभवात् कथं भोगेन सर्वकर्मक्षय इत्यत आह—**तत्रेति।** तस्य भोगमात्रस्थानत्वादिति भावः। **ततः शेषेणेति।** अनेन मुक्तशेषानुशयवानित्यादिवचनाद्यथायोग्यमेव फलदानोपपत्तेरिति न्याय-विवरणमप्युक्ततात्पर्यकं भवति। अत्र आङो मर्यादार्थत्वभ्रमनिरासायाह—**चतुर्दशममिति।** मर्यादार्थत्वस्य "जीवश्चतुर्दशादूर्ध्वम्" इत्यादिप्रमाणविरुद्ध-त्वादिति भाव.। दशभ्योऽवरा इत्यल्पार्थत्वप्रतीतिनिरासार्थमाह—**दशावरा येष्विति** ॥ ८ ॥

॥ इति कृतात्ययाधिकरणम् ॥ ८ ॥

---

१. **किमिति।** "नाऽभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि"।
इत्युक्तरीत्या स्वर्गवासेन सर्वकर्मणा परिक्षीणत्वेन भोक्तव्यकर्मशेषाभावात् संसारोच्छेदो वैराग्यादि विना स्वयमेव भवेदिति पूर्वपक्षाऽभिप्राय ।

२ **चतुर्दशमेति।** "जीवश्चतुर्दशादूर्ध्वं पुरुषो नियमेन तु।
स्त्री वाप्यनूनदशकं देहं मानुषमार्जते ॥"
इति भावदीपे प्रदर्शित प्रमाणम्।

## (९) ॥ यथेताधिकरणम् ॥

## सू० ॥ ओं ॥ यथेतमनेवं च ॥ ओं ॥ ९ ॥

**प्रकृतमागमनमिति।** शेषवानायातीति भाष्योक्तरीत्या "अनुशयवान्" इति पूर्वसूत्रप्रकृतमित्यर्थः। तथा चात्र पूर्वाधिकरणोपक्षिप्त आगमनरूपविषये किं गमनप्रकारेणोतान्यथा वेति प्रकारविचारादनन्तरसङ्गतिरिति भावः। **किमिति।** अत्र स्वर्गादागमनं किं गतिप्रकारेणैवोतान्यथा वेति चिन्ता। तदर्थं "यथेतमागच्छती"ति श्रुतिर्गमनप्रकारेणैवागमनमिति नियमप्रतिपादिकोत क्वाचित्कागमनविषयेति। तदर्थं मार्गस्मरणरूपोपपत्तिरुदाहृतश्रुत्युपोद्वलिका न वेति। मार्गस्य सहभावाद्यथागतमेवागमननियम इति **न्यायविवरणोक्त**युक्तिं श्रुत्युपोद्बलकत्वेनाह—[1]**येन पथेति।** उभयत्र तथाशब्दाध्याहारेण "यथेतमि"ति श्रुतिवाक्यद्वयं व्याख्याति—**यथेति।** सूत्रे हेत्वनुक्तेर्न्यूनत्वमित्याशङ्कापरिहारायाऽनेवं चेत्यंशेनैव प्रतिज्ञाभागसिद्धौ आकाशाच्चन्द्रलोक "यथेतमाकाशमि"ति श्रुतिमनुकुर्वता "यथेतमि"ति सूत्रांशेन विशेषश्रुतिरेव हेतुत्वेनोपात्तेत्यभिप्रेत्य प्रवृत्तं धूमादभ्रमित्यादि भाष्यं व्याचष्टे—**कुत एतदि**त्यादिना। वचनबलाद्यथायोग्यमेवागमनोपपत्तेरिति **न्यायविवरणेन** [2]मार्गस्मरणरूपोपपत्तेर्यदप्रयोजकत्वं सूचितं तदाह—**न च युक्तिविरोध** इत्यादिना ॥ ९ ॥

॥ इति यथेताधिकरणम् ॥ ९ ॥

---

१ **येनेति।** "येन च पथेति," "मध्वविलास"पुस्तकपाठः।

२ **मार्गेति।** आगमने जीवस्य स्वातन्त्र्याभावेन मार्गस्मरणस्याऽकिंचित्करत्वादिति भाव.।

## (१०) ॥ चरणाधिकरणम् ॥

## सू० ॥ ओं ॥ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॥ ओं ॥ १० ॥

**प्रकृत गतागतं विपय** इति। तथा च " यथेतमनेवं च " इत्युक्तगतागतस्य कर्मफलत्वसमर्थनादनन्तरसगतिरिति भाव । [1]**यज्ञादिफलं न वेति** । अत्र गतागतं यज्ञादिकर्मफलं न भवत्युत भवतीति चिन्ता। तदर्थं "रमणीयचरणा" इति श्रुतिगतश्चरणशब्द कर्मपरो न भवत्युत भवतीति। तदर्थम् "अथ य इमे ग्रामा " इत्यादिवाक्यजन्या, गतागतस्य यज्ञादिकर्मफलत्वप्रतीति करणचरणस्वर्गगतागतरूपसाधनफलसहोक्तिनिमित्ता भ्रान्तिरुत प्रमेति । तदर्थं "रमणीयचरणा" इति श्रुतेर्निर्विषयत्वरूपं बाधकमस्त्युत लक्षणादिना कर्मपरत्वेन सविषयत्वाद्बाधकं नास्तीति। तदर्थमुपलक्षकत्वे चरणशब्दस्य वैयर्थ्यं प्राप्नोत्युत नेति। तथा च रमणीयचरणशब्दस्य यज्ञाद्युपलक्षकत्वे रमणीया इत्येतावता पूर्तौ चरणशब्दस्य वैयर्थ्यप्रसङ्गेनोपलक्षणासंभवेन चरणश्रुतेर्निर्विषयत्वरूपबाधकात्; गतागस्य कर्मफलत्वप्रतीते सहोक्तिनिबन्धनभ्रमत्वाच्चरणशब्दस्य कर्मपरत्वाभावेन गतागतस्य कर्मफलत्वमिति पूर्वपक्षे; यज्ञादिकारिणामपि रमणीयकपूयचरणाभ्यामेव रमणीयत्वादिति ज्ञापकतया चरणशब्दस्य सप्रयोजनत्वेनोपलक्षणत्वसंभवात्; चरणश्रुते सविषयत्वेन बाधकाभावात्; गतागतस्य कर्मजन्यत्वप्रतीते प्रमात्वसंभवात्; चरणशब्दस्य कर्मपरत्वेन गतागतस्य कर्मफलत्वमेवेति सिद्धान्ते च फलफलिभावो ज्ञातव्य । [2]**तन्निमित्तानिमित्तयोरपीति** । न केवलमेकस्य निमित्तस्यैवेत्यपेरर्थ । एकस्मिन् देशे काले च पटादिना कार्येण तन्निमित्तानिमित्तयोस्तन्त्वादिरासभादिकयो सहभावदर्शनमित्यर्थ ॥

---

१. यज्ञादीति। "यज्ञादिकर्मफलम्" इति " मध्वविलास "पुस्तकपाठ ।

२ तन्निमित्तेति। यत्किंचित्कार्यत्वावच्छिन्नस्य निमित्तेन सह तदनिमित्तेऽपि वर्तमाने दृष्टे अनिमित्तसहावस्थितिहेतुमूलको भवति संदेहो निमित्तस्य निमित्तत्वे। तथा हि—दण्डपटाभ्यां घट इत्युक्ते, अनिमित्तपटसहभावेन दण्डस्य घट प्रति निमित्तत्वे संदेह इति भावदीपकारा ।

ननु निमित्तानिमित्तयोः सहभावदर्शनस्य सन्देहबीजत्वे साधारणधर्म इत्युक्तं स्यात्। तथा च कर्म गतागतफलकं न वेति सन्देहः स्यान्न तु गतागतं यज्ञादिकर्मफलं न वेति चेत्, न; निमित्तानिमित्तयोः कार्येण सहभावदर्शनोक्त्या कार्यस्यापि निमित्तानिमित्ताभ्यां सहभावदर्शनलाभात्। तथा च फलस्य निमित्तानिमित्तोभयसहभूतत्वदर्शनाद्गतागतरूपं फलं यद्यपि यज्ञादिसहभूतं तथापि तत्फलं न वेति सन्देहो[1] भवतीति भावः। 'सुकृतदुष्कृते एवेति तु बादरिः' इति सूत्रनिवर्तनीयाशङ्काप्रदर्शनार्थं भाष्ये "आचार इति स प्रोक्तः" इति स्मृतिरुदाहृतेत्यभिप्रेत्य तदुदाहरणनिवर्तनीयाशङ्काप्रतिषेधपूर्वकं तदभिप्रायमाह—**न च वाच्यमित्यादिना**। इष्टापूर्ते दत्तमित्युपासत इत्युपशब्देनेष्टादिभिराचारस्य सहपाठाच्चरणफलं पुनरावृत्तिं करणफलत्वेन भ्रमाद्वदन्तीति **न्यायविवरणं** संयोजयितुं तदुपयोगिशङ्कामाह—**अथापि स्यादित्यादिना**। "उपशब्दस्यैवे"-त्यादिना "चरणमेव यज्ञादिसमीपवर्ती 'त्यन्तेनेष्टापूर्ते दत्तमित्युपासत इत्युपशब्देने-त्येतदुक्ततात्पर्यं भवति। **तत्र येयमित्यादिना**। चरणफलं पुनरावृत्तिं कर्मकरणफलत्वेन भ्रमाद्वदन्तीत्येतदुक्ततात्पर्यम्। **सा चेति**। अनेनेष्टादिभिराचारस्य P 14
सहपाठात् भ्रमाद्वदन्तीत्येतदन्वयप्रदर्शनपूर्वकमुक्ततात्पर्यकं भवति। स्वर्गगतागतयोरित्यनेनेष्टादिभिराचारस्य सहपाठादित्युक्तस्य साधनसहोक्तिमात्रस्य गतागतस्य कर्मफलत्वभ्रमजनकत्वायोगात् साधनसहपाठेन यावत्संपातमुषित्वाथैतमेवाध्वानं पुनरावर्तन्त इति स्वर्गेण गतागतस्यापि सहपाठाच्चेति फलसहपाठोऽप्युपलक्षणीय इत्युक्तं भवति। चरणश्रुतेः सविषयत्वं प्रतिपादयता तदुपलक्षणार्थेत्यनेन सूचितम्। भ्रमत्वकल्पकं[2] निर्विषयत्वरूपं बाधकमाह—**चरणश्रुतेरिति**। "नान्यः पन्था" इति **न्यायविवरणां**शनिरसनीयमाह—**कर्मणा पुनरावृत्तिशून्यस्वर्गसिद्धेरिति**॥ चरणशब्दस्याचारमात्रार्थत्वरूपमुख्यार्थानुपपत्तिप्रदर्शनपरत्वेन "नान्यः पन्था" इत्यादिवचनादेवेति **न्यायविवरणं** योजयति—**नान्यः पन्था**

१. **संदेह-इति**। सहभावमात्रदर्शनस्याऽनिर्णायकत्वात्फलं भवति न वेति सन्देहो भवतीति द्रष्टव्यम्।

२. **भ्रमेति**। भ्रमत्वकल्पकसामग्रीसमवधानसत्त्वादिति भावः।

इतीत्यादिना। **गतागतशून्यफलस्य कर्मसाध्यतायानिषिद्धत्वादिति।** कर्मणो गतागतफलकत्वाभावे विहितस्य निष्फलत्वायोगात् परिशेषेण गतागतशून्यफलकत्वमेव सिध्यतीत्यभिप्रेत्यैवमुक्तमिति। नन्वनया श्रुत्या कर्मणो गतागतशून्यफलकत्वाभावसिद्धावपि गतागतफलकत्वं कुत इत्यतो **न्यायविवरण**गतादिपदोपात्ते श्रुतिस्मृती आह—**इष्टापूर्तमिति। तस्या उदाहृतश्रुतिविरोधेनेति।** यज्ञाद्युपलक्षणार्थेति भाष्यव्याख्यानपरेणानेनोभयोरपि चरणशब्देनैवोक्तेर्योग्यत्वादिति **न्यायविवरण**मप्युक्ततात्पर्यकं भवति। "तदपेक्षत्वात्" इत्युत्तरसूत्रांशानुसारेणाजहल्लक्षणयेत्युक्तम्—**एतेनेति।** "नान्यः पन्था." इत्यादिश्रुतिस्मृत्यनुसारेण चरणशब्दस्य कर्मोपलक्षकतया 'रमणीयचरणा" इति श्रुते कर्मणो गतागतफलकत्वप्रतिपादकतया सविषयत्वप्रतिपादनेन निर्विषयत्वाभावादेतच्छ्रुत्यवष्टम्भेन "अथ य इमं" इत्युपक्रमवाक्यस्य "तत्रापि गतागतस्य चरणफलकत्वेनाङ्गीकारात्" इत्यादिना यैदर्थान्तरमुक्तं तदपि निरस्तमिति भावः। **अथ ये यज्ञेनेति।** यद्यप्यत्र "नान्य. पन्थाः" "इष्टापूर्ते" "त्रैविद्यायाम्" इत्यादिश्रुतिस्मृतिविरुद्धं चेत्यपि वक्तुं शक्यम्; तथापि "अथ ये यज्ञेन" इत्यादिश्रुते· "अथ य इमे ग्रामा इष्टापूर्ते दत्तं इत्युपासते" इति श्रुत्या शब्दतोऽपि समाख्यात्वलक्षणविशेषोऽस्तीति ज्ञापयितुं तद्विरोध एव दर्शित। अत एव **न्यायविवरण**गतादिपदोपात्तत्वाविशेषेऽपि अस्या व्यवधानेनात्रोदाहरणमिति ज्ञातव्यम्॥ **यज्ञादिकारिणां प्रकृतत्वेनेति।** "अथ य इमे ग्रामा इष्टापूर्ते दत्तमित्युपासते" इत्युपक्रमवाक्येनेत्यर्थ। अनेनैकप्रकरणप्रतिपाद्यत्वरूप· शक्यसंबन्ध उक्तो भवति। **श्रुत्यादिविरोधस्येति।** "नान्यः पन्थाः" "त्रैविद्याम" इत्यादिश्रुतिस्मृतिविरोधस्येत्यर्थ। **रमणीयकपूयचरणाभ्यामिति।** अनेन लाक्षणिकपदप्रयोगस्याचारस्य कर्मण्यावश्यकाङ्गत्वज्ञापनं प्रयोजनमङ्गाङ्गिभाव शक्यसंबन्ध इत्यपि सूचितं भवति। **यज्ञादिकर्मवाचिनी चेति।** अनेन लक्षणातो वचनवृत्तेर्मुख्यत्वादुत्तरपक्षत्वमस्येत्युक्तं भवति॥

१ गतागतेति। Text restored.

२ तस्या इति। "उदाहृतश्रुत्याद्यनुरोधेनेति" "मध्वविलास"पुस्तकपाठ।

३. यदिति। अर्थान्तरपरिकल्पनमप्रामाणिकमिति भाव।

ननु नानार्थचरणशब्दस्यैकार्थपरत्वे चारितार्थ्ये उभयपरत्वं कुतः कल्पनीयमित्यत आह—साधारणश्रुतेश्चेति । "रमणीयचरणा" इत्यत्र चरणशब्दस्य यद्याचारमात्रार्थत्वं तर्हि "नान्यः पन्था." इत्यादिश्रुतिविरोधः । यदि कर्ममात्रत्वं तर्हि यज्ञादिकृतामप्याचाराद्यधीनरमणीयत्वाद्यसिद्धिरिति बाधकवशात् साङ्गकर्मार्थत्वस्य तन्त्रन्यायेनाङ्गाङ्गिरूपोभयपरत्वस्यैवोपपत्तेरित्यर्थः । तुशब्दादितीति । अनेन परमतमुक्त्वा स्वमतं वक्तव्यमिति सूचनेनाप्यस्य सूत्रस्योत्तरत्वं सूचितम् । अत्राद्ये—"रमणीय" इत्यादिश्रुत्या गतागतस्य चरणफलत्वमाशङ्क्य चरणशब्दस्य मतान्तरेण कर्मोपलक्षकत्वोक्तिः । अत्रोपलक्षणार्थस्यस्योपलक्षणमर्थः प्रयोजनं यस्याः सा तयेति विग्रहः । द्वितीये—लक्षणायां बाधकोद्धारः । तृतीये—मतान्तरेण स्वमतेन श्रौतचरणशब्दस्य कर्मणि मुख्यवृत्तिप्रतिपादनमिति सूत्रक्रमः ॥ १० ॥

॥ इति चरणाधिकरणम् ॥ १० ॥

---

## (११) ॥ अनिष्टाधिकरणम् ॥

### सू०॥ ओं ॥ अनिष्टादिकारिणामपि च श्रुतम् ॥ ओं ॥ १३ ॥

तत्किमिष्टादिकारिणामेवेति । तथा चेष्टादिकारिणा गतागतोक्तावेव किं तेषामेव गतागतम् उतान्येषामपीति सन्देहोत्पादो नान्यथेति एतदधिकरणविचाराङ्गभूतसंशयोत्थापकत्वेन पूर्वाधिकरणस्यैतदधिकरणोपजीव्यत्वादनन्तरसङ्गतिरिति भावः । अत्र गतागतं किमिष्टादिकारिणामेवोत सर्वाज्ञानिनामिति चिन्ता । तदर्थं प्रत्यवायभयफलकामनादिकं गतागतादिदुःखकारणं भवत्युत न भवतीति । तदर्थमनिष्टादिकारिणां गतागतादिदुःखं प्रामाणिकं नमवत्युत

---

१. तर्हीति । Text restored.

२. अनेनेति । परमतोपन्यासानन्तर स्वमतोपन्यास. कर्तव्य इति सूचित भवति । क्वचिद्वैलक्षण्यज्ञापन क्वचित् संवादप्रदर्शनमिति परमतोक्तिप्रयोजन द्रष्टव्यम् ।

३. अत्रेति । उपलक्षणलब्धार्थस्य भिन्नत्वादेवं विग्रह प्रदर्शित इति ज्ञेयम् ।

भवतीति। तथा चानिष्टादिकारिणां गतागतादिदुःखस्य प्रामाणिकत्वाभावे भयकामनादेः दुःखकारणत्वविघटकाभावेन तत्कारणत्वसिद्धौ तद्वतामिष्टादिकारिणामेव गतागतमिति पूर्वपक्षे अनिष्टादिकारिणां गतागतदुःखस्य प्रामाणिकत्वे तत्रैव व्यभिचाराद्भयकामनादेस्तत्राकारणत्वे तद्रहितानामप्यनिष्टादिकारिणां गतागतादिदुःखमिति सिद्धान्ते[1] च फलफलिभावो ज्ञातव्यः। **विशेष्योक्तिरिति।** पूर्वाधिकरणे *गतागतस्येष्टादिकर्मफलत्वोक्तावपि तत्फलमिष्टादिकारिणामेव* भवति। न त्वन्येषां तदकारिणामित्यर्थात् सिद्धमेवेत्यादिभाष्योक्तसाध्ये हेतुप्रतिपादकतया भयफलकामादिमिश्रबुद्धित्वादिष्टादिकारिणां संसार अनिष्टादिकारिणां तदभावान्मुक्तिरिति **न्यायविवरणं** योजयति—**इष्टादिकारिणां प्रत्यवायभयवत्त्वेनेति।** फलकामस्य गतागतकारणत्वे श्रुतिमाह—**कामान् य** इति। यद्यपि पूर्वार्धस्यैवात्रोपयोगः। "स एवे"त्यवधारणाध्याहारेण विवक्षितसिद्धेः। तथाप्यवधारणव्यावर्त्यत्वं नानिष्टादिकारिणाम्। किं तु पर्याप्तकामत्वकृतात्मकत्वादिगुणयोगिनामेवेति वस्तुगतिप्रदर्शनार्थं पर्याप्तकामस्येत्युत्तरार्धोदाहरणमिति ज्ञातव्यम्। **इष्टादिकारिणस्त्विति।** अनेनेष्टादिकारिणां संसार इति **न्यायविवरण**मुक्ततात्पर्यकं भवति। **विधिप्रतिषेधाभ्या**मित्यनेन फलकामादीत्यादिपदार्थकथनम्। **इतरेषां त्वि**त्यनेनानिष्टादिकारिणां[2] मुक्तिरित्येतदुक्ततात्पर्यकं भवति। अत्र "तदभावात्" इत्ययमंश **अन्येषां तदभावादिति। अनिष्टादिकारिणां न हि कामोऽस्तीति नेतर** इति च त्रेधा

। 143 व्याख्यात इति ज्ञातव्यम्। **श्रुतौ श्रुतत्वादिति।** अनेन तेषां दोषश्रुतेरिति **न्यायविवरणांशो** व्याख्यातो भवति॥

नन्वेवं तर्हीष्टानिष्टाद्यकरणे गतागतादिदुःखाभावान्मोक्षसंभवेन किमर्थं वैराग्याद्यापादनमित्यतः सर्वाज्ञानिसंग्रहार्थं नञो विरुद्धार्थत्वमभावार्थत्वं चाभि-

---

१. **सिद्धान्त इति।** गताऽगतादिसम्बन्धिपरमोल्बणदुःखाद्यनुसन्धानेनैव वैराग्यप्राप्तिरिति द्रष्टव्यम्।

२. **कारिणामिति।** अनिष्टकारिणा विधिप्रतिषेधादिपारलौकिकमर्यादातीतत्वाद्गमनागमनरहितो मोक्ष एवेति पूर्वपक्षी मन्यते। आधुनिकविमर्शका अपि केचिदेवमेव प्रत्यवतिष्ठन्ते।

प्रेत्यानिष्टाकारिणामित्येतद्व्याचष्टे—**तदकारिण** इति । इष्टापूर्तायकारिणस्तद्विरुद्धकारिणश्चेत्यर्थः । अपिशब्देनैवेष्टादिकारिसमुच्चयसिद्धेः "च"शब्दः किमर्थमित्यत आह—**चशब्द** इति । **तदेवोत्तरसूत्रे अनूद्यत** इति । विविच्योच्यत इत्यर्थः । **यमशासनमिति** । अनेन सम्यग्यमनं नियमनं शासनमिति यावदिति संयमनशब्दो यौगिकः । सूत्रे "संयमने त्वि"ति सप्तमी-द्वितीयार्थे । अत एव भाष्ये संयमनमित्युक्तमित्युक्तं भवति । **एवंविधगतेः श्रुतिसिद्धत्वादिति** । अनेन प्रबलदोषश्रुतेरिति **न्यायविवरणमप्युक्तार्थं** भवति । **विकल्प इति** । भगवद्द्वेषादियुतानामेवाज्ञानां[1] नित्यनरकपात-लक्षणोऽवरोहः । अन्येषामुत्थानलक्षणारोह इति विकल्प इत्यर्थः । **तुशब्द इतीति** । तथा चानुभूय त्विति संबन्धः सूचित इति भावः ॥

ननु भाष्ये "पञ्चकष्टे तु तत्सदा" इत्येतावता पूर्तावादिपदं किमर्थम् । कथं च, अत्रान्वय इत्यतस्तत्प्रयोजनकथनपूर्वकमित्यादीति कर्म द्वितीयान्तमित्यभिप्रेत्य तस्य सूत्रेणान्वयमाह— **सूत्रे बहुवचनश्रवणादिति** । न्यायविवरणोक्तपूर्वपक्षयुक्तिविरोधमाशङ्क्य तस्या व्यभिचारमाह—**न च भयकामनाद्यभावविरोध** इति—अत्राद्ये अनिष्टादिकारिणामपि विप्रतिपन्ने गतागतादिदु खमात्रे श्रुतिरूपप्रमाणोक्तिः । द्वितीये—यदा तेषां[2] नित्यनरकादिकमप्यस्ति किमु वक्तव्यं गतागतमस्तीति कैमुत्यमभिप्रेत्य न केवलमेतावद्गतागतादिमात्रम् । किं त्वधिकमप्यनिष्टमस्तीति सप्रमाणकं तदुक्ति । तृतीये—द्वितीयसूत्रोक्ताशेषार्थ-प्रतिपादकतदुपात्तश्रुतिव्याख्यानरूपविशेषस्मृतिप्रदर्शनमिति सूत्रक्रम. ॥ ११ ॥

॥ इत्यनिष्टाधिकरणम् ॥ ११ ॥

---

१. **भगवद्द्वेष इति** । "तानहं द्विषतः" इत्यादिना "यान्त्यधमां गतिम्" इत्यन्तेन भगवद्वाक्येन निस्संशयं विज्ञायते नित्यनरकपात एव भगवद्द्वेषिणामिति ।

२. **नित्येति** । केचिन्नित्यनरकवासादिसद्भावे विवदन्ते । ते प्रतिबोधनीया — भगवान् गीताचार्य एव शरणम् । तदुक्तमेव प्रमाणमिति ।

## (१२) ॥ अपि सप्ताधिकरणम् ॥

## सू० ॥ ओं ॥ अपि सप्त ॥ ओं ॥ १६ ॥

**नित्यनरकसमर्थनादिति ।** नित्यनरकसमर्थनस्य "संयमने त्वि"ति उक्तकैमुत्यसिद्ध्युपयोगित्वादनन्तरसङ्गतिरिति भाव । **नित्यफलदमिति ।** अत्र नरक नित्यफलद न भवत्युत भवतीति चिन्ता । तदर्थं 'यावदिन्द्राश्चतुर्दश' 'चकार नरक शून्यम्' इत्यादि वाक्यविरोधोऽस्ति न वेति । तदर्थं नरकमेकमुतानित्यानित्यविभागेनानेकमिति । **पूर्वोक्तिरिति ।** अवरोह इति पूर्वोक्तिर्लोके[१] फलस्यानित्यत्वदृष्टिरित्यर्थ । नरकभोगस्यानित्यत्वकथनान्नित्यनरकोक्तिविरुद्धेति **न्यायनिरण** मनसि निधाय पूर्वपक्षमाह—**पुनरावृत्तिमदेवेति** ॥

ननु नरकभोगस्य नित्यत्वेऽपि नानित्यत्वोक्तिविरुद्धा । नरकस्य भगवद्द्वेषाद्यतिपापिना नित्यफलदत्वेऽप्यपापिना पुनरावृत्त्यपेक्षया 'यावदिन्द्राश्चतुर्दश' इत्याद्यनित्यत्वकथनसंभवादित्याशङ्क्य निषेधति—**न चैकस्यैवेति ।** नरकस्य केषाञ्चिन्नित्यफलत्वे शून्यत्वरूपानित्यत्वकथनविरोध स्यादित्यर्थ ॥

ननु सप्तानामपि नित्यफलदत्वे पुनरनित्यत्वोक्तिविरोध इत्यतो विभागादिति **न्यायनिरणोक्तयुक्तिमाह—तेषु चेति** ॥

ननु रौरवादिपञ्चभ्य एवारोहावरोहौ न तु तामिस्रान्धतामिस्राभ्याम् । तथा "चैतानि क्रमशो गत्वे"ति कथ सप्ताना परामर्श इत्यत आह—**एतानि पञ्चेति ।** तथा च"एत"च्छब्देन रौरवादिपञ्चैव परामृश्यन्ते न तु सप्तापीत्यर्थ ॥

ननु—तत्र हैके **नरकानेकविंशतिं** गणयन्ति । अष्टाविंशतिनरका । एवंविधानरका यमालये सन्ति । शतश सहस्रश इत्यादिना **भागवतादौ**

---

१ लोक इति । लोकव्यवहारेषु नित्यफलादददानादिति भाव ।

१ भागवतादावित्ति । श्रीमद्भागवत पञ्चमस्कन्ध, षड्विंशाध्याये नरकानुवर्णन दृश्यत ।

बहुनरकोक्तेः कथं न तद्विरोधः सूत्रस्मृत्योरित्यतस्तद्विरोधपरिहारार्थमेवेति सप्त प्रधानानीति विशेषोदाहरणमित्यभिप्रेत्याह—**सप्त प्रधानानीत्यनेनेति** । अन्यथा **न्यायविवरणवत्** '**द्वौ नित्यौ संप्रकीर्तितौ**" इत्यन्तमेवोदाहर्तव्यमिति भावः ॥ १२ ॥

॥ इति अपि सप्ताधिकरणम् ॥ १२ ॥

---

## (१३) ॥ तत्राप्यधिकरणम् ॥

## सू० ॥ ओं ॥ तत्रापि च तद्व्यापारादविरोधः ॥ ओं ॥ १७ ॥

**सदुःखत्वेति** । निर्णीते धर्मिणि धर्मचिन्तेति पूर्वाधिकरणेऽवान्तरभेदभिन्ने नरकस्वरूपे निर्णीते इदानीं तद्गतसदुःखत्वरूपप्रकारविचारः क्रियत इत्यनन्तरसङ्गतिरिति भावः । **सदुःखं न वेति सन्देह** इति । अत्र नरकं निर्दुःखमुत सदुःखमिति चिन्ता । तदर्थं दुःखिमहावस्थानमीश्वरस्य दुःखापादकं न वेति । तदर्थमीश्वरस्य दुःखपरिहारोपायोऽस्त्युत नास्तीति । **उभयविधस्थानेति** । निर्दुःखं स्वर्गादिकं सदुःखं भूम्यादिकमित्यर्थः । भाष्ये ईश्वरस्य नरकायुक्ते श्रुतिविरोध इति *यथाश्रुतान्वयभ्रमनिरासायेश्वरस्य नरकायुक्तेरिति भाष्यं* सहावस्थानादीशस्यापि दुःखप्राप्तिरिति **न्यायविवरणं** च सौत्र"च"शब्दनिवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तम् । सर्वं विसृजतीत्यादि भाष्यं तु "तत्रापि च तद्व्यापारादविरोधः" इति *सूत्रांशनिवर्तनीयपूर्वपक्षप्रतिपादनाय प्रवृत्तमित्यभिप्रेत्य पूर्वपक्षं* विवृणोति—**तथा हीत्यादिना** । सहावस्थानादिति **न्यायविवरणोक्त**सहावस्थानरूपापादकासिद्धिपरिहारार्थमाह —**यदि नरकस्येति** । इदानीं समग्रं न्यायविवरणं योजयति । **तर्हि तस्येति** । विपर्ययपर्यवसानपरतया भाष्यं योजयति । **ईश्वरस्येति**[1] । नरकायुक्तेरित्यस्य नरकेऽवस्थानायुक्तेरिति प्रतीतिनिरासार्थमुक्तम्—**दुःखायुक्तेरिति** ॥

---

१. **ईश्वरस्येति** । *सर्वत्र व्याप्ततया नरकेऽपि वसन्नीश्वरो भवेत् दुःखीति* पूर्व. पक्ष. ।

ननु "सभोगप्राप्तिरिति चेन्न वैशेष्यात्" इति सूत्रेण सार्वज्ञ्यादिसामर्थ्यवैशेष्येण जीवेन सहावस्थितावपि न जीवसमानभोगप्राप्तिरित्युक्तत्वात् कथमेव पूर्वपक्षोत्थानमित्याशङ्क्य परिहरति—**न च वैशेष्ययुक्त्येति । सार्वज्ञाभावप्रसङ्गादिति ।** तथा च सार्वज्ञ्यादिवैशेष्ययुक्तिरेवासिद्धेति भाव । अत एव नीचोच्चतैवेत्यादिना सार्वज्ञ्यासिद्धिशङ्का परिहरिष्यत इति हृदयम् ॥

ननु साधूनेव रमयति नासाधून् । असाधूनेव न रमयति न साधूनिति,
144 कथ सर्वं रमयति सर्वं न रमयतीत्युक्तमित्यत आह—**योग्य सर्वमिति । सैहमायुक्तिपरिहारः प्रभुत्वादितीति ।** अनेन स्वातन्त्र्यात् कारणाभावादिति न्यायनिरसनमप्युक्ततात्पर्यं भवति ॥ १३ ॥

॥ इति तत्राप्यधिकरणम् ॥ १३ ॥

---

## (१४) ॥ विद्याधिकरणम् ॥

### सू०॥ ओं ॥ विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ओं ॥ १८ ॥

**प्रकृतः पितृयान इति ।** "चरणादिति चेत्" इत्यधिकरणविषयवाक्ये "ते धूममभिसंभवन्ती"त्यनेनेत्यर्थ । **तत्प्रकृतिसन्निधापित इति ॥** उभयोरप्यव्यवधानेनैकप्रकरणपठितत्वादिति भाव । तथा च विषयोपस्थापकेन "चरणात्" इत्यनेनास्याधिकरणस्यानन्तर्यलक्षणासङ्गतिरिति भाव । न चैव सति तदानन्तर्यमेव स्यादिति वाच्यम्, तत्रेष्टादिकारिणा गतागतोक्तावनिष्टादिकारिणा गतागतमस्ति न वेति झटित्याकाङ्क्षोदयेन तेषामपि गतागतसमर्थनपरस्य "अनिष्टादिकारिणामपि च श्रुतम्" इत्यस्य तदानन्तर्यस्यावश्यकत्वात् । तत्रोक्तकै

---

१ **सद्भावेति ।** प्रभुत्वात्, स्वतन्त्रत्वात्, सर्वशक्तिमत्त्वात्, भगवतो न दुःखलेशोऽपीति भाव । दुःखसद्भावस्याऽप्रयोजकत्वादिति द्रष्टव्यम् ।

२ **प्रकृत इति ।** "पितृयाण" इति "मध्यविलास" पुस्तकपाठ ।

३ **झटितीति ।** Text restored

मुत्यसिद्ध्युपयोगितया तदुत्तराधिकरणद्वयस्य तदानन्तर्यस्य चावश्यकत्वाच्च। तथा च साक्षात्तदुपक्षिप्तविचारपराधिकरणत्रयव्यवधानं न दोषायेति। **किं भूतैरिति।** अत्र देवयानपितृयानौ किं भूतै स्वातन्त्र्येण गम्यौ न वेति चिन्ता। तदर्थम् 'अथैतयो''रिति श्रुतावेतच्छब्देनैतौ परामृश्यौ **किं वा विद्याकर्ममार्गाविति।** तदर्थं विद्याकर्ममार्गयोरेतच्छब्देन परामर्शे नियामक नास्त्युतास्तीति। ननु कथमत्र श्रुतौ जीवाना गतिस्वातन्त्र्यमुच्यत आह—**न हीति।** ''च''शब्देनाभिसभवंतीति विधिसमुच्चय। पुँरुषप्रयत्नाविषये विधिनिषेधयोरसभवेनाभिसभवंतीति न गच्छन्तीति विधिनिषेधान्यथानुपपत्त्या तेषा तत्र स्वातन्त्र्यप्रतीतेरिति भाव। **साधनवदिति।** साधनेऽपि साम्यादित्यन्तेनानेन ग्रन्थेन साधनेन सहश्रुतेस्तद्वत्फलेऽपि जीवस्य स्वातन्त्र्यमिति **न्यायविवरणमुक्ततात्पर्यं** भवति। **न गच्छन्तीति।** अनेन ''अप्य''र्थकस्य ''चे''त्यस्यानन्तरमध्याहृतेन गच्छन्तीत्यनेना नैकतरेणेत्युक्तनञोऽन्वय इत्युक्त भवति। एतदेवाभिप्रेत्य न गच्छन्तीत्युक्तम्। इति **विद्याकर्ममार्गयोरपीति।** अनेन येन वाक्येन देवयानपितृयानयो प्रकृतिरिति तेनैव विद्याकर्मणोरपि प्रकृतिरिति सूचयितु सूत्रगते''ति''शब्दस्तु ''अप्य''र्थ इत्युक्तं भवति। विद्याकर्मापेक्षयैवेत्यादिव्याख्यानपरेणानेनाथैतयो पथोरित्यस्य च साधनार्थत्वादिति **न्यायविवरणमप्युक्तार्थं** भवति। विहितत्वेन कारणाभावादिति **न्यायविवरणं** तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वक व्याचष्टे—**न च साधनेति।** ननु फले विध्यभावेऽपि स्वातन्त्र्य किं न स्यात्, विहितत्वस्य तत्राप्रयोजकत्वादित्यत आह—**विध्यादीति।** तथा च यत्र जीवस्य स्वातन्त्र्यानङ्गीकारे बाधकं तत्र तदङ्गीकर्तव्यम्, न त्वन्यत्र। ततश्च तत्र साधने स्वातन्त्र्याभावे विध्यादिशास्त्रवैयर्थ्यं स्यादिति तदवैयर्थ्याय तत्रेश्वर स्वातन्त्र्य ददातीति प्राक् ''कर्ता शास्त्रार्थवत्त्वात'' इत्यधिकरणे उक्तम्। न चैव फले स्वातन्त्र्यानङ्गीकारे बाधकमस्ति, येन तदङ्गीकर्तव्य स्यादिति भाव ॥ १४ ॥

॥ इति विद्याधिकरणम् ॥ १४ ॥

---

१ **पुरुषेति।** पुरुषप्रयत्न प्रवृत्ति-स्वातन्त्र्याद्यनभ्युपगमे विधिनिषेधाऽऽनर्थक्य-मनानुगुण्य चेति भाव।

## (१५) ॥ न तृतीयाधिकरणम् ॥

## सू०॥ ओं ॥ न तृतीये तथोपलब्धेः ॥ ओं ॥ १९ ॥

**प्रकृतमन्धंतम** इति । "अपि सप्ते"त्यत्रेत्यर्थः । न च तर्हि तदानन्तर्यमेव स्यादिति वाच्यम् ; "तत्रापि चे"त्यनेन सदु खत्वे सिद्धे सुखाभावविचारस्य प्रवृत्ते । तर्हि "विद्याकर्मणोरि"त्यनेन व्यवधाने किं कारणमिति चेत्, सत्यम्; सदु खत्वविचारस्य सर्वनरकविषयत्वम् । अस्य तमोमात्रविषयत्वमिति ज्ञापनमिति भाव । अत्रान्धंतम सुखयुक्तं न वेति चिन्ता । तदर्थं दु खं सुखेन[1] व्याप्तं न वेति । तदर्थं व्याप्तिग्राहकं प्रमाणमस्ति न वेति । तदर्थं तत्र बाधकं प्रमाणं नास्त्युतास्तीति । महातमस्यपि सुखप्राप्तिरिति भाष्यव्याख्यानपरेणा**न्धंतमो-पीत्यादिना व्याप्तत्वादि**त्यन्तेन दु खसहावस्थायित्वादन्धंतमस्यपि सुखमिति **न्यायविवरणयुक्ततात्पर्यं** भवति ॥

नन्वन्धे तमसि सुखराडित्यानुमाने लौकिकदृष्टान्तानुपलम्भादुदाहरिष्यामाणस्मृतौ चेश्वरस्य स्वाप्रिये सुखासहनराजादिदृष्टान्तोक्ते कथमेतदित्यत ईशस्याप्रियत्वेनैव कारणाभावादिति **न्यायविवरणं** मनसि निधाय तदभिप्राय-
145 माह'—**अयमभिसन्धिरिति** ॥ कारणाभावादिति **न्यायविवरणोक्त**साक्षाद्विप्रतिपन्नार्थसाधकमनुमानमाह—**विप्रतिपन्न** इति । तथात्वेनेश्वरानिष्टत्वादित्यनेनेशेच्छारूपकारणाभावादिति व्याख्यातं भवति । अप्रियत्वेनैवेत्युक्तं हेतुसाधकमनुमानमाह— **नैते सुखित्वेनेश्वरेष्टा** इति । [2]तमोगतानामसुरादीनामीश्वराप्रियत्व तु—

> 'तमोद्वेषेण सन्याति भक्त्या मुक्तिं तथैव च ।
> निष्णौ विष्णुप्रसादेन विलोमत्वेन चाञ्जसा ॥'

इत्याद्यनेकप्रमाणसिद्धम् । **एतच्चानुमानं स्मृतिसिद्धत्वेनातिप्रबलमिति ।** तथा च तमसि सुखसाधकानुमानस्यानेन बाध इत्यर्थ ॥

---

१. सुखेनेति । दु खविचारानन्तरं सुखाऽभावस्य विचारः प्रसक्त इति भाव ।

२ तमोगतेति । भगवद्विद्वेषिणस्तमोगता । तमोगताश्च भगवद्विद्वेषिण इति भाव ।

ननु स्मृतौ ईश्वरः स्वाप्रिये सुखं न सहत इत्यत्रात्यप्रिये सुखं यथा राजा न सहते तथैव परमेश्वर इत्येतावदेव वक्तव्यम्। "अतिप्रिये यथे"त्यादिकं किमर्थमुदाहृतमित्यत आह—**अनेन व्यतिरेकान्वयौ दर्शिताविति ।** नैते सुखित्वेनेश्वरेष्टा अप्रियत्वादित्यनुमाने प्रथमार्धेन व्यतिरेकः तृतीयपादेनान्वयः प्रदर्शित इत्यर्थ. । दु.खस्य सुखविरुद्धत्वेन दु.खपदस्य सुखाभावपरत्वात् व्यतिरेकत्वं द्रष्टव्यम् । अत एव पक्षान्तरमाह:—**सदसज्जनानां वेति ॥** अत्र पूर्वंसदसज्जनानां प्रकृतत्वात्तत्र परमेश्वर. सज्जनेषु दुःखं न सहत इत्यत्रातिप्रिये यथा राजेति दृष्टान्तोक्तिः । असज्जनेषु सु.खं[1] न सहत इत्यत्रात्यप्रिय इति दृष्टान्तोक्तिरिति भावः । ननु तिर्यग्यातना तम इति तमसः अधोगतिषु तृतीयत्वस्योक्तत्वात्तृतीयतमस इति भाष्ये कथमुक्तमित्यत आह·—**तमोऽपि त्रिविधमिति ॥**

नन्वत्र सूत्रे तिर्यगाद्यधोगतौ तमस एव तृतीयत्वज्ञापकतया तृतीय इत्युपपत्तेर्भाष्ये तृतीयतमस इति "तृतीय" इत्येतत्सौत्रं पदं कथं तृतीयतम.परत्वेन व्याख्यातमित्यत आह—**अधोगताविति ॥** तमस्तृतीयत्वस्य "न तृतीय·" इति प्रथमसूत्र एवोक्तत्वादत्र सूत्रे तज्ज्ञापनार्थं तृतीयग्रहणवैयर्थ्यापत्ते । उपलक्षणमेतत् । "महातमस्त्रिधा प्रोक्तम्" इति उत्तरसूत्रानुगृहीतस्मृत्यनुसाराच्च तृतीयेऽपि तिर्यगाद्यधोगतौ तृतीये तमस्यपि तृतीयस्याधरान्धतमोविशेषस्य ग्रहणमित्यर्थः ॥

ननु '*श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत्*'

इति स्मृत्यनुसारेण भाष्ये श्रवणादेव संशोकजमोहप्राप्तिरित्यन्वयपूर्वं. [2]शब्दानुसा[रेणे]रादिति किमर्थमुक्तमित्यत आह—**शब्दानुसा(रेणे)रादिति ।** अनेन—

"तस्मान्न विस्तरेणैव कथ्यते राजसत्तम"

---

१. **सुखमिति** । *असज्जनेषु भगवान् सुखं नसहते । तादृशसहनाभावो भवति* भगवतो भूषणं न कदापि दूषणमिति द्रष्टव्यम् ।

२. **शब्देति** । "शब्दानुसारेणेति" "मध्वविलास" पुस्तकपाठ. ।

इति स्मृत्यनुसारात् कथनानुसारात् **सम्यग्व्याख्यान** इति यावदिति "शब्दानुसारादि"त्यस्य तात्पर्यमुक्तं वेदितव्यम्। **अतिमूर्छेत्यनेन** संशोकजमोह-प्राप्तिभाष्यांशः "अती"त्यध्याहारेण प्रकारान्तरेण योजित. । यद्वा सूत्रस्थ "स"शब्दानुरोधेन भाष्ये शब्देत्येतच्छब्दानुसारादिति व्याख्यातमित्यभिप्रेत्याह– **शब्दानुसा[रेणे]रादिति** ॥ अत एव पूर्वं "सं"शब्दो न योजित इति भाव'। सूत्रक्रमस्तु—

"प्राबल्यमागमस्यैव जात्या तेषु त्रिषु स्मृतम्"

इति वचनादलौकिकेऽर्थे आगमस्येतरप्रमाणापेक्षया मुख्यत्वात्तत्राप्यपौरुषेयत्वेन वेदस्यैव मुख्यत्वात् प्रथमसूत्रे—"तथोपलब्धे."इति तमसि सुखराहित्ये श्रुतिरभिहिता । द्वितीये—"स्मर्यतेऽपी"त्यंशेन तदनन्तरप्राप्ता स्मृतिर्दर्शिता। "लोके च"इत्यनेन त्वनुमानमुक्तम्। यद्यपि "दर्शनाच्च"इति प्रत्यक्षोक्त्यनन्तरमनुमानं वक्तव्यम्। तथापि पृथक् सूत्रेण तदुक्तौ तमसि सुखसाधकानुमानबाधकत्वोपयुक्तप्राबल्याय पुन. स्मृतिसिद्धत्ववचनेगौरवं स्यादिति स्मृतिवचनप्रसङ्गेन स्मार्तमनुमानमप्युक्तम्। तृतीये—अर्थापत्त्यपेक्षया प्रबलस्य प्रत्यक्षस्योक्ति.। चतुर्थे—अवशिष्टार्थापत्त्युक्तिः। यद्यप्यर्थापत्तिरनुमानमेव। तथापि विशेषविवक्षया तदुक्तिरिति ज्ञेयम्। पञ्चमे—उपपादकस्य प्रामाणिकत्वोक्तिरिति ॥ १५ ॥

॥ इति न तृतीयाधिकरणम् ॥ १५ ॥

---

१. **आगमस्येति**। आगमैकसमधिगम्येष्वर्थेषु तस्यैव प्राबल्य नेतरप्रमाणानामिति।

२. **यद्यपीति**। अर्थापत्तिरनुमानेऽन्तर्भवति यद्यपि तथापि पृथगुक्तिर्विवक्षाविशेषेणेति ज्ञातव्यम्।

## (१६) तत्स्वाभाव्याधिकरणम् ॥

### सू० ॥ ओं ॥ तत्स्वाभाव्यापत्तिरुपपत्तेः ॥ ओं ॥ २४ ॥

**यथागतमन्यथा चागच्छन्तीत्युक्तमिति।** "यथेतमनेवं च" इत्यत्रेत्यर्थः । तथा च धूमादिभावरूपविषयसारकागत्युपक्षेपकतया तेनास्य संगतिरिति भावः ।

ननु तर्हि तदानन्तर्यमेवास्य स्यादिति चेत् , न ; साक्षात्तदुपक्षिप्तगनागतविचारस्य तदनन्तरमेवास्य कर्तव्यत्वेन तत्परस्य "चरणात्" इत्यस्य तदानन्तर्ये स्थिते इतरेषां विचाराणां तूक्तरीत्या तत्तत्प्रसङ्गेन तदनन्तरमेवावश्यकर्तव्यतया तत्परैरधिकरणैर्व्यवधानस्यादोषत्वात् । **धूमादिदेवतैक्यं वेति।** अत्र धूमादिभावः किं धूमादिदेवतैक्यतत्पदप्राप्त्योरन्यतर उत तद्गतौ गतिरित्याद्येकदेशत्वभावत्वादिरूपो वेति चिन्ता । तदर्थं धूमो भूत्वेत्यादिसामानाधिकरण्यश्रुतिर्मुख्यार्थोतामुख्यार्थेति । तदर्थं मुख्यार्थत्यागे कारणं नास्त्युतास्तीति । न ह्यन्यस्यान्यभावो युज्यत इति सिद्धान्तभाष्यानुसारेणाह— **ऐक्यमिति ।** न च तत्पदप्राप्तिरिति भाष्यस्य कर्मिणोऽपि तत्पदप्राप्तिरिति **न्यायविरण**स्य चानुसारेणाह—तत्पदप्राप्तिर्वेति पूर्वपक्ष इति । **तद्विरोध**- इति । श्रौतसामानाधिकरण्यविरोध इत्यर्थः । धूमादिदेवतासहावस्थानकर्मिणोऽपि तत्पदप्राप्तिरिति **न्यायविवरणं** तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकं योजयति **न च कर्मिणामित्यादिना । तद्गतौ गतिरित्यादीति ।** अत्रादिशब्देन "स्थिति. स्थितौ प्रवेशश्च लघुत्वात्" इति स्मृत्युक्तं ग्राह्यम् । **सादृश्येति ।** "तत्त्वमसि" इत्यादावित्यर्थः । उपलक्षणमेतत् । तदधीनत्वे चेत्यपि ग्राह्यम् । "सर्वं खल्विदं ब्रह्म" इति तत्रापि प्रयोगदर्शनात् । अत एवोक्तं स्मृतौ—

"यथा जीव परो ब्रह्म ब्रह्मेदं जगदित्यपि"

---

१ **पूर्व इति ।** "पूर्व. पक्षः" इति "मध्वविलास"पुस्तकपाठ ।

२. **न चेति ।** "कर्मिण" इति "मध्वविलास"पुस्तकपाठ. ।

इति भाव । इत्यादिरिति भाष्यगता"दि"शब्दार्थमाह—**स्थानैक्याभिप्रायं** वेति ॥ तथा **प्रयोगदर्शनादिति** । " परे व्यये सर्व एकीभवन्ति " इत्यादावित्यर्थ । **प्रागन्यस्येति** । अनेन प्रागन्यस्य सत कर्मिण अन्यभाव, धूमादिदेवतैक्यं न युज्यत इति भाष्यं व्याख्यातं भवति । कुत इत्यतस्तद्धेतुप्रदर्शनपरत्वेन तदेव भाष्यं व्याचष्टे—**अन्यस्येति** । कुतस्तत्पदप्राप्तिर्न युक्तेत्यत "विद्यागम्यं पद यस्मात् इति" स्मृत्युक्तं हेतुमाह—**तस्येति** । अनेन तन्निमित्तविद्याख्यकारणाभावादिति **न्यायविवरणमपि** व्याख्यातं भवति । 'न तत्प्राप्यं हि कर्मणा ' इति स्मृतिसूचितं युक्त्यन्तरमाह—**युगपदिति** ॥ १६ ॥

॥ **इति तत्स्वाभाव्याधिकरणम्** ॥ १६ ॥

---

## (१७) ॥ नातिचिरेणाधिकरणम् ॥

## सू० ॥ ओं ॥ नातिचिरेण विशेषात् ॥ ओं ॥ २५ ॥

146 **मध्येमार्गमतिसुखलाभादिति** । तथा च पूर्वाधिकरणे कर्मिणा धूमादिदेवतास्वाभाव्यापत्त्युक्तावेव बहुस्थानगमनादित्यादिपूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव । **स्वर्गान्निर्गत्येति** । अत्र कर्मिण· स्वर्गान्निर्गत्य चिरेण गर्भवासं प्राप्नुवन्त्युताचिरेणेति चिन्ता । तदर्थं बहुस्थानगमनं किं चिरकालेनोताचिरकालेनेति । तदर्थं तत्तत्स्वाभाव्यापत्त्या जायमानसुखस्यानुभवे इष्टत्व प्रयोजकं न वेति । तैस्तै सहावस्थानादतिचिरत्वमिति **न्यायविवरणाभिप्राय**माह— **तत्र तत्रेति** । ननु भाष्ये, सदाप्येवं स्यादित्यनुक्त्वा कल्पान्तमिति किमर्थमुक्तमित्यत आह—**कल्पाप्रमानमिति** । तथा च यावद्देवतापदं तावदेव तत्स्वाभाव्यापत्तिनिमित्तकं सुखमिति न सर्वदेत्युक्तमिति भाव । **आगमनस्यै-**

---

१ **नेति** । एकस्याऽन्यभावलक्षणमैक्यं न कदापि, कथमपि प्रामाणिकमिति वेदितव्यम् ।

२ **मध्य इति** । मार्गमध्यलब्धसुखं नुभवलोऽपि न विरक्तिसंपादनाय प्रयतेतेति भाव । अपि तु कर्मण्येव रक्तो भवेत् ।

वेति। न तु बहुस्थानगमनस्येत्यर्थः। "पर्यटन् यत्र तत्र च" इति बहुस्थानगमनपूर्वकमचिरेणैवागमनस्योक्तेरिति भावः। कुतो नेष्टत्वविरोध इत्यतो वत्सरात् पूर्वमेव चेति वत्सरकालादधिकावस्थाने कारणाभावादिति **न्यायविवरणोक्तं** हेतुमाह—**इष्टत्वेऽपीति**। इष्टत्वस्यैव प्रयोजकत्वेऽतिप्रसङ्गमाह—**अन्यथेति**। दुःखाभावस्य सर्वेषामिष्टत्वादिति भावः॥ १७॥

॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥

---

## (१८) ॥ अन्याधिकरणम् ॥

## सू०॥ ओं ॥ अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ओं ॥ २६ (२७)॥

**व्रीह्यादिभावनिरासादिति**। निरन्तराधिकरणद्वयेन "यथेतम्" इत्याद्यागमनप्रतिपादकवाक्ये "मेघो भूत्वा प्रवर्षति" इत्यन्ते सविशेषं विचारिते[2] "त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति तदनन्तरवाक्यविचारोऽत्र क्रियत इत्यनन्तरसङ्गतिरिति भावः॥

ननु वैराग्यार्थं दुःखहेतुगत्यादिनिरूपणार्थं प्रवृत्तेऽस्मिन् पादे कर्मिणां व्रीह्यादिभावेन दुःखाभावसमर्थनपरस्यास्याधिकरणस्य कथमन्तर्भाव इत्यतोऽन्तर्भावं सूचयंस्तत्प्रतिपादनस्यावश्यकत्वमाह—**सुखसाधनतयेति**। **किमागमने दुःखवन्त इति**। अत्र कर्मिण किमागमने दुःखवन्तो न वेति चिन्ता। तदर्थं तेषां व्रीह्यादिभावोऽस्ति न वेति। तदर्थं "तिलमाषा" "इति जायन्ते" इति व्रीह्यादिभावप्रतिपादिका श्रुतिर्मुख्यार्था न वेति। तदर्थं मुख्यार्थत्यागे बाधकोपयोगौ न स्त उत स्त इति। तदर्थं व्रीह्यादिजीवैः सहावस्थाने कर्मिणां दुःखं भवत्युत नेति। तदर्थं तेषां दुःखकारणं पापमस्ति न वेति। तदर्थं

---

१ दुःखेति। न कोऽपि प्रेक्षावान् स्वानन्त्ये सति सुखं विहाय दुःखं प्राप्तुमिच्छेत्। तस्माद्धर्मप्राप्त्यादिषु कर्मिणामिष्टत्वस्यैव प्रयोजकत्वे स्पष्टोऽतिप्रसङ्ग इति भावः।

२. विचारित इति। Text amended.

यागीयहिंसाया पापसाधनत्वमस्त्युत नेति। तथा च यागीयहिंसाया पापसाधनत्व-पापलक्षणदु खकारणसद्भावे न व्रीह्यादिजीवै सहावस्थिताना कर्मिणा दु खनियमाद्व्रीह्यादिभावप्रतिपादकश्रुते व्रीह्यादिशरीरप्रवेशमात्ररूपामुख्यार्थकल्पनस्य दु खानिवारकत्वेनोपयोगाभावाद्बाधकाभावाच्च, तच्छ्रुतेर्मुख्यार्थत्वे तेषा व्रीह्यादि-भावस्य सत्त्वात्तच्छेदनादिनिमित्तकदु खेनागमन इति पूर्वपक्षे वेदविहितत्वेन यागीयहिंसाया पापसाधनत्वाभावे तन्निमित्तकपापाख्यदु खकारणाभावात् पापान्तरस्य चैतदकारणत्वात्दु खिव्रीह्यादिजीवै सहावस्थानेऽपि कर्मिणा दु खाभावेन दु खनिवारणलक्षणोपयोगसद्भावात् "सोर्वाक् गत" इत्यादिबाधकसद्भावाच्च व्रीह्यादिभावप्रतिपादकश्रुतेस्तच्छरीरप्रवेशमात्ररूपामुख्यार्थत्वे रूपादिभावाभावेना-गमने न तेषा छेदनादिनिमित्तक दु खमिति सिद्धान्ते[4] च फलफलिभावो ज्ञातव्य । **तद्वदिति** । कर्मिणा धूमादिदेवतैक्येऽन्यस्यान्यभावायोगलक्षणस्य बाधकस्य सत्त्वात् सा श्रुति स्वाभाव्यापत्तिपरत्वेन व्याख्यातु शक्यते । इह तु कर्मिणा जीवैरैक्य न श्रुत्यर्थ[5]। किं तु तेषामेव व्रीह्यादिशरीरकत्वेन भवनरूप व्रीह्यादिभाव । अत्र च बाधकाभावादिय श्रुतिस्तद्वन्न व्याख्येयेति भाव । व्रीह्यादिजीवै सहावस्थाने तु दु खप्राप्तिरिति **न्यायनिवरण** सयोजयितु मुख्यार्थकल्पकप्रयोजनकाभाव चाह—**अनुपयुक्ता चेति** । **न्यायनिवरणाभि**प्रायमाह—**व्रीह्यादिजीवैरित्यादिना** ॥

नन्वेवमागमने दु ख तस्यापि वैराग्यहेतुत्वादित्यत अनर्थफलत्व यज्ञादेरिति पूर्वपक्षफलप्रतिपादकभाष्याभिप्रायमाह—**तच्च दुःखमिति** । इति

---

१ **यागीयेति**। यागीयहिंसाया वेदविहितत्वेन, न दोषपादकत्वमिति वेदितव्यम्। विस्तरस्तु विजयीन्द्रगुरुपादकृतविष्टपशुमीमासाया द्रष्टव्य ।

२ **दु खमिति**। व्रीह्यादिसजीवमित्याधुनिकवैज्ञानिकसिद्धान्तसादृश्य पूर्वपक्षे प्रतिफलितमिति ज्ञेयम्।

३ **तद्वदिति**। "तन्निमित्तक" इति भाष्यम्।

४ **सिद्धान्त इति**। पूर्वपक्षे दु खमिति, सिद्धान्ते न दु खमिति द्रष्टव्यम्।

५ **श्रुत्यर्थ इति**। जीवैक्यं न श्रुत्यर्थ इहेति भेदो बोद्धव्य ।

शब्द इति । " इति जायन्ते " इति श्रौत"इति"शब्दः प्रियङ्ग्वाद्युपलक्षक इत्यर्थः । **यतोऽस्यामिति** । अनेनान्याधिष्ठिते व्रीह्यादिशरीरे प्रवेश इति भाष्ये यतोऽस्यां श्रुतावुच्यत इत्यध्याहारः । **प्रवेश एव इति** सावधारणम्, तद्व्यावर्त्यं च तच्छरीरत्वाभिमानित्वमित्युक्तं भवति । कर्मिणो व्रीह्यादिशरीराभिमानित्वानङ्गीकारे यद्बाधकं तत्परिहारार्थं सूत्रभाष्ययोरन्याधिष्ठित इत्युक्तमित्यभिप्रेत्य तद्बाधकशङ्काप्रतिषेधपूर्वकमन्याधिष्ठित इति पदाभिप्रायमाह—**न च तस्येत्यादिना** । अतःशब्दाध्याहारं विना न तु भोगोऽस्येति भाष्यान्वयाभावात्व्रीह्यादिशरीरे प्रवेशमात्रप्रतिपादकत्वस्य साक्षाद्धेतुत्वायोगेन तेन तत्परामर्शायोगाच्च प्रमाणाभावेनार्थतः सिद्धमर्थाभावं तत्परामृश्यं कथयन् न त्विति भाष्यं व्याचष्टे—**यतश्चेति** । **अन्यतरप्रकारेणेति** । व्रीह्यादिभावसहावस्थानयोरन्यतरप्रकारेणेत्यर्थः । **प्रत्युत शब्दविहितत्वादिति** । अनेन शब्दविहितत्वेन पापाख्यकारणाभावादिति न्यायविवरणमप्युक्ततात्पर्यं भवति । **सोपाधिकत्वेनेति** । **किं नाम निषिद्धत्वमेवेत्यनेन** साध्यव्यापकत्वस्य **न च तद्यागीय(यज्ञीय)हिंसायामस्तीत्यनेन** च साधनाव्यापकत्वस्य चोक्तत्वादिति भावः ॥ १८ ॥ P. 1

॥ इत्यन्याधिकरणम् ॥ १८ ॥

---

## (१९) ॥ रेतोधिकरणम् ॥

### सू०॥ ओं ॥ रेतः सिग्योगोऽथ ॥ ओं ॥ २८ ॥

**तस्यैव पितृप्रवेश** इति । तथा च " तिला माषा इति जायन्त " इति पूर्वाधिकरणविचारितवाक्यानन्तरं प्राप्ते "नातो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो वा रेतः सिञ्चति तद्भूय एव भव इति" वाक्येन समानार्थकस्य

---

१. **प्रवेश इति** । " प्रवेश एवेति " भाष्यम् ।

२. **न चेति** । उपाधेः साधनाऽव्याप्यकत्वप्रदर्शनम् । निषिद्धत्वमुपाधिरिति भावदीपे । " साध्याभावाऽविनाभावी स उपाधिर्यदत्यय." इति स्वरूपप्रदर्शनमुपाधेः ।

"यएव भवति यो वा रेत सिञ्चति तमेवानुविश इति" वाक्यस्यात्र विचारादनन्तरसङ्गतिरिति भाव । **किं पितरमिति** । अत्र कर्मी किं पितर न प्रविशत्युत प्रविशतीति चिन्ता । तदर्थं तत्प्रतिपादिका "य एव गृही भवति" इति श्रुति "मातुरेवोदर व्रजेत्" इति वचनबाधिता न वेति । तदर्थं मातुरेवोदर व्रजेदिति वचनमवधारणार्थस्यान्ययोगव्यवच्छेदकत्वेन निरवकाशमुतायोगव्यवच्छेदकत्वेन सावकाशमिति । तदर्थं "य एव गृही भवति" इति श्रुति किं दुर्बलोत नेति । तदर्थं मातुरेवोदर व्रजेदिति वचनस्य प्राबल्यसपादक पितृप्रवेशवैयर्थ्यमस्त्युत नेति । तथा च पितृप्रवेशवैयर्थ्ये मातुरेवेति श्रुतेस्तद्रूपयुक्त्युपेतत्वेन प्रबलत्वात्, पितृप्रवेशप्रतिपादिकया "य एव भवति' इति श्रुत्या पितृप्रवेशो न सिध्यतीति पूर्वपक्षे । पितृप्रवेशस्यावश्यकत्वेन वैयर्थ्याभावे मातुरेवेति श्रुतेरपोद्बलकयुक्त्यभावेन तत्प्रतिपादकश्रुतेर्दौर्बल्याभावात्तदनुरोधेनावधारणस्यायोगव्यवच्छेदपरत्व कल्पने मातुरेवेति श्रुते सावकाशत्वेन तद्बाधकाभावात् । "य एव गृही भवति"इति श्रुत्या पितृप्रवेश सिद्ध्यतीति सिद्धान्ते फलफलिभाव । वैयर्थ्यात पितृशरीरगमनमिति **न्यायविवरण** सयोजयितुमाह—**न चेति** । श्रुतिसूत्राभ्या **न्यायविवरणेन** च निवर्तनीयौ पक्षौ विकल्पयति—**किमुत्पत्तानिति** । **शरीरपरिणामायेति** । अत एव श्रुतिसूत्रयो पितरमेवानुविश्येति पितृयोग इति वक्तव्ये "रेत सिचमेव' इति "रेत सिग्योग" इत्युक्तमिति भाव । **तत्प्रवेशस्येति** । अनेन

"ईशक्लृप्त्यैव पितर प्रविश्यायाति मातरम्"

इतीशक्लृप्तत्ववचनादिति **न्यायविवरण** व्याख्यात भवति । "मातुरेवोदर व्रजेत्' इति श्रुते[२] सावकाशत्व वक्तुं सूत्रे अथेत्युक्तमित्यभिप्रेत्य प्रवृत्त मातृप्राप्ते पश्चादपि भाव्यत्वादिति भाष्यमवतार्य व्याचष्टे—**एव चेदिति** । अत एव पश्चादिति भाष्य रेत सिग्योगादनन्तरमपीति

---

१ पचनमिति । Text amended

२ श्रुतेरिति । 'मातुरेवोदरं व्रजेत्' इति वचनमिति क्वचित् । श्रुतेरिति क्वचित् च वर्तते ।

व्याख्यानम् । अयोगव्यावर्तक इति । अनेन व्रजेदेवेत्यन्वय. सूचित: इति भाव: ॥ १९ ॥

॥ इति रेतोऽधिकरणम् ॥ १९ ॥

---

## (२०) ॥ योन्यधिकरणम् ॥

### सू०॥ ओं ॥ योने: शरीरम् ॥ ओं ॥ २९ ॥

**पितृद्वारा योनिं प्रविश्येति** । तथा च "ततो रेत: सिक्तमेवानुविश्याथ मातरमथ प्रसूय" इति श्रुत्यनुसारेण पूर्वाधिकरणविषयवाक्यानन्तरं प्राप्तम् "तद्य इह रमणीयचरणा रमणीया योनिमापद्यन्त" इति यद्वाक्यं तत्रोक्तो मातृप्रवेशो विचार्यत इत्यनन्तरसङ्गतिरिति भाव. । **किं पितृद्वारेति** । अत्र जीव: किं पितृद्वारा मातृयोनिमनुप्रविश्याथ शरीरं प्राप्नोत्युत नेति चिन्ता । तदर्थं "देहं गर्भस्थितं क्वापि" इति वचनं सकलजीवसामान्यजन्मविषयकं चोत ज्ञानतप:कारणकजीवविशेषजन्मपरं चेति । तदर्थं पितृप्रवेशादिनियमप्रमाणप्रयोजने न स्त उत स्त इति । **योनिप्रवेशस्तावदिति पितृप्रवेशोऽप्युक्त** इति वक्ष्यमाणापेक्षया **तावच्छब्द:** । पितु: सकाशादन्यतो वौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्ते: योनिप्रवेशाभाव इति **न्यायविवरणं** मनसि निधायाह— व्यर्थश्चेत्यादि । पितु. सकाशादेवेत्यनेन पितु सकाशाच्छरीरमेव प्रवेष्टुमुपपत्तेरित्यन्वयमभिप्रेत्य तावानंशो व्याख्यात. । **तस्मिन्निति** पितरि मान्धात्रादिवदित्यर्थ: । **बहिरिति** । द्रुपदादिवदित्यर्थ । पितु सकाशादौदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति **न्यायविवरणं** प्रकारान्तरेण व्याचष्टे—**मातृप्राप्तेरिति** । योनिप्रवेशनिरासार्थं **संस्पर्शद्वारेणेति** शेषोक्ति । **वैपरीत्यस्यापीति** । अस्यापि प्रामाणिकत्वेनेशक्लृप्तिमूलकत्वादित्यर्थ । अन्यत औदर्य-

---

१. **मान्धात्रादीति** । युवनाश्वादौ मान्धात्रादेरिति **भावदीपे** ।

२. **द्रुपदादिवदिति** बहिरेव द्रुपदद्रोणादेरुत्पत्तिदर्शनादिति **भावदीपे** ।

गर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति **न्यायविवरणं** प्रकारान्तरेण व्याचष्टे—**अन्यत इति** ॥

नन्वन्नादिद्वारा मातृप्रवेशोपपत्तावपि शरीरपरिणामार्थं रेतसोऽपेक्षितत्वेन पितृप्रवेश आवश्यक इति पूर्वाधिकरणेऽभिहितमित्यत अन्यत इति **न्यायविवरणं** प्रकारान्तरेण व्याचष्टे—**मातृस्थरेतसैवेति** । औदर्यगर्भस्थशरीरमेव प्रवेष्टुमुपपत्तेरिति **न्यायविवरणांशं** व्याचष्टे—**स चेति** । योनिप्रवेशस्तावन्न विद्यते । पितृप्रवेशोऽप्ययुक्तः । शरीरप्राप्तिरत्यनुपपन्नेति वाक्यत्रयेण योनि प्रवेशाभाव इति
148 **न्यायविवरणांश** उपलक्षणपर इति योजितो भवति । **अस्त्येव जीवस्य पितृप्रवेश** इति । अनेन सूत्रे योनिशब्द उपलक्षक इत्यभिप्रेत्य पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरं प्राप्नोतीति भाष्यं प्रवृत्तमित्युक्तं भवति । तदुक्तं सुधायाम्—यद्यप्यत्र योनिशब्दो जीवाद्युपलक्षणपरः शक्यो व्याख्यातुमिति ॥

ननु तर्हि "देहगर्भस्थितं क्वापि" इति प्रागुदाहृतवचनस्य का गतिरित्यत आह—**असाधारणजन्मविषयमिति** । तथा च—

"बीजपुरुषयोनीनां सङ्गतिं नियमोज्झिताम् ।
अथ शब्देन भगवानाह कारणतश्च ताम् ॥"

**इत्यनुव्याख्यानो**क्तरीत्या 'रेतः सिग्योगोऽथ' इति पूर्वसूत्रादनुवर्तमानेन "योनेः शरीरम्" इत्यनेनाऽन्वितेनाथशब्देन यत्तपोज्ञानादिविशेषकारणकजीवजन्मलक्षणं पक्षान्तरं तद्रूपासाधारणजन्मविषयं प्रागुदाहृदं वाक्यमित्यर्थः । अतएव भाष्ये "ऽयासंमिता"मिति "विशेषजननं चे"ति श्रुतिस्मृतिविशेषस्य **न्यायविवरणे** विशेषकारणादेवेत्यस्य चोदाहरणमिति भावः । ननु "उत्पत्त्यसंभवात्" इत्य-

---

१. **मातृस्थेति** । पितुरुपयोग एव नास्तीति पूर्वपक्षी शङ्कते ।

२. **अस्त्येवेति** । पितृद्वारैव मातृशरीरप्रवेश इति साधारणजन्मनियमः । असाधारणजन्मनि नायं नियम इति भावः ।

१. 'व्याख्यातुमिति । Text amended.

धिकरणे "केवलाभ्यो न हि स्त्रीभ्य." इत्युक्तत्वात् कथं प्रमदायामित्युक्तमित्यत आह—जरत्कार्वादीति। एतदेवेति। अनेन "पुरुषे प्रमदायां स्थानान्तरेषु च" इति स्मृत्यनुसारेण पितुर्जायते मातुर्जायते अन्तरे स्थानान्तरे जायत इति श्रुतिवाक्यं प्रत्येकं व्याख्यातं भवति। मातापित्रोर्मध्य इति पितुर्मातुरन्तर इत्येकवाक्यतया व्याख्यातं भवति। सामान्यजन्मनीति। अनेन सामान्यतो गत्यन्तराभावादिति न्यायविवरणमुक्ततात्पर्यकं भवति॥

अत्राद्यपादे आद्याधिकरणषट्कं भूतवियोगाभावप्रतिपादकत्वेनैका पेटिका। तत्राद्ये—सामान्यतो भूतवियोगाभावे प्रश्नव्याख्यानरूपप्रमाणोक्तिः। द्वितीये—सर्वभूतगमने आर्थिककल्पना। तृतीये—तन्मूलभूतप्रमाणगतिलक्षणानुमानरूपविशेषप्रमाणोक्ति.। चतुर्थे—तस्य स्वरूपासिद्ध्याशङ्कापरिहार.। पञ्चमे आर्थिककल्पनायां कल्पकाभावमाशङ्क्य तत्परिहारः। षष्ठे तु—सर्वगमने प्रत्यक्षाश्रवणमाशङ्क्य विशेषश्रुत्युक्तिरिति। सप्तमाष्टमयो—वैराग्यादिसाधनावश्यकताप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका। तत्राद्ये—मोक्षस्य कर्मसाधनत्वान्न ज्ञानसाधनवैराग्यसाध्यत्वमित्याक्षेपपरिहार। द्वितीये तु भोगेनैव कर्मक्षयसंभवेन तन्मूलससारोच्छेद स्वयमेव सिध्यतीत्याक्षेपपरिहारः। नवमदशमैकादशसु पुनरावृत्तिलक्षणैकविषयप्रतिपादकत्वेन तदधिकरणत्रयमेका पेटिका। तत्राद्ये—गमनमार्गस्य स्मरणविषयत्वेनागमं गतिप्रकारेणैवेति प्राप्ते गतिप्रकारेणान्यथा चेति समर्थनम्। द्वितीये—पुनरावृत्तेश्चरणफलत्वाशङ्कापरिहारपूर्वकं करणफलत्वसमर्थनम्। तृतीयेअनिष्टादिकारिणामपि तत्समर्थनम्। यद्वा स्यादनिष्टादिकारिणा गतागतव्यतिरिक्तनरकादिदु खप्रतिपादकत्वेनोत्तरपेटिकायामन्तर्भावः। द्वादशत्रयोदशयो.—नरकरूपैकविषयप्रतिपादकत्वेनाधिकरणद्वयमेका पेटिका। तत्राद्ये—नरकाणां नित्यानित्यत्वविभागोक्ति। द्वितीये—दु.खत्वसमर्थनम्। चतुर्द-

---

१. सामान्येति। विशेषकारणरहितसाधारणजन्मनीति भाव.।

२. मोक्षस्येति। केवलकर्मसाध्यो मोक्ष इति वैराग्यादीना क्वोपयोग इति पूर्वपक्षी मन्यते।

३. तत्रेति। "तत्राद्ये" इति वर्तितव्यम्।

शेजीवानां गतिस्वातन्त्र्यनिरासः । पञ्चदशे—अन्धे तमसि दुःखमात्रसमर्थनम् । इतः परमापादसमाप्तेरधिकरणपञ्चकमागमनरूपैकविषयप्रतिपादकत्वेनैका पेटिका। तत्राद्ये—कर्मिणामागमने धूमादिदेवतैक्यतत्पदप्राप्तिनिरासार्थं धूमो भवतीत्यादि-श्रुत्यर्थतया तद्गतौ गतिरित्यादितत्स्वाभाव्यापत्त्युक्तिः । द्वितीये—कर्मिणः स्वर्गाद-वागतस्याचिरेण गर्भवासादिप्राप्तिसमर्थनम् । तृतीये—कर्मिणः स्वर्गादवागतस्य "त इह व्रीहियवाः" इत्यादिना प्राप्तव्रीह्यादिभावनिरासार्थमन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशोक्तिः । चतुर्थेऽस्य पितृप्रवेशसमर्थनम् । पञ्चमे—तस्य मातृ-योनिप्रवेशानन्तरं तत्र प्रागसिद्धशरीरप्राप्तिसमर्थनमिति ॥ २० ॥

इति योन्यधिकरणम् ॥ २० ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते श्रीमज्जयतीर्थ
पूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे
तृतीयाध्यायस्य प्रथमः पादः

---

1. तत्रेति । Text amended.

॥ श्रीवेदव्यासाय नमः ॥

# ॥ द्वितीयः पादः ॥

## (१) ॥ सन्ध्यधिकरणम् ॥

भक्तिरस्मिन्निती"दं" शब्दाभिप्रायमाह—**यद्वाढ्यर्थमिति**। ननु भगवन्महिम्नोक्तौ कथं भक्त्युत्पत्तिरित्यत आह—**माहात्म्येति**। **स्नेहो चेति**। माहात्म्यज्ञानकार्यत्वात् स्नेहस्येत्यर्थः। कथं तर्हि भक्तिरस्मिन् पादे उच्यत इति प्रतिपाद्योक्तिरित्यत आह—**एवं साधनवचनस्यापीति**। इतो भगवन्महिमैव स्नेहोत्पादक इति भावेन साधनस्येत्युक्तम्। यद्वा विषयिपरसाधनपदेन विषयस्य माहात्म्यस्योपलक्षणम्। **कारणान्तरेणेति**। वह्नित्वादिसामान्यधर्मपुरस्कारेण प्रमितानेककारणके कार्ये व्यतिरेकव्यभिचारस्यादोषत्वादिति भावः। **श्रुतमाहात्म्येऽपीति**। प्रतिबन्धकसत्त्वनिबन्धनान्वयव्यभिचारस्य दोषत्वे सर्वत्र कार्यकारणभावोच्छेदप्रसङ्ग इति भावः। **मत्सरादिनिरुद्धेति**। मात्सर्यादिदोषरहितानां सच्छिष्यादीनां ज्ञातमाहात्म्ये गुर्वादौ स्नेहोत्पत्तेरनुभवसिद्धत्वादिति भावः। तदेव क्वचिद्विविच्योच्यते, क्वचित्समर्थ्यत इति। "सन्ध्ये सृष्टि" इत्याद्यधिकरणसप्तकेन जन्मादिसूत्रोक्तं सृष्ट्याद्यष्टकर्तृत्वलक्षणमाहात्म्यं विविच्योच्यते। "सन्ध्येसृष्टि" इत्यनेन स्वाप्नपदार्थानां सृष्टिसंहारकर्तृत्वस्य "पराभिध्यानात्" इत्यत्र ज्ञानाज्ञानबन्धमोक्षहेतुत्वस्य "देहयोगाद्वासोऽपि" इत्याद्यधिकरणपञ्चकेन जाग्रदाद्यवस्थानियमकर्तृत्वस्य च विवेचनात्। "न स्थानतोऽपि" इत्यत्रानन्दमयाद्यधिकरणोक्तेश्वररूपाभेदसमर्थनम्। "अरूपवदेव हि" इत्यत्र "अन्यभावव्यावृत्तेश्च" इत्युक्तप्राकृतशरीरराहित्यसमर्थनम्।

१ **प्रमितेति**। यत्कार्यं प्रमिताऽनेककारणकं तस्मिन् कार्ये व्यतिरेकव्यभिचारो न दोषाय। यथा कारणान्तरेण वृष्टिर्दृष्टेति न कारीर्याद्युद्येष्टिनिष्प्रमितवृष्टिकारणताभङ्गो भवतीति विभावनीयम्।

२ **जाग्रदिति**। सर्वाऽवस्थाप्रेरको हि भगवान्।

"अत एव चोपमा" इत्यत्र प्रथमसूत्राद्युक्तजीवाभेदनिरसनविवेचनम्। "अम्बुवदग्रहणात्तु" इत्यत्र प्रथमसूत्रस्था"त"शब्देनोक्तस्य भक्तेर्मोक्षसाधनस्य च समर्थनम्। "वृद्धिह्रासभाक्त्वम्" इत्यत्र तस्यैव विवेचनम्। "प्रकृतैतावत्त्वम्" इत्यत्र द्वितीयसूत्रोक्तस्य स्थितिकर्तृत्वस्य समर्थनम्। "तदव्यक्तमाह हि" इत्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वसमर्थनम्। "उभयव्यपदेशात्" इत्यत्र समस्ताध्यायोक्तगुणित्वसमर्थनम्। "परमत" इति "स्थानविशेषात्" इत्यधिकरणद्वये आद्याध्यायोक्तब्रह्मगुणानामलौकिकत्वस्य ब्रह्मायानन्दादिगुणबिम्बत्वस्य च क्रमेणोपपादनेनोक्तविवेचनम्। "तथान्यप्रतिषेधात्" इत्यत्रादृश्यत्वाद्यधिकरणोक्ताव्यक्तत्वस्य प्रकारान्तरेण समर्थनम्। "अनेन" इत्यत्र जन्मादिसूत्रोक्ताशेषजगज्जन्मादिकर्तृत्वसमर्थनम्। "फलमत" इत्यत्र जिज्ञासासूत्रस्था"त"शब्दोक्तस्य फलदातृत्वस्य समर्थनमिति [1]कचिदुक्तस्य समर्थनम्। कचिद्विवेचनमित्यर्थः ॥

## सू०॥ ओं ॥ सन्ध्ये सृष्टिराह हि ॥ ओं ॥ १ ॥

स्वप्नविषयतत्प्रतीत्योरिति। अनेन "योने शरीरम्" इत्येतदवसाने सूत्रे जीवस्य जन्मावगतम्। जातस्य च स्वप्नाद्यवस्थासबन्ध प्रसिद्ध। तत्र स्वप्नावस्थाप्रेरकत्वलक्षणो महिमा भगवतोऽत्राधिकरणे निर्णीयत इति सुधायामुक्तानन्तरसङ्गति सूचिता। भगवदधीन इति। अत्रार्थज्ञानात्मक स्वप्न भगवदधीनो न भवत्युत भवतीति चिन्ता। तदर्थं स किमसन्नुत सन्निति। तदर्थं सत्त्वविशेषान्नित्यत्वाद्युपेतो न भवत्युत भवतीति। तदर्थमनुपपन्नानादिनित्यत्वकोऽयं नोत्पत्तिमानुतोत्पत्तिमानिति। तदर्थं किं कर्त्रुपादाननिमित्तादिकारणरहित उत तत्सहित इति। तदर्थं कर्त्रुपादानादिक प्रसिद्धकर्त्रादिसदृशमुत विसदृशमिति। तथा च कर्त्रुपादानादीना प्रसिद्धकर्त्रादिसादृश्येना सदृशकर्त्राद्युपलम्भनाभावादनुपपन्नानादिनित्यत्वकस्य सत्त्वविशेषान्नित्यत्वाद्य

---

1 कचिदिति। सकलभगवन्माहात्म्यस्य समन्वयाध्याये एवोक्तत्वादत्र किमवशिष्यत इति प्रश्नस्योत्तरतया कचित् पूर्वसिद्धार्थनं तस्य विविच्य प्रतिपादन कचित् समर्थन च क्रियत इति वर्णितम्।

योगेनासत्त्वप्राप्त्या न तस्य भगवदधीनत्वमिति पूर्वपक्षे प्रसिद्धविसदृशत्वे चानु-
पलम्भस्याबाधकत्वेन तादृशकर्त्रादियुक्तत्वेनोत्पत्तिमत्त्वादनुपपन्नानादिनित्यत्वो-
पपत्त्या सत्त्वसंभवात्तस्य भगवदधीनत्वमिति सिद्धान्ते च फलफलिभावो
ज्ञातव्यः। पश्चाद् दृष्टेः स्वप्नविषयस्यासत्त्वं वाच्यमिति **न्यायविवरणं**
योजयितुमाह—**सत्त्वेवक्तव्यमिति**[१]। पूर्वोत्तरकालमित्यनेन पश्चादित्येतत्पूर्व-
कालस्याप्युपलक्षकमित्युक्तं भवति। इदानीं तदभिप्रायमाह—**न च तदा**[२]
**दृश्यत इति**। प्रथमसूत्रस्थेन "आह हि" इत्यनेन निवर्तनीयं पूर्वपक्षं वक्तु-
माह—**न च वक्तव्यमिति**। तात्कालिक[३]विद्युदादिवदित्यर्थः। द्वितीय-
तृतीयसूत्रनिवर्तनीयपूर्वपक्षयुक्तिमाह—**कर्त्रिति**। तृतीयसूत्रस्थेन "मायामात्रम्"
इत्यनेन निवर्तनीयां पूर्वपक्षयुक्तिमाह—**किं च स्वप्नविषयमित्यादिना**।
तदेव **न्यायविवरणं** प्रकारान्तरेण व्याचष्टे—**तत्कालेति**। अनेन स्वप्नविषय-
कारणानामिति शेष उक्तः। स्वाप्नपदार्थानां सन्ध्य एव सृष्टत्वेन पूर्वकालीना-
दृष्टेरबाधकत्वेऽपि पश्चाद्दृष्टिर्बाधिका भवेदेवेत्यतः सौत्रं सृष्टिपदं निरोधस्याप्यु-
पलक्षकमित्यभिप्रेत्याह—**अनन्तरमेव निरोधश्चेति**। अनेन सृष्ट्वा संस्कारता-
मापाद्येति **न्यायविवरणांशो**ऽप्युक्ततात्पर्यो भवति। **अत एवेति**। "एष
सुप्तेषु जागर्ति" इति जीवसुषुप्तिकाले जागरणलिङ्गेन "तदेव शुक्रं तद्
ब्रह्म" इति वाक्यशेषेण चावगतादीश्वरत्वादेवेत्यर्थः। अनेनाशक्यकर्तृ-
शक्तित्वादीश्वरस्येति **न्यायविवरणांशो** व्याख्यातः। **प्रकरणप्राप्तत्वादिति**। P 16
"भुञ्जान" इति भोजनप्रकरणाद्वायुत्सर्जनाभावस्य भोजनसमानकालीनत्ववदिहापि
"सुप्तेष्वि"ति सुप्तिप्रकरणान्निर्माणस्य स्वप्नसमानकालीनत्वलाभेन स्वाप्नपदार्थनिर्मा-
तृत्वस्यैव लाभादित्यर्थः। सौत्रमायापदस्य मनोगतसंस्कारेश्वरेच्छारूपोभयपरत्व-
मिति प्रतिपादयन् मनोगतानिति भाष्यं व्याचष्टे—**मनोगतानित्यादिना**।

---

१. **सत्त्वेवक्तव्यमिति**। स्वप्नस्य सत्त्वे तद्विषयस्वरूपोपपादनं कर्तव्यम्। यथा
विषयो नित्योऽनित्यो वेति। तन्न संभवतीति पूर्वपक्षाभिप्राय।

२ न चेति। Text amended.

३. **तात्कालिकेति**। वस्तुतस्तु विद्युतः शुक्तिरजतवैलक्षण्यं स्पष्टमेवेति
दृष्टान्ताऽनानुगुण्यं च द्रष्टव्यम्। तात्कालिकत्वमात्रे दृष्टान्त इति स्यात्।

**निर्मितमिति** । अनेन निर्मितमित्यनुव्याख्यानानुसारेण सौत्रो "मात्र" शब्दो व्याख्यात । बाह्यार्थक्रियासामर्थ्यरहितत्वरूपस्य कार्त्स्न्येनानभिव्यक्तस्वरूपत्वस्य कथं मायामात्रत्वे हेतुत्वमित्यतो नायं तत्र हेतु, किं तु स्वाप्नपदार्थाना परिशेषेण मायामात्रत्व साधयितु प्रसक्तेषु प्रकारेषु कल्पितत्वनित्यत्वरूपयो प्रकरणयो 'सन्ध्ये सृष्टि' इत्यादिना प्रतिषेधयोर्बाह्यमृदादिकारणत्वरूपप्रकारान्तरप्रतिषेध इत्यभिप्रेत्य प्रवृत्तम् । कार्त्स्न्येनानभिव्यक्तस्वरूपत्वादिति सौत्रहेतो साध्यप्रदर्शनपर **नान्येन साधनेनेति** भाष्यमवतारयति—**कुतोऽस्येत्यादि** । **बाह्यमेवत्वाकारणमिति** । उपादानकारणमित्यर्थ । अनादिनित्यत्वे दोषान्तरमाह—**द्वितीय**—इति । **अनेने** ति। व्यावर्त्यकथनेनेत्यर्थ । **सम्यगभिव्यज्येरन्निति** । जलाहरणादिबाह्यार्थक्रियासमर्था स्युरित्यर्थ । भाष्याभिप्रेतं परिशेषानुमान सूचयन्नाह—**अत इति** । तथा च स्वाप्नविषया वासनोपादानका उत्पन्नभावत्वे सति वासनाभिन्नानुपादानत्वाद्व्यतिरेकेण घटवदिति परिशेषानुमान । **सस्कारोपादानका** एवेति । सिध्यतीति भाव । **दर्शनसभवादिति** । नै चातीन्द्रियोपादानकानामैन्द्रियकत्वानुपपत्ति । अतीन्द्रियत्वाद् व्यणुकोपादानकत्र्यणुकस्येनातीन्द्रियसस्कारोपादानकानामपि स्वाप्नार्थाना दर्शनसभवादिति । **प्रतीतेरिति** । अनेन जाग्रत्त्वप्रतीतिमात्रस्य भ्रान्तित्वादिति **न्यायविवरणमप्युक्तार्थं** भवति । तथा च स्वाप्नपदार्थेषु यज्जाग्रत्त्व तस्यान्यथात्वम् । बाध्यत्वमिति यावत् । सा तज्जाग्रत्त्वविषयिणी प्रतीतिरन्यथात्वहेतुकृता । बाध्यत्वहेतुजन्या भ्रान्तिरिति योजनेत्यर्थ ।

---

१ **अनेनेति** । अत्र **माया**शब्दो न मायावादसम्मत इति बोद्धव्यम् । सदसद्विलक्षणत्व ज्ञानजन्यत्व भ्रमप्रतियोगित्वादिलक्षणमिथ्यात्वपरो न भवति । जैवमानससस्कारभगवदिच्छोभयपरसौत्र**माया**शब्द इति भाव ।

२. **न चेति** । स्वाप्नस्यातीन्द्रियसस्कारोपादानकारणता युज्यत इति द्रष्टव्यम् । यथा त्र्यणुकस्यातीन्द्रियद्व्यणुकोपादानता ।

३ **प्रतीतेरिति** । बाध्यकारणामत्वादिति भाव ।

ननु त्रिसूत्र्या सर्वशङ्कोद्धारेण स्वाप्नपदार्थानां सत्त्वस्य व्यवस्थापितत्वात् "सूचकश्च" इति सूत्रं किमर्थमित्यतो यत्प्रथमसूत्रे स्वाप्नपदार्थानां सत्यत्वे उत्पत्तिविनाशत्वं हेतुत्वेनाभिप्रेतं तस्य स्वाप्नपदार्था असन्तः अनादिनित्यत्वरहितत्वे सति वासनाभिन्नानुपादनकत्वाच्छुक्तिरजतादिवदितिपराभिप्रेतप्रतिपक्षानुमाने बाधाप्रयोजकत्वप्रदर्शनार्थमिदं सूत्रमित्याशयेन साधनान्तराभावेऽपीत्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे—**ननु यदीत्यादिना**। यद्वा स्वाप्नपदार्था न बाह्यमृदाद्युपादानका बाह्यार्थक्रियासामर्थ्यरहितत्वादित्यनुमानस्य तर्कपराहतिपरिहारार्थं सूत्रमित्याशयेनापादनस्याप्रयोजकत्वं तदुपपादनाय सत्त्वस्यान्यथासिद्धिं च तत्प्रतिपादनाय साधनान्तराभावे अपीत्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्योत्तरग्रन्थमवतार्य व्याचष्टे—**ननु यदीत्यादिना**। न चाकाशदौ ज्ञानादौ च व्यभिचारः। अनादिनित्यत्वरहितत्वे सतीति विशेषणस्य बाह्यपदस्य वासनाभिन्नार्थकत्वस्य विवक्षितत्वादिति भावः। अशुभलक्षणाभावसूचकत्वे भाष्ये उपलक्षकत्वेनाभिप्रेतां श्रुतिमाह—**एवमिति**। **इति सूचितमिति शेष** इति। तथा च न केवलं शुभाशुभसूचकत्वं श्रुतिसिद्धम्। किं तु दर्शनार्थाच्च प्रत्यक्षादपि सिद्धमित्यर्थ इति भावः। **अन्यथा ज्ञातस्येति**। "आदित्यो दृश्यते" इत्यधिष्ठानप्राधान्येनोक्तेरेवमुक्तम्॥

वस्तुतस्तु "सर्पभ्रमादावपि हि ज्ञानमस्त्येव तादृशम्।
"तदेवार्थक्रियाकारि तत्सदेवार्थकारकम्"

**इत्यनुव्याख्यानोक्त**रीत्याधिष्ठानस्यान्यथात्वज्ञानमेव सूचकमिति ज्ञातव्यम्। ननु विद्यमानस्याप्यधिष्ठानस्यानुक्तिः संभवतीत्यत आह—**न चाधिष्ठानमिति**॥ सूत्रक्रमस्तु—प्रथमसूत्रे स्वाप्नपदार्थानां सत्त्वसिद्ध्यर्थं सृष्टिनिरो

---

१. **नन्विति**। "सन्ध्ये सृष्टिराह हि", "निर्मातारं चैके पुत्रादयश्च"; "मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्" इति सूत्रत्रयेण सकलाऽनुपपत्तिपरिहारेण स्वप्नस्य सत्यत्वे साधिते "सूचकश्च" इति सूत्रारम्भस्य प्रयोजनं किमिति शङ्कते।

२. **तथाचेति**। श्रुतिसिद्धार्थसंवादिप्रत्यक्षमपि प्रमाणमस्तीति भाव.।

३. **न चेति**। अत्राधिष्ठानं नास्तीति द्रष्टव्यम्।

धोक्ति । सृष्टिनिरोधयो कर्तृसापेक्षत्वात् द्वितीये तदुक्ति । तृतीये सृष्टिहेतुभूतोपादानाद्युक्ति । तृतीयसूत्रेण "अनभिव्यक्तस्वरूपत्वात्" इति व ह्योपादानकत्वाभावोक्तावेव प्रतिपक्षानुमानोत्थानात् । चतुर्थे—तस्य बाधप्रयोजकत्वोक्तिरिति ॥ १ ॥

॥ इति सन्ध्यधिकरणम् ॥ १ ॥

---

## (२) पराभिध्यानाधिकरणम् ॥

### सू०॥ ओं ॥ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ओं ॥ ५ ॥

**स्वप्नतिरोधायकत्वमहिम्न** इति । पूर्वाधिकरणे स्वप्नप्रदर्शकत्वमभिधायानन्तर तत्तिरोभावकत्वं विचार्यते इत्यनन्तरसगतिरिति भाव । **भगवदधीन** इति । अत्र स्वप्नतिरोभावो भगवदनधीन उत तदधीन इति चिन्ता । तदर्थं बाह्यविज्ञानस्य स्वातन्त्र्येण स्वप्ननिरोधायकत्वमस्त्युत नेति । तदर्थं

---

१ **प्रतिपक्षेति** । अत्र केचित्प्रत्यवतिष्ठन्ते—सन्ध्यधिकरणरीत्या माध्वना सिद्धान्त सत्य स्वप्न इति । यद्येव "वैधर्म्याच्च न स्वप्नादिवत्" इति सूत्रविरोध । तत्र जाग्रद्वैधर्म्याङ्गीकारेण स्वप्नस्याऽसत्त्वत्वङ्गीकारादिति ।

अस्य पूर्वपक्षस्य खण्डन "परतत्त्व-भ्रम निरास-नक्षत्रमालायां" विस्तरश कृतं तत्रैवाऽनुसन्धेयम् ।

२ **विचार्यत इति** । यद्यपि जाग्रत् स्वप्न सुषुप्तिभेदेन अवस्थात्रयंभवति । तुरीयावस्था चतुर्थीति । महोपनिषदि तु—

"बीजजाग्रत्तथा जाग्रन्महाजाग्रत्तथैव च ।
जाग्रत्स्वप्न तथा स्वप्न स्वप्नजाग्रत्तथैव च ।
सुषुप्तिरिति जीवस्य सप्तावस्था प्रकीर्तिता ।
अवस्थासप्तकल्याणान् स्वरूपानन्दभोजनम् ।
मोक्षावस्थाऽष्टमी ज्ञेया या प्राप्य न निवर्तते ।
तस्मात् सर्वप्रयत्नेन मोक्षार्थे योगमभ्यसेत् " ॥ इति ।
मन्त्र विरोध इति शङ्कयम् । अवस्थानामन्तर्भावसंभवात् ।

बाह्यविज्ञानस्यैव स्वाप्नप्रतीतिहेतुत्वमस्त्युत नेति । तदर्थं बन्धमोक्षयोरज्ञान-ज्ञानाधीनत्वमेवोत नेति । अविज्ञानमात्रेण स्वप्नप्रतीत्या ज्ञानशक्त्यैव स्वप्न-तिरोधानं नेशेनेति **न्यायविवरणं** मनसि निधाय पूर्वपक्षमाह—**बाह्याविज्ञा-नादेवेत्यादिना** । ननु पूर्वाधिकरणे भगवतः स्वप्नप्रदर्शकत्वमुक्तम् । यथोक्तं भाष्यादौ दर्शयतीति । अतोऽसिद्धो हेतुरिति चेत्, न; अन्वयव्यतिरेकाभ्यां विज्ञानस्यैव स्वप्नप्रतीतिं प्रति हेतुत्वसिद्धेस्तदप्यसम्प्रतिपन्नमिति तदाक्षेपेण प्रवृत्ते-रिति भावः । **ज्ञानाज्ञानयोरचेतनत्वेनास्वातन्त्र्यादिति** । अनेन ज्ञानाज्ञान- P 15
योर्जडत्वादस्वातन्त्र्यादिति **न्यायविवरणांश** उक्तार्थो भवति । **बन्धको भवपाशेनेति** । सर्वस्येशहेतुत्वे मानाच्चेति **न्यायविवरणानुसारेणैवमुक्तम्** । [1]ननु तदाविर्भावततिरोधानयोर्बाह्याविज्ञानतज्ज्ञानान्वयव्यतिरेकानुविधायित्वदर्शन-विरोध इत्यतस्तन्मात्रनिमित्तत्वे मानाभावादिति **न्यायविवरणानुसारेण** तस्या-न्यथासिद्धिमाह— **ते त्विति** ॥ २ ॥

॥ इति पराभिध्यानाधिकरणम् ॥ २ ॥

---

## (३) ॥ देहयोगाधिकरणम् ॥

## सू० ॥ ओं ॥ देहयोगाद्वासोऽपि ॥ ओं ॥ ६ ॥

स्वप्ननिरूपणसङ्गतेति । "पराभिध्यानात्तु तिरोहितम्" इति स्वप्नति-रोधानोक्तौ तन्निमित्तत्वेन सङ्गतबाह्यज्ञानरूपजाग्रदवस्थाविचारादनन्तरसङ्गतिरिति भावः । **किमीश्वराधीनेति** । अत्र जाग्रदवस्था किमीश्वराधीना न भवत्युत भवतीति चिन्ता । तदर्थं तस्याः स्वातन्त्र्येण कालाधीनत्वमस्ति न वेति । तदर्थं कालाधीनत्वग्राहिप्रत्यक्ष स्वातन्त्र्यांशे प्रमोन भ्रम इति । कालापेक्षयैव जाग्रदिति **न्यायविवरणानुसारेण** पूर्वपक्षमाह—**न जागरणमिति** । अनेनावधारणव्या-वर्त्यमुक्तं भवति ॥

---

१. नन्विति । "तदाविर्भावः" इति वर्तितव्यम् ।

ननु कालस्याप्यचेतनत्वेन पूर्वाधिकरणन्यायेनैव निराससंभवेन कथमेतदधिकरणोत्थानम्? न च पूर्वाधिकरणसिद्धान्तयुक्त्यतिदेशार्थमेतत्प्रवृत्तिः। अत एवानुव्याख्याने तदेवेति पूर्वाधिकरणसिद्धान्तन्यायातिदेशोऽत्र कृत इति वाच्यम्; अभ्यधिकाशङ्काभावेनातिदेशस्यैवानुपपत्तिरिति चेत्, न; स्वप्नप्रतीतितत्तिरोधानयोः स्वातन्त्र्येणाज्ञानज्ञानहेतुकत्वदर्शनस्य भ्रमत्वे "स्वप्नादिबुद्धिकर्ता" इति ज्ञानाज्ञानस्वातन्त्र्यप्रतिपादकविशेषप्रमाणरूपबाधकवज्जागरावस्थायाः स्वातन्त्र्येण कालाधीनत्वग्राहिप्रत्यक्षस्य बाधकाभावादित्यभ्यधिकाशङ्कया स्योत्थानात्। अत एवोक्तम्—**न चास्य प्रत्यक्षस्य बाधकमस्तीति**॥

यद्वा भवत्ववस्थान्तराणां भगवदधीनत्वं न जाग्रदवस्थायाः; किं तु जीवाधीनैव सा। तत्र जीवस्य देहादिकं ममैवेति स्वातन्त्र्यप्रतीतिदर्शनात्। न चेयं भ्रान्तिः; जीवस्य चेतनत्वेन पूर्वोक्तन्यायस्याबाधकत्वाद्बाधकान्तराभावाच्चेति पूर्वपक्षोत्थानान्नैतदारम्भवैयर्थ्यम्। अत एव सूत्रे "जाग्रत्" इत्येव वक्तव्ये "देहयोगाद्वासः" इत्युक्तम्। व्याख्यातं च भाष्ये देहयोगेनेति। विवृतं टीकायां **देहाभिमानिनेति**। एतदेवाभिप्रेत्योक्तं **न्यायविवरणे** चेतनान्तरस्यास्वातन्त्र्यादिति। अत एव च भाष्ये स्वातन्त्र्याभिमानस्य भ्रमत्वोपपादनाय जीवस्यापि भगवदधीनत्वप्रतिपादनस्य स एव जागरिते स्थापयतीति विशेषप्रमाणस्योक्तिरिति। देहयोगेन वासस्य सुप्त्यादावपि सद्भावेन जाग्रदिति कथं तत्तात्पर्योक्तिरित्यत आह—**देहाभिमानिनेति**। **परभिध्यानादेवेति**। अनेन पूर्वसूत्रात् "पराभिध्यानात्तु" इत्येतदत्रानुवर्तत इत्युक्तं भवति। **तस्याचेतनत्वेनेति**। अनेनाचेतनत्वादेव कालस्येति **न्यायविवरणं** व्याख्यातं भवति। उपलक्षणमेतत्। चेतनान्तरस्याप्यस्वातन्त्र्यादित्यपि तत्रोक्तं द्रष्टव्यम्॥ ३॥

॥ इति देहयोगाधिकरणम्॥ ३॥

---

१. ननिवति। जाग्रदवस्था किं कालाधीनेति विचार्यते।

२. यद्वेति। जाग्रदवस्था जीवाधीना किं न स्यादित्याक्षेपः।

३. भ्रमेति। जीवस्य स्वातन्त्र्याभिमानो भ्रम इति भावः।

## (४) ॥ तदभावाधिकरणम् ॥

सू०॥ ओं ॥ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ओं॥ ७ ॥

**अवशिष्टा सुषुप्तिरिति**। जाग्रदवस्थादौ श्रान्तस्य श्रमापनोदनार्थं सुप्तिरिति सात्र विचार्यत इत्यनन्तरसङ्गतिरिति भाव.। स्वप्नजाग्रद्वत् सुप्तेर्भगवदधीनत्वं कुतो न विचार्यत इत्यत आह—**भगवदधीनत्वे विवादाभावादिति**। न चैवं सुप्तिस्वरूपमात्रविचारपरस्य भगवन्माहात्म्याप्रतिपादकत्वे न पादान्तर्भाव इति वाच्यम्; सुप्तिस्वरूपविचारपरस्यापि सुप्तेर्भगवदधीनत्वलक्षणमाहात्म्याप्रतिपादकत्वेऽपि सुप्तप्राप्यत्वलक्षणमाहात्म्यप्रतिपादकत्वात्। एतदेवाभिप्रेत्योक्तं प्राक्—**सुप्तप्राप्यत्वमहिम्न** इति। अज्ञानकालयोरचेतनत्वेनाम्वातन्त्र्यस्योक्तत्वात्तद्रिक्तकारणस्याप्रतीतेरभ्यधिकाशङ्काभावत् पूर्वसूत्रे "वासोऽपि" इति सौत्रा"पि" पदेनानुक्तस्यापि समुचितत्वाभिप्रेयेण भाष्ये स्वप्न इति श्रुतिशेषोदाहरणाच्च पूर्वन्यायेनैव (सौत्रा"पि"पदेनानुक्तस्यापि समुचितत्वाभिप्रायेण) सुप्तेरपि भगवदधीनत्वसिद्धौ तत्र विवादाभावे इति भाव। **परमात्मनि नाडीषु वेति**। अत्र सुप्ति· किं परमात्मन्येवोत नाडीष्वपीति चिन्ता। तदर्थं परमात्मनोऽन्यत्र सुप्त्यङ्गीकारे दु खप्राप्तिरस्त्युत नेति। तदर्थं नाडीपरमात्मनोर्विशेषणविशेष्यभावो नास्त्युतास्तीति। एवं च नाडी परमात्मनोर्विशेषणविशेष्यभावे एकस्योभयत्र सुप्त्यङ्गीकारस्य विरुद्धत्वेन परमात्मनोऽन्यत्रैव सुप्त्यङ्गीकारप्राप्त्या दु.खित्वप्रसङ्गेन परमात्मन्येव जीवस्य सुप्तिरिति पूर्वपक्षे विशेषणविशेष्यभावे चान्यत्रसुप्त्यङ्गीकारेऽपि परमात्मनि सुप्त्यङ्गीकारेण दु खाप्राप्त्या नाडीष्वपि सुप्तिरिति सिद्धान्ते च फलफलि भाव·। परमात्मनोऽन्यत्रावस्थाने दु खित्वप्राप्तेर्नाडीषु सुप्तिर्न भवतीति न्यायविवरण मनसि निधाय पूर्वपक्षमाह—**परमात्मन्येवेति**। अनेन नाडीषु सुप्तिर्न भवतीत्येतद्व्याख्यातम्। परमात्मनोऽन्यत्रावस्थान इत्यनेन परमात्म-

---

१. **श्रान्तस्येति**। "स्वाप प्रापयति श्रमापहृतये" इति **विष्णुतत्त्वविनिर्णय**टीकामङ्गलाचरणपद्ये द्रष्टव्यम्।

२ **विवादाभाव इति**। एवमपि सुप्तप्राप्यत्वरूपभगवन्महामहिमान प्रतिपाद्यत इति भाव।

नोऽन्यत्रेत्यादिव्याख्यातं भवति। इष्टापत्तिमाशङ्क्य परिहरति—**न च मुक्तवदिति। किमपराद्धं सुखेनेति।** सञ्जीवानां किञ्चिदभिव्यक्तस्वरूपसुखस्यान्येषां परमात्मसंबन्धलक्षणनिमित्तोत्पन्नसुखस्य चानुभवादिति भावः। यथोक्तं षट्प्रश्न-भाष्यटीकायाम् "यस्मादेवं परमेश्वरतेजसाभिभूतो भवत्यथ तस्मात्तत्सन्निधान-सामर्थ्योद्भूतरूपं यत्सुखं तदस्मिन् शरीरे भवतीति। सुप्तौ सर्वेन्द्रियाणा-मुपरतत्वात् किं निमित्तं सुखं केन वा जीवोऽनुभवतीत्यभिप्रायेण परमेश्वरसन्निधान-सामर्थ्योद्भूतं सुखमात्मस्वरूपज्ञानेनानुभवतीति परिहारोऽभिप्रेत" इति। अत्रोद्भूतरूपमित्यनेन योग्यानां स्वरूपसुखाभिव्यक्तिरन्येषां परमात्मसंबन्ध-निमित्तजन्यं सुखमुच्यत इति संप्रदायविद·॥

ननु कथं दु:खाभावोऽनुमीयते? किं देवदत्तसुप्त्यवस्था न देवदत्त-समवेतदु:खोपेता तत्कारणशून्यत्वादिति वा सुप्त्यवस्थाविशिष्टो देवदत्तो न दु:खसमवायी तत्कारणरहितत्वादिति वेति विकल्पं मनसि निधायाऽऽद्ये दोष-माह—**पक्षभूतावस्थास्मरणाभावेनेति।** दु:खाभावानुमानवादिना सुषुप्तिकाले ऽवस्थानुभवस्याङ्गीकारात्। अन्यथा दु:खाभावानुभवस्यापि संभवेन तत्स्मरणा-पलापासंभवादिति भाव। द्वितीयं दूषयति—**आत्मेति।** न च देवदत्तमात्र-पक्षीकारेणावस्थास्मरणाभावो न दोषायेति वाच्यम्; तथात्वे जाग्रदाद्यवस्था-विशिष्टस्य देवदत्तस्यदु·खसमवेतत्वेन तदभावसाधने बाधप्रसङ्गात्, सौषुप्तिक-दु:खाभावासिद्धयार्थान्तरत्वाच्चेति। "तदभावो नाडीष्वात्मनी"ति सूत्रभागं योजयति—**सुप्तिर्जीवस्येति।** नाडीस्थेति भाष्यं व्याख्यातुमाह—**न चैकस्येति।** उभयस्वीकारोपपत्तौ मानस्य क्लृप्त्यकारणमित्यनवस्थितिदोषा-दतिप्रसङ्गादिति **न्यायविवरणमिति** श्रुतेरिति भाष्यैकवाक्यत्वेन व्याचष्टे—**एवं चाभ्युपगमेनेति।** तथा चैवं वाभ्युपगमेनोपपन्नेन प्रमाणभूतश्रुति-व्यवस्थोपपत्तावित्यनेनोभयस्वीकारेण प्रमाणभूतश्रुतिद्वयव्यवस्थोपपत्ताविति।

---

१. **सञ्जीवानामिति।** सुषुप्तौ सञ्जीवानामीषदाविर्भावो भवति स्वरूपानन्दस्येति वेदितव्यम्।

२. **संप्रदायविद इति।** परमपरिशुद्धसकलप्रमाणसचिवपूर्णप्रज्ञसंप्रदायविद इति विभावनीयम्।

तदनभ्युपगम इत्यनेन मानवलृप्त्यकारणमित्येतन्मानस्य श्रुतिद्वयस्य या क्लृप्तिः नाडीस्थपरमात्मनि सुप्तिरिति तदकारणं तदनभ्युपगम इति कृत्वेति सर्वत्राप्यवर्थ्यैवेत्यतिप्रसङ्ग इत्यनेनानवस्थितिदोषादतिप्रसङ्गादित्येतद्व्याख्यातं भवति ॥ ४ ॥

॥ इति तदभावाधिकरणम् ॥ ४ ॥

---

## (५) ॥ अतःप्रबोधाधिकरणम् ॥

### सू०॥ ओं ॥ अतः प्रबोधोऽस्मात् ॥ ओं ॥ ८ ॥

**सुप्तप्रबोधकत्वेति** । सुप्तिविचारानन्तरं तत्प्रबोधो[1] विचार्यत इत्यनन्तरसङ्गतिरिति भाव· । **भगवदधीन** इति । अत्र सुप्तप्रबोधो भगवदेकाधीनो न P. भवत्युत भवतीति चिन्ता । तदर्थं भेरीताडनादीनां पृथक्कारणत्वमस्ति न वेति । तदर्थं प्रबोधस्य भेरीताडनाद्यन्वयव्यतिरेकानुविधायित्वप्रदर्शनं पृथक्त्वे प्रमा· रूपमुत भ्रम इति । प्रबोधस्य पृथगपि कारणदृष्टे. क्वचित्तदेवेति **न्यायविवरणं** मनसि निधाय पूर्वपक्षमाह—**नेश्वरैकाधीनो बोध**[2] इति । एतेन क्वचित्तदेवेति साध्यप्रतिपादकांशो व्याख्यातः । पृथगपि कारणदृष्टेरिति हेतुवाक्यं योजयति—**प्रबोधकारणानामिति** ॥

ननु "देहयोगाद्वासोऽपि" इत्यत्र कालस्याचेतनत्वेन जागरावस्थायाः कालाधीनत्वग्राहिप्रत्यक्षस्यापि निमित्तमात्रविषयस्योक्तत्वात्तद्वदत्रापि भेरीताडनादीनामचेतनत्वेन सुप्तिप्रबोधस्य तदधीनत्वग्राहिप्रत्यक्षस्यापि निमित्तमात्रविषयत्वसंभवात् कथं पूर्वपक्षोत्थानमिति चेत्, न । तत्र जागरावस्थाया कालमात्राधीनत्वेन पूर्वपक्षोऽत्र तु सुप्तिप्रबोधस्येश्वराधीनत्वमङ्गीकृत्यैव क्वचिद्भेरीताडनादी-

---

१. **तत्प्रबोध इति** । सुप्ते प्रबोध इति वा, सुप्तस्य प्रबोध इति वा स्यात् ।

२ **बोध इति** । "प्रबोध" इति "मध्वविलास" पुस्तकपाठ ।

नामपि स्वातन्त्र्येण कारणत्वमिति पूर्वपक्ष इति भेदात्। अत एवोक्तं न्यायविवरणे तत्र कालापेक्षयैवेति। अत्र तु क्वचित्तदेवेति ॥

ननु भेरीताडनादीनामचेतनत्वेनास्वातन्त्र्यात् कथं क्वचिदपि सुप्तप्रबोधस्य तन्मात्राधीनत्वेन पूर्वपक्ष इति चेत्; न। तेषामपि कारणत्वस्य प्रत्यक्षत एवोपलब्धेः। न चेयं भ्रान्तिः; जागरावस्थायाः कालाधीनत्वग्राहकप्रत्यक्षस्य भ्रमत्वे स एव जागरिते स्थापयतीति विशेषश्रुतिरूपबाधकवदत्र तदभावात्। तदिदमाह— **न च तेषामकारणत्वे हेतुरस्ति। येन जानीमः सा प्रतीतिर्भ्रान्तिरिति**। ननु जीवस्य तस्मिन्नेव सुप्तत्वेऽपि सुप्तप्रबोधस्येश्वराधीनत्वं कुत इत्यत आह—**सावधारणश्रुतिविरोधादिति**। अनेन "न ऋते त्वत्क्रियते किञ्चनारे" इति श्रुतेस्तत्रापि ईशकृतत्वे सम्यग्ज्ञानादिति न्यायविवरणमप्युक्ततात्पर्यकम्। तत्रापि "त्वदृते" इत्यवधारणार्थस्योक्तेरिति ॥ ५ ॥

॥ इति अनःप्रबोधाधिकरणम् ॥ ५ ॥

---

## (६) ॥ कर्मानुस्मृत्यधिकरणम् ॥

## सू० ओं ॥ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॥ ओं ॥ ९ ॥

**मर्यावस्थानामिति**। प्रत्येकमवस्थानां भगवदधीनत्वोक्त्यावैवैतद्विचाराङ्गसंशयोत्थानादनन्तरसङ्गतिरिति भावः। **सर्वजीवानामिति**। अत्रावस्थाः किं केषाञ्चित् किञ्चित्कालीना एव भगवदधीना उत सर्वजीवानां सार्वकालीना इति चिन्ता। तदर्थमीश्वरः किं लौकिकराजादिवदुत नेति। राजादीनां पृथग्दर्शना-

---

१. सेति। ' तत्प्रतीतिः" इति "मध्वविलास"पुस्तकपाठः।

२. **मयस्थानामिति**। जाग्रत्स्वप्नसुषुप्त्यवस्थानामिति यावत्।

३. **तदर्थमिमि**। Text amended.

दीशान्तरकल्पनेति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह— **न सर्वेषामिति** । केषाञ्चित् काश्चिदेवेत्यनेनेशान्तरकल्पनेति न्यायविवरणमुक्तार्थं भवति । राजादीनामिति हेतुं व्याख्याति—**राजादीनामिति । न चात्र प्रमाणमिति** ।

" स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च "

इत्यादितत्तदधिकरणोदाहृतवाक्यानां केषाञ्चित् कदाचित् स एवेत्यर्थोपपत्त्या सावकाशत्वाद्विवक्षितार्थे न विशेषप्रमाणत्वमिति भाव । ननु 'एष ह्येव' इति । श्रुतिरवस्थाप्रेरकत्वे भगवत कथं प्रमाणमित्यत आह—**स्वप्नादिप्राप्तेश्चेति । एष स्वप्नानिति श्रुतेश्चेति** । उपलक्षणमेतत् ।

" देशकालविशेषेऽपि स्वप्नादीनां स एव हि ।
तिरस्कर्ता च कर्ता च न खण्डेश स राजवत् ॥"

इति **न्यायविवरणोक्ता** श्रुतिरपि ग्राह्या ॥

ननु ईशान्तरसत्त्वेऽपि *'स एष स्वप्नान्दर्शयति'* इति श्रुते सावकाशत्वात् कथ विवक्षितार्थसाधकत्वमित्यत आह—**अवधारणस्येति** । एष "एव परमानन्द" इति श्रुतस्यावधारणस्यैव "स्वप्नान् दर्शयति" "एष प्रबोधयती"त्यत्राप्यन्वयेन विवक्षितार्थस्य भगवत एव सर्वेषां सर्वावस्थाप्रेरकत्वस्य सिद्धिरित्यर्थ । स्वप्नानिति बहुवचनेन सर्वपुरुषसंबन्धिसार्वकालिकावस्थालाभादेव "एव" इत्येवकारेणेशान्तरव्यवच्छेदसिद्धेरिति भावै ॥

ननु परमात्मन एवोपास्यत्वविधानेऽप्यवस्थाना भगवदधीनत्व कुत इत्यत आह—**अन्यस्यापीति** । अन्यस्यावस्थाप्रेरकत्वे तस्याप्युत्तमत्वेनोपास्यत्वप्राप्त्यात्मानमेवेत्यवधारण नोपपद्यत इति भाव ॥

---

१ **सावकाशेति** । ईशान्तरसत्त्वे स एवावस्थानियामक इति किं न स्यादिति शङ्का ।

२. **भाव इति** । विष्णु सर्वोत्तमो भगवानेक एवेति नेशान्तरसत्त्वशङ्कावकाश इति भाव । "एव" इत्येवकारलब्धोऽयमर्थ. ।

ननु सौत्र "च"शब्द किमर्थ समुच्चयार्थत्वस्यावधारणविरुद्धत्वादित्यत आह—**च शब्द इति** । ईशान्तरकल्पनारूपपक्षान्तरेत्यर्थ । सौत्र "मनुस्मृती"ति पदम् "अनुस्मृतेश्च" इत्यादिवत् प्रत्यभिज्ञापरमिति प्रतीतिनिरासार्थमनुसारिस्मृतेश्चेति व्याख्यातम् । तत्र स्मृतेरनुसारित्व नाम किमित्यत आह— **स्फुटमिति** ॥ ६ ॥

॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

---

## (७) ॥ मुग्धाधिकरणम् ॥

## सू० ॥ ओं ॥ मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ ओं ॥ १० ॥

अस्याधिकरणस्यानन्तरसङ्गतिं वदन् शास्त्रादिसङ्गतिमाह—**सर्वावस्थानामिति** । प्रधानावस्थाविचारानन्तरमेवावान्तरावस्थाविचारावसर इति भाव । न चैव "स एव च"इत्यत पूर्वमेवानेन भवितव्यमिति वाच्यम्, स्वप्नादिवन्न मोहोऽसङ्कीर्णावस्थेति ज्ञापनाय सूत्रकृता व्यवधानकरणादिति तात्पर्यम् । **मोहोऽत्रेति** । अत्र मोह किं भगवदर्धप्राप्तिरूपो न भवत्युत भवतीति चिन्ता । तदर्थमितरावस्थानतिरिक्त उत तदतिरिक्त इति । तदर्थं तद्व्यावर्तकधर्मोपेतो न भवत्युत भवतीति । मोहे ब्रह्मप्राप्तिरेव पृथगवस्थात्वादिति **न्यायविवरण** मनसि निधाय पूर्वपक्षमाह—**न मोह इति** । अनेन मोहे ब्रह्मप्राप्तिरित्येवेत्ययमशो व्याख्यात । पृथगवस्थात्वादिति हेतुवाक्य योजयति—**जाग्रत्स्वप्नयोरिति** । सकाशादिति शेष । हेतोरप्रयोजकता परिहरति—**अन्यथेति** । मोहो भगवदितरत्रेत्यङ्गीकार इत्यर्थ ॥

नन्वस्तु मोहो भगवदितरत्र तथापि तस्य जाग्रत्स्वप्नसङ्कीर्णता कुत इत्यतश्चोक्तम् । **जाग्रत्स्वप्नयोरिति** । पृथक् परमात्मन इति शेष । तथा च जाग्रत्स्वप्नयोरेव परमात्माऽप्रवेशरूपावस्थात्वान्मोहस्यापि अप्रवेशरूपत्वाङ्गीकारे

---

१ सूत्रकृता । भगवता बादरायणेनेति भाव ।

एतत्सङ्कीर्णता स्यादित्यर्थः । अत एव जाग्रत्स्वप्नाभ्यामिति वक्तव्येऽर्थद्वयानुगुण्याय जाग्रत्स्वप्नयोरित्युक्तम् ॥

नन्वत्र[1] ब्रह्मप्राप्तिरेवेतिवत् ब्रह्माप्राप्तिरेवेत्यपि पूर्वपक्षः कुतो न कृतः । तस्यापि पक्षस्यार्धप्राप्तिरूपसिद्धान्तविरोधित्वादिति चेत्, न ; प्राप्तिरेवेति पूर्वपक्षे मोहस्य सुप्तिसाङ्कर्यापादने सुप्तेरेकत्वेन तत्साङ्कर्यस्येष्टत्ववदप्रवेश एवेति पूर्वपक्षे मोहस्य जाग्रत्स्वप्नसाङ्कर्यापादने जाग्रत्स्वप्नयोः परस्परं पृथगवस्थात्वादेकस्योभयसाङ्कर्यस्य पूर्वपक्षिणः[2] इष्टत्वासंभवात् । न चान्यतरसाङ्कर्यमेवापाद्यम् ; उभयोरप्यप्रवेशावस्थात्वाविशेषेण विनिगमकाभावादिति । व्याख्यातुमिति । स्मृत्यैवेत्यर्थः । एवं चेति । अनेन परिशेषमानादर्धप्राप्तित्वावगमादिति न्यायविवरणमपि व्याख्यातम् ॥

नन्वेतावन्तं कालमहं मूर्च्छितो दुःखमभवमिति देशकालात्मावस्थादुःखानामनुभवात् कथं दुःखमात्रप्रतिस्मृतेरित्युक्तमित्यतो दुःखपदमनुभूयमानसर्वोपलक्षणम् । मात्रपदं तु तद्व्यतिरिक्तव्यवच्छेदपरमित्यभिप्रेत्याह—दुःखात्मकालेति ॥

ननु कण्ठहृदयमध्यप्रदेशावस्थानरूपमोहस्य पृथगवस्थात्वे दक्षिणकण्ठमध्यप्रदेशावस्थानस्यापि पृथगवस्थात्वं प्रसज्येताविशेषादित्यत आह—नातिदूरसामीप्यमिति । दक्षिणकण्ठमध्यप्रदेशस्य हृदयस्याद्दक्षिणाक्षिवदिति दूरत्वं कण्ठवदिति सामीप्यं वा नास्तीति मार्गतया तत्प्रवेशगतजीवस्य यत्रातिदूरसामीप्यं तज्जीवस्य मोहवच्चिरकालं नास्तीति हेतोस्तस्य पृथगवस्थात्वस्याप्रसङ्ग इति भावः । अतः परिशेषादिति । अनेन परिशेषादर्धप्राप्तित्वावगमादिति न्यायनिरणं प्रकारान्तरेण व्याख्यातम् । नन्ववस्थाशब्दस्य स्त्रीलिङ्गत्वात् त्रयोऽवस्था इति कथमित्यत आह—त्रयस्तिस्र इति । नात्र त्रयोऽवस्था इति सामानाधिकरण्यं येन लिङ्गव्यत्यासदोष इति पक्षान्तरमाह—दूरस्थत्वादिति ॥ P 153

---

१. नन्विति । पूर्वपक्षप्रकारे विवदते ।

२. पूर्वपक्षिण इति । "अप्रवेश एव" इति अथवा "ब्रह्माऽप्राप्तिरेव" इति पूर्वपक्षिण पक्षप्रदर्शनेऽनिष्टमायातीति ज्ञेयम् ।

मोहस्येश्वराधीनत्वशङ्काभावान्न चिन्त्यत इत्यत आह—**मोहकारणादीनामिति ।** अभिघातव्याध्यादीनामित्यर्थ । आदिपदेन तदुद्बोधकारणौषधादीना ग्रहणम् । अत एव भाष्ये सोऽपीत्यपिशब्दस्य मूर्च्छाप्रबोधन चेति स्मृत्यनुसारेण तदुद्बोधसमुच्चयार्थत्वं चेति भावः ॥ ७ ॥

॥ इति मुग्धाधिकरणम् ॥ ७ ॥

---

## (८) ॥ न स्थानतोऽधिकरणम् ॥

## सू० ॥ओं॥ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ओं ॥११॥

**सर्वावस्थाप्रवर्तकत्वेन प्रकृत** इति । तथा चातीताधिकरणेषु सर्वावस्थाप्रवर्तकत्वोक्तावस्थाना भिन्नत्वात्परमात्मनोऽपि भेद इति पूर्वपक्षोत्थानादनन्तरसङ्गतिः । यद्वा, युगपद्भिन्नस्थानत्वेन परमात्मनोऽपि भेदे भिन्नानां च तारतम्यमनुग्राह्यानुग्राहकभावश्चोपलब्ध इति तत्प्रसङ्गोऽपीति कथं "स एव च" इत्युक्तमिति सुधोक्तरीत्या "स एव च" इत्युक्ताक्षेपादनन्तरसङ्गति । न चैवं तदानन्तर्यमेव स्यादिति वाच्यम् ; सार्वदेशिकसार्वकालिकसर्वावस्थाप्रवर्तकत्वप्रदर्शनपरस्य "स एव च" इत्यस्यावस्थाविशेषप्रतिपादनपरात "मुग्धेऽर्धसपत्ति" इत्यतोऽनन्तरं कर्तव्यत्वेऽपि व्यत्यासे निमित्तस्योक्तत्वात् । **प्रतिशरीरमिति ।** अत्र विश्वादिरूपी परमात्मा प्रतिशरीर जाग्रदादिस्थानेषु स्थित किमन्योन्यं भिन्न उताभिन्न इति चिन्ता । तदर्थं भिन्नस्थानत्वानुमान किं विश्वादीना भेदसाधनमुत नेति । तदर्थं तदनुमानम् "एतमेव ब्रह्मेत्याचक्षते" इति श्रुतिबाधित न भवत्युत भवतीति । तदर्थमनुमान किं "कार्यकारणबद्धौ" इति श्रुत्युपोद्बलित न वेति । तदर्थमियं श्रुति "अयं वै हरय" इत्याद्यभेदप्रतिपादकश्रुतिबाधिता न भवत्युत भवतीति । तदर्थम् "अयं वै हरय" इत्याद्यभेदप्रतिपादि-

---

१ अभीति । Text amended.

२. सर्वेति । "सर्वावस्थाप्रेरकत्वेन" इति 'मध्वविलास'पुस्तकपाठ ।

काश्रुतिर्विश्वादिव्यतिरिक्तमत्स्यादिकतिपयरूपाभेदप्रतिपादकत्वेन सावकाशोत सर्वरूपाभेदविषयत्वेन निरवकाशेति। तदर्थं "कार्यकारणबद्धौ" इति भेदप्रतिपादिका श्रुतिर्निर्विषयोत सविषया वेति। तथा च भेदप्रतिपादकश्रुतेर्विषयान्तराभावे तत्प्रामाण्यायोगात्तत्सिद्ध्यर्थम् "अयं वै हरय" इति श्रुतेः कतिपयरूपविषयत्वेन सावकाशतया बाधकत्वाभावेन तदबाधितभेदश्रुत्युपोद्बलितत्वेन प्रबलस्य भिन्नस्थानत्वानुमानस्य "एतमेव" इति श्रुत्या बाधासंभवात्, अबाधितेन तेन विश्वादीनां भेदसिद्धिरिति पूर्वपक्षे, भेदश्रुतेः सर्वरूपविषयत्वेन प्रामाण्यसंभवात, सङ्कोचाभावेन "अयं वै हरय" इति श्रुते. सर्वरूपविषयत्वेन निरवकाशत्वे तद्बाधितभेदश्रुतेरनुमानोपोद्बलकत्वासंभवेन केवलानुमानस्य "एतमेव" इति श्रुतिबाधितत्वाञ्च तेन विश्वादीनां भेदसिद्धिरिति सिद्धान्ते च फलफलिभाव.। **सर्वशरीरेष्विति**। भिन्नस्थानत्वादिति हेतोः स्वरूपासिद्धिशङ्कापरिहारार्थमुक्तम्। **सर्वशरीरेषु जाग्रदादिस्थानेषु चेति**। भेदमात्रसाधने सिद्धसाधनत्वप्रसङ्गात् **अन्योन्यमिति**। न चैकस्यैव घटस्य कालभेदेन भिन्नस्थानत्वसंभवेनाप्रयोजको हेतुरिति वाच्यम्; युगपद्भिन्नस्थानत्वस्य हेतुत्वेन विवक्षितत्वात्। अनेन स्थानभेदाद्विष्णोरपि भेद इति **न्यायविवरणमपि** व्याख्यातम्॥

ननु भिन्नस्थानत्वं कथमन्योन्यं भेदसाधकम्। स्वाभेदेऽपि व्याप्तत्वेन भिन्नस्थानत्वोपपत्तेरित्यन्यथासिद्धिशङ्कामाशङ्क्य परिहरति—**न चाकाशादिवदिति। श्रवणादिति**[1]। तथा च तद्विरोधः स्यादित्यर्थ.। **असङ्गत इति**। आकाशस्य समग्ररूपेणानेकस्थानत्वाभावादिति भाव.। एतेन भिन्नस्थानत्वहेतोराकाशे व्यभिचार इत्यपि परिहृतम्। समग्ररूपेणेत्यस्य हेतुविशेषणत्वादिति। नन्वस्तु परमात्मनो भेदः। तथा च को दोष इत्यत उक्तं भाष्ये भेदानुग्राह्यानुग्राहकभाव इति। तदभिप्रायमाह—**तथा चेति। तत्प्रसङ्गश्चेति** "च"-शब्दसम्बन्धः। अत एव सुधायां तत्प्रसङ्गोऽपीत्युक्तम्। भिन्नानामनुग्राह्यानुग्राहकभावहीनोच्चादिभावनिबन्धनत्वाद्गुणतारतम्येत्युक्तम्। तथा च भेदाद्गुणतरातम्यं ततश्चानुग्राह्यानुग्राहकभाव स्यादित्यर्थ॥

---

१. **सावकाशेति**। सङ्कुचितार्थेति यावत्।

२. **श्रवणादिति**। विश्वादीनां प्रत्येकं रूपश्रवणादिति भाव.।

ननु भिन्नानामपि केषाञ्चिद्गुणतारतम्यानुपलम्भाद्व्यभिचार इति चेत्, न ; चेतनानां परस्परभेदस्योत्सर्गतो[1] गुणादितारतम्यव्याप्तत्वात् साम्यग्राहकप्रमाणरूपापवादनिबन्धनस्यादोषत्वात् । तदुक्तम्—

"उत्सर्गतोऽपि यत्प्राप्तमपवादविवर्जितम् ।
व्यभिचार्यपवादेन मानमेव भविष्यति ॥"

इति । श्रुतावेतमित्येकवचनश्रवणादाह—**एकमिति** । ब्रह्मशब्दार्थमाह—**पूर्णगुणमिति** । ननु सूत्रे "परस्योभयत्वम्" इत्यल्पाक्षरेणैव भेदाभावोक्तिसंभवे "उभयलिङ्गम्" इति किमर्थमुक्तमित्यत आह—**एकैकदेशे**[2] इति । परस्य परमात्मनः । असिद्धं प्रमाणाभावात् । न केवलमप्रामाणिकम् । किं तु सप्ताङ्ग एकोनविंशतिमुख इत्यादिप्रमाणविरुद्धं चेत्यर्थः । तथा च परस्योभयत्वं नेत्येवोक्तौ पाणिपादाद्यवयवरूपैकदेशतोऽप्यनेकस्थानत्वेन भेदाभावो विज्ञायेत । उभयलिङ्गेनेत्युक्तौ तु भिन्नस्थानेषु विद्यमानानां समग्ररूपाणां भेदमात्रनिषेधो विज्ञायेत । विशिष्टनिषेधस्य विशेषणनिषेधपर्यवसानादिति भावः ॥

ननु विश्वतैजसयोर्द्विविधबन्धवत्त्वेन प्राज्ञतुरीयाभ्यां भेदेऽपि तयो. परस्परं भेदकधर्माभावेन भेदो न स्यादित्यतोऽविद्यारूपकारणबद्धत्वस्योभयत्राविशिष्टत्वेऽपि कार्यबद्धत्वे वैलक्षण्यसद्भावेन तयोर्भेद इत्यभिप्रेत्य तद्वैलक्षण्यं दर्शयन् "कार्यकारणबद्धौ" इति श्रुत्यर्थमाह—**कार्यभ्रमरूपेत्यादिना** । अविद्याकार्यस्वातन्त्र्यादिविषयभ्रमरूपजाग्रद्बद्ध इत्यर्थः । "देहादीशवशे स्थितं भ्रमति"

---

१. **उत्सर्गत इति** । यत्र पारस्परिकभेदस्तत्र गुणादितारतम्यमिति व्याप्तिरुपलभ्यत इति भाव· ।

२. **एकैकदेश इति** । अत्र टीकायाम् "परस्याऽविरुद्धम्" इति वर्तते । परस्य—परमात्मन इत्यर्थ उपवर्णितो **भावदीपे** । अनुपदमेव **भावदीप**कारा आहु· = वस्तुतस्तु—परस्येत्यस्य पूर्वपक्षिण इत्येवार्थ । इति ।

**भावबोधकारास्तु**—"परस्याऽसिद्धम्" इति पाठमवलम्ब्य, परस्य = परमात्मनः असिद्धं = प्रमाणाभावादिति तात्पर्यमाहु । विमर्शकैर्विचारणीयोऽय विषय इति नाधिकं किमप्यत्र लिख्यते ।

"स्ववशत्वेन" "सैषा ससृतिरुच्यते" इति प्रमाणाद्भ्रमस्यैव बन्धकत्वेन भ्रमरूपेत्युक्तम्। तत्कारणेति। स जाग्रत्कालीनो भ्रम कारण यस्य भ्रमस्येति विग्रह । तथा च जाग्रत्कालीनभ्रमकार्यस्वप्नबद्धस्तैजस इत्यर्थ । न च स्वप्नस्य जाग्रत्कालीनभ्रमकार्यत्वमसिद्धमिति वाच्यम्,

"अदृष्टे चाश्रुते भावे न भाव उपजायते"

इति सस्कारद्वारा तत्कारणत्वस्य प्रमितत्वात्। अत एवान्यथाग्रहणत स्वप्न इत्युत्तरवाक्य माण्डूक्यभाष्ये विपरीतज्ञानादपि विपरीतज्ञानान्तर जायत इति व्याख्यातम्। कार्यभ्रमबद्धत्वे तत्कारणाविद्याबद्धत्वमर्थात् सिद्धमेवेति नोक्तम्। एव चाविद्यातत्कार्यभ्रमरूपजाग्रद्बद्धो विश्वोऽविद्यातत्कार्यजाग्रत्कालीनभ्रमरूपोभयकार्यभ्रमलक्षणस्वप्नबद्धस्तैजस इति तयोरपि अभेदाभाव । यद्वा, सुप्तेरुत्थाने प्राज्ञाद्विभक्तो भवति स्वप्नादुत्थाने तैजसादिति माण्डूक्योपनिषद्भाष्ये स्वप्नावस्थाया जाग्रदवस्था प्रति कारणत्वस्योक्तत्वात्। तस्य कारण तत्कारणमिति तु अविग्रह । तथा चाविद्यातत्कार्यस्वप्नबद्धस्तैजस । अविद्या तत्कार्यस्वप्नरूपोभयकारणकजाग्रदवस्थाबद्धो विश्व इति तयोर्भेद इति भाव । तत्कारणेति। तयो जाग्रत्स्वप्नभ्रमयो कारण यदज्ञान तन्मात्ररूपसुप्तिबद्धस्तैजस इत्यर्थ । अयमेव स इत्यादिना चेति। अनेन "अयमेव स" "नेह नानास्ति किञ्चन" इत्यादिश्रुतिबलात् स्थानाना भेदस्तस्याभेद एवेति व्यवस्थोपपत्तेरिति न्यायनिरणमप्युक्ततात्पर्यक भवति। ब्रह्मेत्यनुवाद इति। एव च यद्ब्रह्मायमात्मा सर्वानुभूरिति उद्देश्यविधेयभाव । "इद"-शब्दस्य विधेयलिङ्गत्व चेत्युक्त भवति। अन्तिमश्रुताविति। अयमेव स इत्यस्यामित्यर्थ । एवमभेदेनैवेति भाष्यमित्थभावे तृतीयेत्यभिप्रेत्याभेदेन पठितत्वादिति व्याख्यायेद नीं सहयोगे तृतीयेत्यभिप्रेत्य तदेव भाष्य प्रकारान्तरेण व्याचष्टे—अभेदेन सहैवेति। कार्यकारणबद्धावित्यस्येत्यर्थ ॥

१ दृष्टेति। स्वप्नस्य सस्कारोपादानत्वादिति भाव ।

२ अयमेवेति। श्रुतौ अभेदस्य स्फुटमप्रतीतेरिति भाव ।

नन्वभेदेऽपि भेदव्यपदेशस्थानभेदादित्यत्र " भिन्नो भिन्नेषु संस्थितेः " इति प्रमाणमुच्यते । ऐश्वर्ययोगाच्च भेदव्यपदेश इत्यत्र कुतो नोच्यत इत्यत :—

" अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् ।
प्रोच्यते भगवान् विष्णुरैश्वर्यात् पुरुषोत्तमः " ॥

इत्यानन्दमयाधिकरण एवोक्तत्वान्नोच्यत इत्यत आह—**अभिन्नेऽपीति** । एवमैश्वर्ययोगाद्भेदव्यपदेश इति यथाश्रुतं व्याख्यायैश्वर्ययोगात् स्थानभेद इत्यपि हेतुहेतुमद्भावमभिप्रेत्य व्याख्यातुमाह—**अभिन्नस्येति** ॥ अत्राद्ये—सूत्रे ईश्वररूपाणामभेदोक्तिः । द्वितीये—बाधकोद्धारः । तृतीये—विशेषप्रमाणदर्शनमिति ॥ ८ ॥

॥ इति न स्थानतोऽधिकरणम् ॥ ८ ॥

---

## (९) ॥ अरूपवदेवाधिकरणम् ॥

## सू०॥ ओं ॥ अरूपवदेव हि तत्प्रधानत्वात् ॥ ओं ॥ १४ ॥

अप्राकृतरूपसमर्थनादिति ॥ अत्र—

" रूपमस्य शिरः पाणिपादाद्यात्मकमिष्यते ॥"

इत्यनुव्याख्यानानुसारेण रूपशब्देन शरीरमुच्यते । अत एवोक्तं सुधायां रूपशब्देन शुक्लादिगुण· प्रतीतिः स्यादतः शिरः पाणीति विवरणं कृतमिति । अत्र यद्यपि "अत एव चोपमा" इत्यस्य पूर्वाधिकरणानन्तर्यं युक्तम् । "यस्मादेवमिति" "ईशरूपेष्विवोदित" इति भाष्यानुव्याख्यानानुसारेण "न स्थानतोऽपि" इत्येतदधिकरणप्रतिपाद्यमीश्वररूपाभेदं दृष्टान्तत्वेनोपजीव्यचेतनत्वांशत्वाभ्यां जीवानामीश्वरेणाभेद इति पूर्वपक्षोत्थानात् । तथाप्यत्र "अत एव" इत्युत्तराधिकरणप्रतिपाद्ये जीवेश्वराभेदाभावे उपोद्घातलक्षणया सङ्गत्येश्वरस्याप्राकृतशरीरत्वरूपो

---

१. रूपाणामिति । " सर्वरूपेष्वभेदवान् " इति भगवत्पादाः " अणुभाष्ये "

हेतुः प्रतिपाद्यत इत्यस्य मध्ये निवेशेऽप्यव्यवधापकत्वमिति ज्ञातव्यम्[1]। तदुक्तं सुधायाम्---"अत एव च" इति सूत्रं "न स्थानतोऽपि" इत्येतदधिकरणेन सङ्गतमिति ज्ञापनाय क्रमभेद । तत्सिद्धमर्थमुपजीव्यपूर्वपक्षोत्थानात् । तथा च भाष्य यस्मादेवमित्यादि । अत्रापीशरूपेष्विवेत्यादि । अथ तदनन्तरमेव किं न कृतम्। अरूपत्वाधिकरणार्थस्य "अत एव च" इति सूत्रार्थं प्रति हेतुत्वेनोपोद्घातलक्षणया सङ्गत्या वर्णितस्याव्यवधापकत्वादिति । **विष्णौ युक्ता न वेति ।** अत्र भक्तिर्विष्णौ न युक्तोत युक्तेति चिन्ता । तदर्थं रूपवत्त्वारूपवत्त्वे विष्णौ न सभवत उत संभवत इति । तदर्थं तदुभयप्रतिपादकश्रुत्यप्रामाण्यं विष्णोरनित्यत्वसौन्दर्याद्यभावश्च प्राप्नोत्युत न प्राप्नोतीति । तदर्थं विष्णोर्विलक्षणं रूपं नास्ति उत अस्तीति । तदर्थम् "ऐकात्म्यप्रत्ययसारम्" इत्यादिश्रुतिस्तत्र प्रमाणं न भवत्युत भवतीति । तदर्थं सा श्रुति स्पष्टमीश्वरशरीरस्य ज्ञानानन्दाद्यात्मकत्वप्रतिपादकश्रुतिसंवादिनी न भवत्युत भवतीति । तथा च विशेषश्रुतिस्मृतिसंवादाभावे "ऐकात्म्यप्रत्ययसारम्" इत्यादिश्रुतेर्विष्णोरेव ज्ञानाद्यात्मकत्वप्रतिपादकत्वेन चारितार्थ्यान्न तच्छरीरस्य तदात्मकत्वप्रतिपादकत्वमिति प्रमाणाभावेन विलक्षणरूपासिद्धौ[2] रूपवत्त्वप्रतिपादकश्रुत्यप्रामाण्य सौन्दर्याद्यभावश्च तत्परिहाराय प्रसिद्धरूपवत्त्वाङ्गीकारेऽनित्यत्वमरूपवत्त्वश्रुत्यप्रामाण्यं चेति रूपवत्त्वारूपवत्त्वयोरसंभवान्न तत्र भक्तिर्युक्तेति पूर्वपक्षे "आनन्दरूपम्" "शुद्धस्फटिकसंकाशम्" इति विशेषश्रुतिस्मृतिसंवादात् "ऐकात्म्यप्रत्ययसारम्" इत्यादिश्रुतिरूपप्रमाणसद्भावेन विलक्षणरूपसिद्धौ रूपित्वारूपित्वप्रतिपादकश्रुत्यप्रामाण्यस्य प्राकृतादिरूपस्यैवानित्यत्वव्याप्तत्वेनानित्यत्वस्य सौन्दर्याद्यभावस्य चाप्राप्त्या रूपवत्त्वारूपवत्त्वयो संभवेन युक्ता तत्र भक्तिरिति सिद्धान्ते च फलफलिभावो ज्ञातव्य । अत्र भाष्ये अरूपवत्त्वादनित्यत्वमिति प्रथमसूत्रनिवर्तनीय एव पूर्वपक्ष उक्त । रूपवत्त्वारूपवत्त्ववचनयोर्विरोधादप्रामाण्यमिति **न्यायविवरणे** प्रथमद्वितीयसूत्रनिरसनीयपूर्वपक्ष उक्त ।

---

१. ज्ञातव्यमिति । प्रकृताधिकरणविन्यासौचित्यं प्रतिपादितमिति ज्ञेयम् ।

२. विलक्षणमिति । लोकविलक्षणमप्राकृत रूप विष्णोरिति वेदितव्यम् ।

अतस्तदुभयानुसारेण[1] पूर्वपक्षमुपपादयति—**तथाहीत्यादिना**। भाष्याभिप्रायमाह—**रूपवत्त्वादिति**। अनेन भाष्ये स्यादित्यध्याहार इत्युक्तं भवति। अत्र नित्यत्वं नाम देहहान्यादिरूपमेव। अत एव यज्ञदत्तवदित्युक्तम्। रूपवत्त्ववचनविरोधादरूपवत्त्ववचनस्याप्रामाण्यमिति बुद्ध्या विविक्तस्य **न्यायविवरणांशस्यार्थमाह—अरूपमव्ययमित्यादिना**। अरूपवत्त्ववचनविरोधाद्रूपवत्त्ववचनस्याप्रामाण्यमिति पूर्ववद्विभक्तस्य **न्यायविवरणस्याभिप्रायमाह—रुक्मवर्णमिति**[2]। अत्र वैयर्थ्यं नामाप्रामाण्यम्। **न्यायविवरणे**ऽप्रामाण्यमित्युक्तेऽपि "प्रकाशवच्चावैयर्थ्यम्" इति सूत्रानुसारेणैवमुक्तम्। चतुर्थसूत्रनिरसनीयं हेतुमाह—**सौन्दर्येति**। भूतेभ्यो भिन्नस्य जीवस्य भौतिकशरीरसत्त्वात्। सूत्रसमानार्थत्वापत्त्या प्रकृतानुपयोगाच्च परशब्दस्य भिन्नार्थकत्वासंभवेनापेक्षितांशपूरणेन यथावद्व्याचष्टे—**पर इति**। **तदाव्यक्तिकं रूपमिति**। अव्यक्ततः परे तत्त्वे इत्यन्वयक्रमेणाव्यक्तस्य प्रकृतत्वेन तदात्मकस्य रूपस्यापि प्रकृतत्वाच्च्छब्देन तत्परामर्श इति भावः। **कैमुत्यं चेति**। अस्मिन् पक्षे तच्छब्देन पूर्वप्राप्तभौतिकरूपपरामर्शः। तथा च यदा भूतेभ्यः परत्वेनैव भौतिकरूपराहित्यं किमु वक्तव्यं तदा भूतकारणाव्यक्ततः परे तद्भौतिकं रूपं नास्तीति कैमुत्यमित्यर्थः। **तद्रूपस्येति**। अनेना[3]प्राकृतरूपवत्त्वमिति व्यवस्थोपपत्तेरिति न्यायविवरणमप्युक्ततात्पर्यं भवति। "प्रकाशवच्चावैयर्थ्यम्" इति सूत्रस्यार्थान्तरपरम्—

"यथा हि तैजसस्यैव प्रकाशस्योज्झितावपि ।
आत्मैव ज्योतिरित्याह जीवस्येशं श्रुतिस्तथा ॥"

इत्यनुव्याख्यानं मनसि निधाय "प्रकाशवच्चावैयर्थ्यम्" इति सूत्रस्यार्थान्तरं तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकमाह—**न चैवं रूपशब्दस्येत्यादिना**। तथा[4]

---

१. अनुसारेणेति। भाष्य—न्यायविवरणानुसारेणेति भाव.।

२. रुग्मेति। "रुग्मवर्णम्" इति "मध्वविलास" पुस्तकपाठ.।

३. अनेनेति। Text restored.

४. तथेति। यथा परमात्मनि ज्योतिश्शब्दप्रवृत्तिः तथा लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्तिरिति भाव.।

लोकविलक्षणेऽपि भगवद्रूपे रूपशब्दप्रवृत्तिर्युक्तेति भावः । ऐकात्म्यमेकात्मभावः । चेतनैक्यमिति यावत् । प्रत्ययो ज्ञानं च सारः स्वरूपमस्येत्यन्यथाप्रतिपत्तिनिरासार्थम् " ऐकात्म्यप्रत्ययसारम् " इति इत्येतद्व्याचष्टे—प्रधानात्मेति । अनेनै- P कात्म्यं प्रत्ययश्चेत्युभयं सारं स्वरूपं यस्येति विग्रहो दर्शितः । ननु विज्ञानानन्दमात्रत्वमिति भाष्ये कथं पूर्वप्रकृतविज्ञानानन्दपरतया सौत्रस्तच्छब्दो व्याख्यात इत्यत आह—तद्गुणसारत्वादितीति । "दर्शयति च" "स्मर्यते" इत्येतावता पूर्तौ 'अथो अपि' इतिकिमर्थमुक्तमित्यत आह—अथ ज्ञानस्यापीति ॥ तथा च " अथो " इत्यस्य ज्ञानरूपार्थान्तरपरत्वमित्युक्तं भवति । सूत्रक्रमस्तु—अत्राधिकरणे प्रथमसूत्रेण—ब्रह्मणो रूपराहित्यमुपपाद्य " प्रकाशवच्चावैयर्थ्यम् " इति द्वितीय सूत्रेणे[1] रूपवत्वविषयाणां श्रुतीनां वैयर्थ्यमाशङ्क्य विलक्षणरूपवत्त्वाङ्गीकारेण परिहृतम् । विलक्षणरूपवत्त्वं च "आह च तन्मात्रं" "दर्शयति चाथोऽपि स्मर्यते" इति सूत्रद्वयेन समर्थितमिति सुधायामेवोक्तः । तृतीये—विष्णुतच्छरीरयोरभेदाभिप्रायेण विष्णोर्ज्ञानानन्दमात्रत्वेऽभिहितायाः श्रुतेर्विष्णुस्वरूपमात्रविषयत्वेनान्यथासिद्धौ शङ्कितायाम्, चतुर्थे—रूपस्यापि ज्ञानानन्दात्मकत्वे श्रुतिस्मृतिरूपविशेषप्रमाणोक्तिरिति तयोरपि क्रमो ज्ञातव्य. ॥ ९ ॥

॥ इति अरूपवदेवाधिकरणम् ॥ ९ ॥

---

## (१०) ॥ अत एवाधिकरणम् ॥

## सू०॥ ओं ॥ अत एव चोपमा सूर्यकादिवत् ॥ ओं ॥ १८ ॥

अत्रानन्तरसङ्गतिः प्रागेवोक्ता । युक्ता न वेति । अत्र भक्तिः परमात्मनि युक्ता न वेति चिन्ता । तदर्थं जीवस्य परमात्मना भेद उत नेति[2] । तदर्थमभेदसाधकं चेतनत्वांशत्वानुमानमनाभासमुताभासमिति । तदर्थं भेदसाधकं जीवस्येश्वरप्रतिबिम्बत्वं नोपपद्यते उतोपपद्यत इति । तदर्थं जीवस्योपा-

---

१. सूत्रेणेति । द्वितीय सूत्रेणेति परिष्कृतं द्रष्टव्यम् ।

२. नेति । अस्मिन्नधिकरणे जीव-ब्रह्माऽभेदो निराक्रियत इति द्रष्टव्यम् ।

ध्यायत्त्वादिक प्रतिविम्बत्वप्रयोजक भवत्युत नेति । अत सादृश्याज्जीवस्यापि तथा स्यादिति परमात्मना चेतनत्वसाम्येन जीवस्याप्यभेद इति भाष्यन्याय-निरणाभ्यामुक्तमनुमानमाह—**जीव इति**। दृष्टान्तस्य साध्यवैकल्यपरिहार-परस्य यस्मादेव परमेश्वरस्वरूपाणा मिथो न कश्चिद्भेद इति भाष्याभिप्रायमाह—**मत्स्यादीनामिति**। प्रागेव "न स्थानतोऽपि" इत्यत्रेत्यर्थ ॥

ननु "पृथगुपदेशात्" इत्यत्र भेदस्य निपुणतर समर्थितत्वात् कथम् अभेदेन पूर्वपक्षोत्थानमित्याशङ्क्य निषेधति—**न च वाच्यमित्यादिना**। "समुदायै-क्यमापतेत् ।" "ईशाख्या समुदाये स्यात्" इत्यनुव्याख्यान मनसि निधायोक्तम्—**सर्वचेतनसमुदायस्येति**। अनेशपरमात्मशब्दाभ्या ब्रह्माभिप्रेतम्। परेणे-शस्यापि जीववद्ब्रह्माशत्वाङ्गीकारात्। "ईशाख्य" इत्याद्यनुव्याख्यानानुसारेण तु ईशत्वेनेत्युक्तमिति ज्ञातव्यम्। तस्य प्रतिबिम्बत्वमुपपत्स्यनेन सूर्यकादिव-दिति पदं कथ व्याख्यातमित्यत आह—**दृष्टान्तकथनेनैवेति**। सूर्यकादि-दृष्टान्तेऽभेदाभावव्याप्तत्वेन प्रतिबिम्बत्वस्य सुप्रसिद्धत्वादिति भाव[1] ॥

ननु जीवब्रह्मणोर्भेदाङ्गीकारवादिन प्रति भेदसाधने सिद्धसाधनता स्यादित्यत "न च चित्त्वादभिन्नत्व जीवस्येशवदाप्यते" इत्यनुव्याख्यानं मनसि निधाय प्रयोगप्रकारमाह—**इदमुक्तं भवतीत्यादिना**। अत एवाभेद एवाश एव विवादात्तन्निरास इति वक्ष्यति—

"यत आभासतामेव श्रुतिरस्य वदत्यलम्"

**इत्यनुव्याख्यान** मनसि निधाय रूप रूपमिति भाष्यमवतार्य व्याचष्टे—**जीवस्येति**। तथा च प्रतिबिम्बत्वहेतो श्रौतत्वेन प्राबल्यात्तेनाशत्वचेतनत्वयो र्बाध इति भाव । इत्यादीति कर्तृवाचकपदस्य कर्मक्रियानुवर्तनेनान्वयमाह—**इत्यादीति**। यस्मादेवमित्यादिभाष्यस्य भिन्नवाक्यत्वेन पूर्वपक्षानुवादपरत्वे पूर्वपक्ष इत्यध्याहारप्रसङ्ग । प्रतिबिम्बत्वहेतो कण्ठतोनुक्ति कश्चिदित्यस्य वैयर्थ्यं विपर्ययपर्यवसानायोगेन स्यादित्यापादनानुपपत्तिश्च स्यादिति यस्मादित्यादि-

---

१ **सुप्रसिद्धत्वादिति**। अतिप्रसिद्धसार्वजनीनबुद्धिविषय-सूर्यकप्रतिबिम्बदृष्टान्तेन जीवब्रह्म-भेद साध्यत इति भाव ।

२ **यस्मादिति**। Text amended.

दर्शयतीत्यन्तं भाष्यमेकवाक्यतया योजयति—**अथवेत्यादिना**। अस्मिन्नपि पक्षे जीवस्यापि परमेश्वरस्वरूपांशत्व इत्याद्यापादकाध्याहारस्यावश्यकत्वादाद्यं व्याख्यानमिति ज्ञातव्यम्। स्यादित्यापादनवल्लभ्यं विपर्ययपर्यवसानं दर्शयति **न चैवमिति**। जीवानामल्पगुणत्वेनानुभवादिप्रमाणसिद्धत्वादिति भावः। अनेनाल्पगुणत्वादिविरोध इति **न्यायविवरणमुक्ततात्पर्यं** भवति। भाष्ये इति शब्दात् प्राक्तनो यस्मादेवमित्यादिको ग्रन्थः सौत्र "त" शब्दपरामृश्यमानार्थ-प्रतिपादकः। इतिशब्दस्तु सौ"त्रात"शब्दोक्तहेत्वर्थकः। उपमैवेत्येवशब्द-संबन्धः। उपमाशब्दः प्रतिबिम्बपर इत्यभिप्रेत्येति तस्य प्रतिबिम्बत्वमुक्त्वेति भाष्यं व्याचष्टे—**अतः अंशत्वेऽपीत्यादिनोक्त्वेत्यन्तेन**। प्रतिबिम्ब एवेति "इति"शब्दः प्रकारार्थे। चशब्देनेत्यादिभाष्यं सोपस्करं व्याचष्टे—**तद्धेतुनेत्यादिना**। स चासौ हेतुश्चेति विग्रहः। **उपाधिश्चेति**। अत एवां-शत्वेऽपीत्य"पि" पदेन हेतोरप्रयोजकत्वमुक्तम्। ज्ञानैश्वर्यादीश्वरसाम्ये जीवानां नेश्वराभेदः प्रयोजकः किं तु तद्भेदाभाव इत्याशङ्कते। **भेदस्यापीति**। **ब्रह्मस्वरूपानुगतेरिति**। मृदादिना भिन्नाभिन्ने घटादौ मृदादिस्वरूपानुगतिवत् ब्रह्माभिन्नेषु जीवेषु ज्ञानैश्वर्यादिरूपब्रह्मस्वरूपानुगतेरावश्यकत्वादित्यर्थः। किं च परेण भिन्नाभिन्नतयाऽङ्गीकृतेष्वपि मत्स्यादिषु ऐश्वर्यादिब्रह्मस्वरूपानु-गतेर्दर्शनात्तद्वज्जीवेष्वपि स्यादित्यभिप्रेत्याह—**मत्स्यादिवच्चेति**। नन्वस्या योजनायां युक्तित एव प्रतिबिम्बत्वहेतुसिद्धे "रूपं रूप"मिति श्रुत्युदाहरणं किमर्थमित्यत आह—**युक्तिदृष्टार्थ एवेति**। "अत एवोपमा" इति सूत्र-खण्डस्य व्याख्यानान्तरपरमत एव तदधीनत्वमित्यादिभाष्यं तन्निवर्तनीयाशङ्का-प्रदर्शनपूर्वकमवतारयति—**यदुक्तमित्यादिना**। "अथा भासा" "मुख्यत प्रतिबिम्बवत्" "यदा तदोपाध्यायत्तरूपाणा नाशिता भवेत्" "यदाभास उपाध्यायत्त ईयते" "उपाध्यायत्तताभावात्" इत्यनुव्याख्यानं मनसि निधाय विकल्प्य दूषयति—**किमसावित्यादिना**। **न सूर्यकाद्युपमा**

---

१ **ब्रह्मस्वरूपेति**। ऐक्ये जीवेषु ब्रह्मस्वरूपानुसन्धानं स्यादिति भावः।

२. अथेति। अत्रानुव्याख्यानोदाहरणे "प्रतिबिम्बवदिति" पाठ उद्धृतः। भावदीपे तु "सूर्यकादिवत्" इति वर्तते। स एव पाठो "मध्वविलास"पुस्तके दृश्यते।

संभवतीति । प्रतिबिम्बमात्रस्योपाध्यायत्ततानियमात् । उपाध्यायत्तत्वाभावे तस्य दृष्टान्तत्वासंभवः । यतस्तस्य दृष्टान्तत्वासंभवः, अत उपाध्यायत्तत्वादिव्यापकाभावेन तत्प्रतिबिम्बत्वाभावात् । बाधाद्यभावेन यदुक्तं चेतनत्वांशत्वाभ्यां जीवानां ब्रह्माभेद इति तत्तदवस्थमेवेत्यर्थः । "नातिसाम्यं निदर्शने" इत्यनुव्याख्यानं मनसि निधायाह—यौ चेति । भाष्ये भिन्नत्वादित्रितयोक्तेः प्रयोजनमाह—अत्र—चेति ॥ १० ॥

॥ इति अत एवाधिकरणम् ॥ १० ॥

---

## (११) ॥ अम्बुवदधिकरणम् ॥

### सू०॥ ओं ॥ अम्बुवद्ग्रहणात्तु न तथात्वम् ॥ ओं ॥ १९ ॥

156 **फलनिरूपणादिति** । विषयविचारानन्तरं[1] फलविचार इति परमात्मनो भक्तिविषयत्व विचार्य फलं विचार्यत इत्यनन्तरसङ्गतिरिति भावः । **कर्तव्या न वेति** । अत्र भक्तिः किं न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं किं सा निष्प्रयोजनोत सप्रयोजनेति । तदर्थं जीवानां नित्यसिद्धं ज्ञानानन्दादीश्वरसादृश्यं सुप्ताविव मुक्तावपि स्वत एवाभिव्यज्यते । उत भक्त्यादिसाधनेनेति । न भक्त्या प्रयोजनमित्येव वक्तव्ये यज्ज्ञानानन्दादिनेत्युक्तं तदभिप्रायमाह—**न च भगवज्ज्ञानमित्यादिना** । आदिशब्दार्थमाह—**प्रसाद** । इति । भाष्ये नित्यसिद्धत्वाज्ज्ञानानन्दादेरित्येतावता पूर्णे सादृश्यस्येति किमर्थमुक्तमित्यतो नित्यसिद्धत्वादित्यस्योभयत्रान्वयमङ्गीकृत्य हेतुहेतुमद्भावापन्नार्थप्रतिपादकत्वेन वाक्यद्वयं योजयति—**नित्येति** । **भगवत्सादृश्येति** । ज्ञानानन्दादिना सादृश्यस्येत्यर्थः । अनेन सादृश्यस्येति **न्यायविवरणांशो**ऽपि व्याख्यातः । न भक्त्यादिना प्रयोजनमिति भाष्यं साधनं विनैव जीवस्य तादृशत्वाभिव्यक्तिरिति **न्यायविवरणं** च तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**नित्यमित्यादिना** । **उक्तमिति** । "पुंस्त्वात्" इत्यत्रेत्यर्थः । स्वयमेव,

---

1. **विषयेति** । Text amended.

साधनं विनैवेत्यर्थ । सूत्रार्थमाहेति । अम्बुवदिति, सादृश्यार्थे "वति ।" ग्रहणाभावादिति नञोऽन्वयः । तेतश्च स्नेहपूर्वकमहत्त्वज्ञानाभावादिति । ततश्चाम्बु यथा स्नेहेन गृह्यते तथा स्नेहपूर्वं परमात्मनो ग्रहणात् न तथात्वमिति तात्पर्यम् । "अम्बुवदग्रहणात्" इति सूत्रांशस्य भक्तिं विनेत्यनेन पुस्त्वादिवत्त्वास्येत्युक्तं सादृश्यस्याभिव्यक्तत्वम् "तथात्वम्" इत्यनेन परामृश्यते । "तु"शब्देन तु सम्यक्त्वमुच्यत इति । "न तथात्वम्" इति सूत्रांशस्य "न तत्सादृश्यं सम्यगभिधीयते" इत्यनेन व्याख्यानादिति भाव । अनादित. संसारस्यानिवृत्तत्वेन भावादिति न्यायविवरण तन्निवर्तनीयाशङ्काप्रतिषेधपूर्वकं व्याचष्टे— न च सापीत्यादिना । तत्स्वरूपमिति । जीवस्वरूपमित्यर्थ । अनेन श्रुतौ स्वशब्दो जीवपर इत्युक्तं भवति ॥ ११ ॥

॥ इति अम्बुवदधिकरणम् ॥ ११ ॥

---

## (१२) ॥ वृद्धिह्रासाधिकरणम् ॥

### सू० ॥ ओं ॥ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ओं ॥ २० (२१) ॥

भक्त्यनुसारिफलदानेति । भक्ते सामान्यतो फलहेतुत्वसिद्धौ एतद्विशेषस्य स्वानुसारिफलहेतुत्वचिन्तावसर इत्यनन्तरसङ्गतिरिति भाव । अर्थत इति । ब्रह्मादिषु भक्ते वृद्धिह्रासवत्त्वे प्रतिपादिते हि(पि) भगवतस्तदनुसारिफलदानमर्थात् सिध्यति । भगवतो भक्त्यनुसारिफलदानं विना भक्तेर्वृद्धिह्रासवत्त्वानुपपत्तेरिति भाव । किं भक्तेष्वेकप्रकारेति । अत्र भक्ति किं ब्रह्मादिभक्तेषु एकप्रकारोन वृद्धिह्रासवतीति चिन्ता । तदर्थं ब्रह्मादिमनुष्यान्ताना तारतम्य भक्त्यादिसाधनतारतम्यसाधक न भवत्युत भवतीति । तदर्थं फलतारतम्यरूपहेतोर्व्याप्तिपक्षधर्मते न स्त उत स्त इति । मुक्तत्वादि-

---

१ ततश्चेति । ग्रहणाऽभावे हेतुमाह ।

२. ब्रह्मादिषु इति । ब्रह्मादिदेवेषु भक्तितारतम्यमत एव फलतारतम्यमप्यस्तीति भाव ।

गुणसाम्याद्ब्रह्मादीना भक्त्यादिगुणसाम्यमिति **न्यायविवरणानुसारेण पूर्वपक्ष-**माह—**एकप्रकारैवेति**। अनेन ब्रह्मादीना भक्त्यादिगुणसाम्यमित्ययमंशो व्याख्यात। तत्फलस्येत्यनेन हेत्वंशश्च। **आदिपदेनानन्दित्वादेर्ग्रहणम्।** हेतोरप्रयोजकतापरिहारार्थमाह—**अन्यथेति**। फलसाम्यमेवासिद्धमित्यत आह—**केषांचिदसम्यगिति**। **मुक्ति**[1] संसारनिवृत्तिरूपेत्यर्थ। **भक्त्यादेरिति।** **आदिपदेन** ज्ञानोपासनादिकम्। यद्यपि भक्तेरेव वृद्धिह्रासभाक्त्वं साधनीयम्। अत एव **सुधायामस्ति** भक्तेर्वृद्धिह्रासभाक्त्वमित्येवोक्तम्। तथाप्यपरोक्षज्ञानादि-साधनतारतम्याभावे तत्साध्यमुक्तिजनकभक्तौ तारतम्य न सिध्येदिति "ब्रह्मा-न्तरपृथक्त्ववद्दृष्टिश्च तदुक्तमि"ति वक्ष्यमाण ज्ञानादिना तारतम्य हेतुत्वेन दर्शयितु भाष्ये ज्ञानादेरिति **न्यायविवरणे** भक्त्यादीत्युक्तमिति भाव। उत्तमानामित्यस्याभिप्रायमाह—**तेषां चोत्तमफलत्वादिति**। **अन्येषामल्प-फलत्वादिति**। अनेन[2] भाष्ये उत्तमानामित्यन पर मनुष्योत्तमानामल्पाना चेतीति शेष इत्युक्त भवति। अत एव **सुधायाम्** "अन्तर्भावात्" इति सौत्रो हेतु ब्रह्मादीनामस्मदादीना च भक्तत्वेऽन्तर्भावादिति व्याख्यात। तथा च ब्रह्मा-दीनामुत्तमाना मनुष्योत्तमानामल्पाना चेत्येव सर्वेषा मुक्तियोग्याना भक्तत्वेऽन्तर्भा वादिति भाष्ययोजना सूचिता भवति। अनेन ब्रह्मादिमनुष्योत्तमान्ता, तारत-म्योपेतभक्तिज्ञानादिसाधनवन्त, तारतम्योपेतानन्दादिफलवत्त्वादित्यनुमानमुक्त भवति। व्याप्तिसाधनतर्कप्रदर्शनपरमेव भक्त्यादीति भाष्यम्। तन्निवर्तनीयाशङ्का-प्रदर्शनपूर्वमेव भक्त्यादीति भाष्यमवतार्य व्याचष्टे—**महदल्पफलत्वे-ऽपीत्यादिना**। **स्मृतिविरोध चेति**। उपलक्षणमेतत्। यथा यथा अधिकार इति **न्यायविवरणोदाहृत**श्रुतिविरोधोऽपि द्रष्टव्य॥ आद्ये—"वृद्धिह्रासभाक्त्व मि"ति प्रतिज्ञायाम्'न्तर्भावा'दित्यनेन हेतुमभिधाय तम्यो"भयसामञ्जस्यादि"-त्यनेन व्याप्तिमुपपाद्य, द्वितीयेन—पक्षधर्मताप्रतिपादनमिति सूत्रक्रम ॥१२॥

॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

---

१ **मुक्तिरिति**। अनादिजननमरणसवलितसंसृतिनिवृत्तिरूपेति भाव।

२ **अनेनेति**। भक्तकोटयन्तर्भावेऽपि भक्त्यादिसाधनानुष्ठाने तथाऽऽनन्दादि फलानुभवे च देवेषु मनुष्योत्तमेषु च तारतम्यमस्तीति विभावनीयम्।

## (१३) ॥ प्रकृतैतावत्त्वाधिकरणम् ॥

## सू० ॥ ओं ॥ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ ओं ॥ २२ ॥

**पालकत्वेति** । अत्र पूर्वं यस्याः स्नेहादिरूपाया भक्तेस्तारतम्यं समर्थितं सा भक्तिरेव विष्णोः[1] पालकत्वाभावे न संभवति । लोके स्वपालक एव स्नेहोत्पत्तिदर्शनादित्याक्षेपोत्थानात् पूर्वत्र "दर्शनाच्च" इति सूत्रेण भक्तितारतम्यसाधकानन्दतारतम्ये श्रुतिस्मृतिरूपप्रमाणोपन्यासवदत्रापि विष्णोःपालकत्वे "ब्रवीति च" इति श्रुतिस्मृत्योरुपन्यासाद्वाऽनन्तरसङ्गतिरिति भावः । **विष्णोरिति** । अत्र जगत्पालनं विष्णोर्न युक्तमुत युक्तमिति चिन्ता । तदर्थं पालनसाध्या स्थितिः सृष्टिसंहारकर्त्रीश्वरव्यापारनिरपेक्षोत तत्सापेक्षेति । तदर्थं पालनमसंहारमात्ररूपमुत तद्व्यतिरिक्तव्यापाररूपमिति । तदर्थं तत्र प्रमाणं नास्त्युतास्तीति । **कर्तृत्वादिति** । कर्तृत्वाभ्युपगमादित्यर्थ । अन्यथा पूर्वपक्षिणः सृष्टिसंहारकर्तृत्वाभ्युपगमस्य व्यर्थत्वादिति भाव । अत एवोक्तमनुव्याख्याने "सृष्टिनाशौ तदधीनौ" इति । "ईरित इति स्वभावत्वात् स्थितेः" इति अनुव्याख्यानानुसारेण जगत्स्थितेरिति भाष्ये शेषोक्ति । स्थितेरेव पालनरूपत्वादिति भाव । सहारकर्तु. सहारादन्यरक्षाया अयोग इति न्यायविवरणं मनसि निधायाह—[2]**संहारकर्तुरिति**। अयोगमेवोपपादयति—**अन्यस्त्विति**। मनसि निधायाह प्रथमादिपदेन सहारः । द्वितीयेन तु सृष्टौ प्रेरणम् । तदुक्तं **सुधायाम्**—यदि खलु सृष्टिसंहारयोः कर्ताऽन्यः स्यात्तदोदासीनस्य तस्य सृष्टौ प्रेरणार्थं सहारे प्रवृत्तस्य निवारणार्थं च स्थितावीश्वरापेक्षा सभवेदिति । **प्रागुक्तमिति** । "अस्येदेषा सुमतिः पप्रथाना" इत्यादिश्रुतौ प्रागुक्तमित्यर्थः । "एनेत्यर्थोऽनेनेति—"सदि"त्यस्य च [3]**भैवमिति** । **कार्यमिति** चार्थद्वयम् । "उक्षे"

---

१. **विष्णोरिति** । अत्र भगवतो विष्ण सकलजगत्पालकत्व समर्थ्य इति द्रष्टव्यम् ।

२. **संहारकर्तुरिति** । "संहर्तु" इति "मध्वविलास"पुस्तकपाठ. ।

३. **भैवमिति** । "भवदि"ति मध्वविलासपुस्तकपाठः ।

इत्यस्यार्थो भक्ताभिलषितसेचक इति । "निभर्ति" इत्यस्य धत्ते पुष्णाति चेत्यर्थद्वयम् । समुचिनोतीति । उपलक्षणमेतत् । स संनतीत्यादिन्याय-निरणोक्तमपि समुचितमिति ज्ञातव्यम् । धारणपोषणादेरिति । अनेनाल-दानाद्युपपत्तेरिति न्यायनिरणमप्युक्तार्थं भवति ॥ १३ ॥

॥ इति प्रकृतैतावत्त्वाधिकरणम् ॥ १३ ॥

---

## (१४) ॥ तदव्यक्ताधिकरणम् ॥

## सू० ॥ ओं ॥ तदव्यक्तमाह हि ॥ ओं ॥ २३ ॥

उपलब्धियोग्यत्वे भक्तिनैयर्थ्यप्रसङ्गादिति । अतीताधिकरणे-र्महिमनिरूपणादिना भक्ते कर्तव्यत्वसप्रयोजनत्वयोरुक्तयोरेव भक्तिप्रयोजनत्वेना-भिमतज्ञानादे पुरुषप्रयत्नेप्रयोजनत्वेनैव सिद्धे व्यर्था भक्तिर्न कार्येति शङ्कोदये तत्परिहारादनन्तरसङ्गतिरिति भाव । कर्तव्येति । अत्र भक्ति किं न कर्तव्योत कर्तव्येति चिन्ता । तदर्थं तत्प्रयोजनत्वेनाभिमत ब्रह्मापरोक्षज्ञान पुरुषप्रयत्नसाध्यं भवत्युत नेति । तदर्थं ब्रह्म पिशाचादिवत् समाराधनभावाभावाभ्या वा अग्न्यादि-स्थूलसूक्ष्मरूपाभ्या वा व्यक्तत्वाव्यक्तत्वोपेनमुताव्यक्तैकस्वभाव वेति । तदर्थ-मव्यक्तैकस्वभावस्यापि ब्रह्मण उपासनादिसाध्यप्रसादजन्यापरोक्षज्ञानविषयत्व न सम्भवत्युत सम्भवतीति । तदर्थम यक्तत्वापरोक्षत्वयोर्विरोधशामकं नास्त्युता-स्तीति । एव चाव्यक्तत्वापरोक्षत्वयोर्विरोधशामकाभावे उपासनादिसाध्यप्रसा-देनाप्यपरोक्षज्ञानासम्भवेनाव्यक्तैकस्वभावत्वानुपपत्तेरपरोक्षज्ञानसिध्यर्थं च पिशा-चादिवद्वाग्न्यादिवद्वा, व्यक्तत्वाव्यक्तत्वयोरङ्गीकार्यत्वे परोक्षज्ञानस्य पुरुषप्रयत्नैनै

---

१ समुचिनोतीति । "समुचितेति शेष" इति "मध्वविलास"पुस्तकपाठ ।

२ उपलब्धीति । "उपलब्धि-अयोग्यत्वे"—"उपलब्धियोग्यत्वे" इति पाठद्वय दर्शित "मध्वविलास" पुस्तके ।

३ ब्रह्मण इति । ब्रह्मणाऽव्यक्तत्वमत्र समर्थ्यत इति वेद्यम् । स्वप्रसादैकसाध्य बिम्बगोचरापरोक्षज्ञानविषयत्वमेव ब्रह्मणोऽव्यक्तत्वमिति श्रीविजयीन्द्रगुरुपादा ।

वान्यथासिद्धेर्न तदर्थं भक्ति कर्तव्येति पूर्वपक्षे निरोधशामकाचिन्त्यशक्तिसद्भावे ब्रह्मण उपासनादिजन्यप्रसादसाध्यापरोक्षज्ञानविषयत्वेऽप्यव्यक्तस्वभावत्वोपपत्तौ तदपरोक्षज्ञानस्य पुरुषप्रयत्नसाध्यत्वासंभवात्, तदर्थं भक्तिरवश्य कर्तव्येति सिद्धान्ते च फैल्फलि भाव ॥

नन्वपरोक्षज्ञान भक्तिप्रयोजनमभिलपता किं व्यक्तत्वं ब्रह्मणोऽङ्गीक्रियते, उताव्यक्तत्वमिति विकल्प हृदि कृत्वाद्यं दूषयति—**स्तम्भादिवदिति**। अनेन "तदव्यक्तत्वमाह हि" इत्यादिसूत्रत्रयनिरसनीयपूर्वपक्ष उक्तो भवति। द्वितीय-माशङ्क्य दूषयति—**तस्याव्यक्तत्वं चेदिति**। अनेन "अतोनन्तेन" इति सूत्रनिरसनीयपूर्वपक्षांश प्रदर्शित। **तदभ्युपगमे चेति**। अव्यक्तस्वभावस्यापि दर्शनाभ्युपगम इत्यर्थ। **न प्रतीयते** प्रत्यक्षेणेति शेष। अनेनाव्यक्तस्वभावस्य दर्शने तर्कबाध इति **न्यायनिरण** व्याख्यातं भवति। भक्ते कर्तव्यत्वप्रति-पादनार्थं प्रवृत्तत्वात् परमात्मापरोक्ष्यं प्रसादादेवेत्युक्ते कथ मुक्ते कर्तव्यत्वसिद्धि-रित्यत आह—**भक्तिसाध्यादिति**। **शेष** इति। इत्यादाविति। आदिशब्देन "प्रकाशश्च कर्मणि" इत्येतद्ग्राह्यम्। यद्वा "आदौ" प्रथमत उच्यते। व्यक्तत्वमित्युत्तरत्रान्वय। **व्याहतिरिति**। प्रत्यक्षायोग्यस्वरूपमव्यक्तत्व प्रत्यक्षसिद्धमित्यङ्गीकारे व्याहतिरित्यर्थ। **उत्तरत्रेति**। अतोऽनन्तेनेत्यर्थ। **गर्भत्त्वेणैवेति**। अव्यक्तैकस्वभावस्यापि ब्रह्मणोऽचिन्त्यशक्त्या प्रत्यक्षत्वे तद्गताव्यक्तत्वस्यापि प्रत्यक्षत्वलाभादित्यर्थ। **अनुमानापेक्षाभावादिति**। सिद्धसाधनत्वप्रसङ्गादित्यर्थ। **"च"शब्द शङ्काव्यावृत्त्यर्थ इति**। दृष्टान्तान्तरस्यानुक्तत्वात् समुच्चयार्थत्वासंभवादित्यर्थ। पर एव भवतीत्यस्यार्थ। **किं तु परमसूक्ष्म एवेति**। अवताररूपाणामुत्पन्नत्वस्य शङ्कितत्वेन तदभावप्रति P 1 पादनस्य प्रकृतत्वात् जननमर्दयतीति व्याख्यातम्। **विषयत्वस्येक्षत्यधिकरणे**

---

१ **फलेति**। ब्रह्मणोऽव्यक्तस्वरूपत्वेऽपि भक्तापरोक्षज्ञानविषयत्व न व्याहन्यत इति तदपरोक्षज्ञानसंपिपादयिषया भक्तिरवश्यमनुष्ठेयेति भाव।

१ **अधिकरण इति**। अवाच्यस्य ब्रह्मण कथ शास्त्रविषयत्वमित्यादिचोद्याना निरासो निपुणतममकारि ईक्षतिनय इति भाव।

अत्र च ब्रह्मणोऽव्यक्तस्वरूपत्वे, तस्योपासाविषयत्वमपि नास्तीत्यापतति। एवमुपास्यत्वाऽभावे ब्रह्मणो वाच्यत्वमपि दुर्लभमिति स्यादेवाऽवाच्य ब्रह्म॥ (Contd)

इति। अनेन सूत्रे कर्मणीत्यस्य तद्व्याख्यानपरस्य विषयभूते तस्मिन्नेवेति भाष्यस्य च प्रयोजनमुक्तं भवति । प्रकाशपदमनुवृत्त्या"नन्तेन" इति सौत्रप्रतिज्ञाभागव्याख्यानपरं " तत्प्रसादादेव प्रकाशो भवति " इति भाष्यं व्याचष्टे—**अव्यक्तस्यापीति । प्रसादादेवेति** । अनेन " प्रसन्नेनानन्तेन " इति सूत्रयोजना सूचिता भवति । सौत्र"त "शब्दव्याख्यानपरमुभयत्र प्रमाणाभावादिति भाष्यं व्याचष्टे—**अव्यक्तत्व इति । [1]प्रसादसाध्यत्वलिङ्गमिति** । " योजनतत्त्वभावपदो " व्रतोपासनावृत्तिजनितप्रसादसाध्यत्वरूपं लिङ्गमित्यर्थ. । दर्शनस्योपतरूपभगवत्प्रसादजन्यत्वे कथमेतल्लिङ्गमित्यत आह—**दृष्टेवेति। दर्शनसाध्यत्वेति** । दर्शनैकसाध्यत्वेत्यर्थ । **प्रसादाद्दर्शनमिति** । उपासनाजनितप्रसादस्य साक्षान्मोक्षजनकत्वाभावादित्यर्थ । प्रकृतब्रह्मपरामर्शस्य तत्पदादिनैव संभवादनन्तेनेति किमर्थमुक्तमित्यतोऽनन्तपदप्रयोजनप्रतिपादनपरं युज्यते चेत्यादिभाष्यं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकमवतारयति—**नन्विति** । अनेनानन्तशक्तित्वाद्विष्णोस्तच्छक्त्याऽव्यक्तावि दर्शनोपपत्तेरिति **न्यायविवरणम**प्युक्तमात्यर्थं भवति । सूत्रक्रमस्तु अत्राद्ये सूत्रे—ब्रह्मणोऽव्यक्तैकस्वभावत्वोक्ति. । द्वितीये—लौकिकपक्षादिप्रतिबन्दीमोचनम् । तृतीये—वैदिकाग्न्यादिप्रतिबन्दीनिवारणम् । चतुर्थे—अव्यक्तत्वे भक्त्यादिसाधनवैयर्थ्यपरिहाराय दृश्यत्वोक्ति । पञ्चमे—तदुभयं विरुद्धमित्याशङ्कापरिहाराय विरोधशामकानन्तशक्तित्वायुक्तिरिति ॥ १४ ॥

॥ इति तदव्यक्ताधिकरणम् ॥ १४ ॥

---

(*Contd*)

एतादृशानमाक्षेपपरम्परायां विस्तारो दृश्यते "मध्वमतविध्वंसने" श्रीमदप्पय्यदीक्षितविरचिते। समाहितसकलाक्षेपनिरसनपूर्वकं मध्वसिद्धान्तस्यैव प्रामाणिकत्वोपादेयत्वादिव्यवस्थापनं कृतं **श्रीविजयीन्द्र**-गुरुपादै "मध्वाध्वकण्टकोद्धारे" वादग्रन्थे । आधुनिकेन केनचित्—श्रीविजयीन्द्रोक्तिखण्डनं कृतं "मखिवर्यभूषणे" तादृशखण्डनाभासखण्डनं निरवशेषमकारि "द्वैताध्वकण्टकोद्धारे" इति विमर्शकैर्विभावनीयम् ।

१ **प्रसादेति** । "प्रसादसाध्यत्व लिङ्गमिति" "मध्वविलास"पुस्तकपाठ ।

## (१५) ॥ अहिकुण्डलाधिकरणम् ॥

## सू०॥ ओं ॥ उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ओं ॥२८ (३१)॥

**गुणित्वसमर्थनादिति** । "अतोऽनन्तेन" इति पूर्वसूत्रगता"त."-शब्दोक्तप्रमाणद्वयान्यथानुपपत्त्याव्यक्तस्वभावस्याप्यपरोक्षसाधनवदिहाप्यानन्दित्वा नन्दत्वरूपोभयव्यपदेशादानन्दादिगुणरूपस्यापि ब्रह्मण आनन्दित्वादिगुणित्व-समर्थनादनयोरेकरूपसिद्धान्तयुक्त्युपेतत्वेनानन्तरसङ्गतिरिति भाव· । **कर्तव्येति** । अत्र भक्तिर्नकर्तव्योतकर्तव्येति चिन्ता । तदर्थं ब्रह्मणो गुणित्वं नास्त्युता-स्तीति । गुणस्वरूपस्यापि ब्रह्मणो गुणित्वे युक्त्यभावतद्विरोधौ भवत उत नेति । तदर्थं ब्रह्मशुष्कतर्कगम्यं भवत्युत नेति । **अन्यथेति** । आनन्दादीनां भेदे गुणगुणिनोर्युतसिद्ध्यभावेन घटपटयोरिव सयोगासभवाद्गुणगुणिभावोपपत्त्यर्थं समवायस्यावश्यमङ्गीकार्यत्वेन तन्निराकरणानुपपत्तेरित्यर्थः । आनन्दादीनां स्वरूपत्वाभ्युपगमेऽपि कुतो ब्रह्मण आनन्दित्वादिकमङ्गीकर्तुमशक्यमित्यतः स्वरूपेणेत्यादिभाष्यं योजयति—**स्वरूपेणेति**। युक्तिश्च नेश्वरो गुणवानिति वक्ष्यमाणा । गुणानां गुणिस्वरूपत्वं विरुद्धमिति **न्यायविवरणं** योजयितुमाह —**अथापीति** । तद्योजयति—**गुणानामिति**। युक्तिस्त्वानन्दाद्या न ब्रह्मगुणा इत्यादिवक्ष्यमाणा ॥

ननु गुणित्वरूपमहिमाभावेऽपि आनन्दादिगुणस्वरूपत्वरूपमहिमवत्त्वेन ब्रह्मणो भक्तिविषयत्वं स्यादित्यत आह—**न चेति** । यो यदात्मक स तद्वान्न भवतीति सामान्यव्याप्त्यपेक्षयाह—**न स्व इति** । यो यद्धर्मात्मकः स तद्धर्मवान्न भवतीति, विशेषव्याप्त्यपेक्षयाह—**दण्ड इति** । यद्वा विशेष्यापेक्षयाद्य', विशेषणापेक्षया द्वितीय इति । केवलश्रुति-गम्यत्वापेक्षया द्वितीय इति—**केवलश्रुतिगम्यत्वादिति** । केवलशब्देन "नेश्वर" इत्यादि शुष्कनिरासः । तेन 'उभयव्यपदेशात्तु" इति युक्तिकथनं न

---

१. **शुष्केति**। ब्रह्मशुष्कतर्कगम्यं न भवतीति भाव·। तर्के शुष्कत्व च—अपौरुषेयनिर्दोषागमाऽननुगृहीतत्वमिति ज्ञेयम् । "नैषा तर्केण" इति श्रुति· ।

२. **युक्तिश्चेति** । अनुमानमिति भाव ।

विरुद्धमिति ज्ञातव्यम् । यथा कुण्डलात्मकस्याप्यहेः कुण्डलित्वं यथा प्रकाशात्मकस्यादित्यस्य प्रकाशित्वं यथा कालस्य चेति वाक्यत्रयेण कालादिदृष्टान्तादिति न्यायविवरणमप्युक्ततात्पर्यं भवति । अहिकुण्डलदृष्टान्तस्य प्रथमतः कथने निमित्तप्रदर्शनपरं भाष्यं तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**अलम-**
153 **नेनेति** । शयनशब्दस्य निद्रापरत्वस्य प्रकृतेऽनुपयोगादयोगाच्चाह—**शयनमिति । अङ्गविशेषणमिति** । विशेषणं धर्मः । अङ्गं विशेषणं यस्येत्यङ्गविशेषणमिति वा । ब्रह्मणो मुक्तानां चानन्दो भिन्न एव त्विति उद्देश्यविधेयभावप्रतीतिनिरासार्थमाह—**अभिन्न एवेति** । ब्रह्मणा मुक्तैश्चाभिन्न एवानन्दो विशेषबलादेव ब्रह्मणो मुक्तानामिति तत्सम्बन्धित्वेनोच्यत इत्यर्थः ।

ज्ञानानन्दाद्यभिन्नत्वादेकः सर्वोत्तमत्वतः ।
अद्वितीयो महाविष्णुः पूर्णत्वात्पुरुषः स्मृतः ॥
भेदाभेदनिवृत्त्यर्थमेव शब्दोऽवधारकः ॥ "

इति स्मृत्यनुसारेणैकमेवाद्वितीयमिति श्रुतिं व्याचष्टे—**घटादिवदित्यादिना ।** अनेनैकमभिन्नमित्युक्ते घटादिवद्ब्रह्मस्वावयवैर्भिन्नाभिन्नमित्यपि प्रतीयेतातस्तन्निवृत्त्यर्थम् "एव" इत्युक्तमिति श्रुत्यर्थ उक्तो भवति । उद्देश्यविधेयभावप्रतीत्यर्थं पदयोरन्वयप्रदर्शनपूर्वकं किञ्चनेति पदं व्याचष्टे—**किञ्चन नानेति ॥**

सूत्रक्रमस्तु—स्थूलमतिप्रभृतीनां बुद्ध्यारोहक्रममपेक्ष्याद्ये—सूत्रे प्रसिद्धाहिकुण्डलदृष्टान्तोक्तिः । द्वितीये—बाह्यप्रत्यक्षसिद्धादित्यमण्डलदृष्टान्तोक्तिः । तृतीये—साक्षिप्रत्यक्षसिद्धकालदृष्टान्तोक्तिः । चतुर्थे—किमनेन गुणगुणिनोरभेदमभ्युपेत्य गुणित्वसमर्थनेन भेद एव तयोः किं न स्यादित्याशङ्कापरिहाराय भेदप्रतिषेध इति ॥ १४ ॥

॥ इति अहिकुण्डलाधिकरणम् ॥ १४ ॥

---

१. **मुक्तानामिति** । ब्रह्मानन्द एव मुक्तानन्द इति भाव. ।

२. **स्थूलेति** । मन्दमतीनामिति भावः । सूक्ष्मार्थग्रहणसामर्थ्यविहीनानामिति यावत् ।

## (१६) ॥ परमतोधिकरणम् ॥

### सू०॥ ओं ॥ परमतः सेतून्मान-सम्बन्धभेदव्यपदेशेभ्यः ॥ ओं ॥ ३२ (३४) ॥

**प्रकृतमिति** । पूर्वाधिकरण इत्यर्थ । अनेनानन्तरसगतिरप्युक्ता भवति । **लौकिकमिति** । अत्र ब्रह्मण आनन्दादिगुणजातं लौकिकमलौकिक वेति चिन्ता । तदर्थं ब्रह्मानन्दादेरलौकिकत्वे व्युत्पत्त्यसभवरूपबाधकमस्त्युत नेति । आनन्दादित्वाल्लोकानन्दादिवदिति भाष्यानुसारेण पूर्वपक्षमाह—**लोकसदृशमिति** । अनेन लोकानन्दादिवदिति साध्यप्रतिपादकांशो व्याख्यात । **आनन्दादिशब्दवाच्यत्वादित्यनेनानन्दादित्वादिति** हेत्वशो व्याख्यात । हेतोरप्रयोजकत्वशङ्कापरिहाराय विपक्षबाधकतर्कप्रदर्शनपरतया ब्रह्मानन्दादीनाम न्यथात्वादतच्छब्दत्वमिति **न्यायविवरणांश** व्याचष्टे—**अन्यथेति** । अन्यथा लोकविलक्षणत्वेऽनेनान्यथात्वादलौकिकत्वादतच्छब्दत्व स्यादिति **न्यायविवरण** व्याख्यातम् । तच्छब्दत्वे लोकोपमत्वमिति **न्यायविवरणांश** विपर्ययपर्यवसानपरतया व्याचष्टे—**अस्ति चेति** । उद्धृत मान वेदादिरूपप्रमाणं मर्यादा च यस्मादित्यभिप्रेत्याह—**उन्मानत्वमिति** । [1]ब्रह्मानन्दाशस्यान्यैरभोज्यत्वादाह—**अन्याद्विमात्रामिति** । [2]परज्ञानस्य देवज्ञानभिन्नत्वेऽप्यलौकिकत्वालाभादाह—**अन्याद्वि-** ... लक्षणमिति । अलौकिकत्वस्य परत्वावधित्वासभवात्साध्याविशिष्टत्वेन हेतुत्वायोगाचाह—**अलौकिकत्वादिति** । तथा च भाष्ये अलौकिकत्वादिति पञ्चमी तृतीयार्थे । अत परमिति सबन्ध । तथा चालौकिकत्वेन प्रकारेणातो लोकानन्दादे पर विलक्षणमिति व्याख्यानमित्यर्थ । अलौकिकत्वावगमादिति **न्यायविवरणानुसारेण** विषयेण विषयिणो ज्ञानस्योपलक्षणमित्यभिप्रेत्याह—**अलौकिकत्वावगमादिति** । अतो व्यपदेशेभ्य इत्यर्थ । अत्राप्यत परमित्यन्वय । लौकिकत्वादिति पदच्छेदं तस्य च भवितृप्रधानत्व चाभिप्रेत्याह— **अथ वेति** ।

---

१ ब्रह्मेति । ब्रह्मानन्दनिष्ठपूर्णत्वमिति भाव ।

२ परेति । Text restored

**न चेत्यादिना पूर्वपक्षं प्रतिषिध्येति** । अनेन प्राचीनव्याख्याने इदमेव भाष्यं प्रतिज्ञाव्याख्यानमिति सूचितम् । अत एव किं त्वतो लोकानन्दादेरित्याद्युक्तम् । तत्र चानन्दित्वादिति हेत्वंशोक्तिर्व्यर्था । अत्र तु तत्सार्थकमिति ज्ञातव्यम् । "अदृष्टमव्यवहार्यम्" इति श्रुत्यनुसारेण सूत्रभाष्ययोर्दर्शनपदमन्योपलक्षकमित्यभिप्रेत्याह—**मनोवाग्गोचरत्वादिति** । **प्रसिद्धचरणविलक्षण इति** । प्रसिद्धचरणस्य देहावयवत्ववद्भूतानां परमात्मावयवत्वाभावादिति भावः । **मूर्तित्रयविलक्षण इति** । "त्रिपादस्यामृतं दिवि" इत्युक्तश्वेतद्वीपानन्तासनवैकुण्ठगतनारायणादिमूर्तित्रयवद्भूतानां तत्स्वरूपांशत्वाभावान्मूर्तित्रयविलक्षण इत्यर्थः । **भूतपाद इति** । भूताख्यपाद इत्यर्थः ॥

नन्वेवं पुरुषपादयोरिव जीवेश्वरयोरभेदप्रतीतिः स्यादित्यत आह—**ज्ञातांशभावस्त्विति** । **उक्तं चेति** । एकादशस्कन्धतात्पर्ये तृतीयेऽध्याये—अस्यार्थः आनन्द इत्यनेनानुकूलवेदनीयत्वे ज्ञापिते ईदृशो न भवतीति वैलक्षण्ये चोक्ते विलक्षणानन्दः सिध्यति । विलक्षणानन्दाभावे बाधकमाह—**न चेति** । अत्र दर्शनशब्देन तद्विषयभूतानन्दो गृह्यते । यथावद्दर्शनभूतानन्दं विना लोकविलक्षणानन्दं विनेति यावत् । न चाभाति । नेदृशानन्द इति निषेधवचनार्थ इति शेषः । लौकिकानन्दादेरध्यक्ष(अनुभव)सिद्धत्वेन निषेधायोगादलौकिकानन्दाभावे निषेधवचनस्याप्रामाण्यं स्यादितिभावः । उपलक्षणं चैतत् । अलौकिकास्तस्येत्यादि **न्यायविवरणोक्तमपि** प्रमाणं ग्राह्यम् । "युज्यते
160 चोपदेशत." । "अन्यानन्दादिसादृश्यमानुकूल्यादिना परमि"त्यनुव्याख्यानं मनसि निधायाह—**व्युत्पत्तिरिति** ॥

सूत्रक्रमस्तु—प्रथमसूत्रे—परमत इति प्रतिज्ञायां सेतून्मानादयः साक्षाद्धेतव उक्ताः । द्वितीये—दृष्टत्वादयो हेतवो अर्थात्प्रदर्शिताः । तृतीये—अलौकिके आनन्दादिशब्दप्रदर्शनम् ॥ १६ ॥

॥ इति परमतोऽधिकरणम् ॥ १६ ॥

---

१. **यथावदिति** । पारमार्थिकं परमोत्कृष्टमिति यावत् ।

२. **सिद्धत्वेनेति** । साक्षिसिद्धत्वेनेति बोध्यम् ।

## (१७) ॥ स्थानविशेषाधिकरणम् ॥

### सू०॥ ओं ॥ स्थानविशेषात् प्रकाशादिवत् ॥ओं॥३५ (३६)॥

**तदभावे प्रागुक्तालौकिकत्वासंभवेनेति** । तदभावे प्रतिबिम्बत्वाभाव इत्यर्थः । अनेन "परमतः"सूत्रस्थसंबन्धपदेनोपक्षिप्तप्रतिबिम्बत्वविषयत्वेन तत्सूत्रोक्तालौकिकत्वाक्षेपेण च द्वेधानन्तरसङ्गतिरुक्ता भवति । **ब्रह्मानन्दादिप्रतिबिम्बत्वमुक्तमिति** । "परमतः"सूत्रे संबन्धपदेनेत्यर्थः । **भगवदानन्दादीति** । अत्र ब्रह्माद्यानन्दादिभगवदानन्दादिप्रतिबिम्बं न भवत्युत भवतीति चिन्ता । तदर्थं प्रतिबिम्बभूतब्रह्माद्यानन्दादिवैचित्र्यं[1] बिम्बभूतभगवदानन्दादिवैचित्र्यापादकमुत नेति । तदर्थं प्रतिबिम्बवैचित्र्ये[2] बिम्बवैचित्र्यातिरिक्तं कारणं नास्त्युतास्तीति । ब्रह्माद्यानन्दवैचित्र्येऽपि बिम्बभूतविष्ण्वान(न्द)न्दावैचित्र्यमिति न्यायविवरणं योजयति—**मिथो विचित्राणामिति** ॥

ननु विचित्रस्वभावानामपि जीवानामविचित्रभगवत्प्रतिबिम्बत्वस्य "अदृष्टानियमात्" इत्यत्र समर्थितत्वेन तन्न्यायेनेदमपि किं न स्यादित्याशङ्कां परिहरति—**न चादृष्टादिनियमेनेत्यादिना** । न हि सूर्यकान्तप्रतिबिम्बस्याग्निजनकत्वशक्तिर्न जलगतस्येत्येतावता सूर्यवैचित्र्यमिति न्यायविवरणं मनसि निधाय यथादित्यस्येत्यादिभाष्यं व्याचष्टे—**यथा खल्वित्यादिना** । अनेनादित्यादिवदाधिक्यादिति न्यायविवरणगतं सूर्यकान्तादिस्थानपरमादिपदमपि सूर्यकान्तवच्चतुर्मुखादिस्थानानामाधिक्यादित्युक्ततात्पर्यकं भवति । **प्रतिबिम्बत्वमायातीत्यस्य** बिम्बमेव प्रतिबिम्बत्वमायातीति तयोरैक्यप्रतिपादकत्वभ्रमनिरासायाह—**प्रतिफलित इति** । तदधीनत्वे सति तत्सदृशो भवतीत्यर्थः । **बिम्बभूतभगवदैश्वर्येति** । अनेनादित्यादिवदाधिक्यादिति [3]न्यायविवरणमप्यादित्यवद्बिम्बभूतस्य भगवत आधिक्या-

---

१. **वैचित्र्यमिति** । विशेषगुणाधायकत्वमथवा विशेषगुणवैशिष्ट्यमिति भावः ।

२. **प्रतिबिम्बेति** । बिम्बस्यैकत्वेन प्रतिबिम्बवैचित्र्य कथमिति विचार्यते ।

३. **न्यायेति** । Text restored.

दित्युक्तार्थं भवति । अत्र सूर्यचन्द्रादिप्रतिबिम्बं विनाऽन्यत्र तथा विशेषादृष्टेरिति **न्यायविवरणा**नुसारेण यथा सूर्यबिम्बसामर्थ्यात् सूर्यकान्तादौ सूर्यकादेरग्निजनकत्वादिवैचित्र्यं तथेत्यपि ग्राह्यम् । न हीत्यादिन्यायविवरणानुसारेण सूत्रद्वयस्यावश्यकत्वमाह—**स्यादेतदित्यादिना** । **उपयुज्यत इति** । तथा च द्वितीयं सूत्रं व्यर्थमिति भावः । **उपयोगेति** । तथा चाद्यं व्यर्थमित्यर्थः । **तस्य सर्वत्र साम्यादिति** । तस्य सूर्यरूपबिम्बसामर्थ्यस्य सर्वत्र जलादौ विद्यमानत्वेऽपि तद्गतसूर्यकादेरग्निजनकत्वाभावादिति भावः । अत्राद्ये सूत्रे स्थानसामर्थ्योक्तिः । द्वितीये—तदपेक्षया[1] अत्यावश्यकबिम्बसामर्थ्योक्तिः ॥ १७ ॥

॥ इति स्थानविशेषाधिकरणम् ॥ १७ ॥

---

## (१८) ॥ तथान्यदधिकरणम् ॥

## सू० ॥ ओं ॥ तथान्यत् प्रतिषेधात् ॥ ओं॥ ३७ ॥

**प्रकृतमिति** । "उपपत्तेश्च" इति सूत्रे प्रतिबिम्बवैचित्र्यघटकसामर्थ्यवत्त्वेन प्रकृतमित्यर्थः । तथा चात्र यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपीति पूर्वाधिकरणभेदरूपसाध्यस्याधिक्यरूपसिद्धान्तन्यायस्य चातिदेशादनन्तरसङ्गतिरिति भावः । **व्यक्तमिति** । अत्र ब्रह्म किं व्यक्तमव्यक्तं वेति चिन्ता । तदर्थमुपासाकृतेन चित्ते प्रतिबिम्बितेन ब्रह्माभिन्नमुत भिन्नमिति । तदर्थमुपासाकृतं किं दुर्लक्षणत्वादिदोषोपेतं न भवत्युत भवतीति । तदर्थं भेदे ब्रह्म स्वभिन्नोपासने फलदं न भवत्युत भवतीति । तदर्थं स्वभिन्नोपासनाविषयो[2] न भवत्युत भवतीति । **तस्य ध्यानकाल इति** । अनेन विष्णोश्चित्तप्रतिबिम्बरूपेति **न्यायविवरणां**शोऽपि व्याख्यातः । नानाभावाद्विष्णोरिति **न्यायविवरणां**शं तन्निवर्तनीयशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**ध्यानकाल** इत्यादिना । "पश्यन्ति परमं ब्रह्म" इत्यादिस्मृतिनिवर्तनीयविपक्षबाधकतर्कमाह-

---

१. **तदपेक्षयेति** । ध्यानसामर्थ्यापेक्षयाप्यावश्यकत्वं बिम्बसामर्थ्यस्येति द्रष्टव्यम् ।

२. **स्वेति** । भक्तचित्तप्रतिफलितस्य स्वभिन्नस्य रूपस्य ध्यानादिनेति यावत् ।

**अन्यथेति** । चित्प्रतिबिम्बितस्य ब्रह्मरूपत्वाभाव इत्यर्थः । सौत्र"तथा" शब्दार्थतद्विरुद्धधर्माधिकरणत्वरूपहेतुप्रतिपादकमाधिक्यादेव प्रतिबिम्बे हि दोषाश्च प्रतीयन्त इति **न्यायविवरणं** मनसि निधाय यथेत्यादिभाष्यं व्याचष्टे— **यथा खल्वित्यादिना** । अतो हि श्रुतिः प्रतिषेधति । नेदं यदिदमुपासत इति **न्यायविवरणं** व्याचष्टे— **निर्दोषदोषिणोरिति** । "यन्मनसा" इति श्रुतिप्रतीकग्रहणेन यन्मनसेत्यादिभाष्यमपि व्याख्यातं भवति । यदित्युक्तस्य ब्रह्मणः कर्तृत्वे येन ब्रह्मणामनोमतमित्यनेन व्याघातप्रसङ्गात्कर्तृपदाध्याहारेण वाक्यं योजयति—**पुरुष इति** । **स्थितिमात्रेणेति** । अनेन प्रतिबिम्ब इत्यनन्तरं तिष्ठतीति शेष इत्युक्तं भवति । तथा च चित्ते यत्प्रतिबिम्बितं तत्प्रतिबिम्बितं तत्परमं ब्रह्म पश्यन्तीति सामानाधिकरण्यं सादृश्याद्गौणमिति भावः । किं तु तदुपासनं भवतीति कर्तुरप्रतीतेराह—**प्रतिबिम्बोपासनमिति** । **दृश्यत इतीति** । परमं पदं ब्रह्मस्वरूपं ध्यानजज्ञानेनैवापरोक्ष्येण दृश्यते, न तु ध्यानकाले, अतो ध्यानकाले परोक्ष्येण चित्तप्रतिबिम्बितं[2] न ब्रह्मेत्यर्थः ॥ १८ ॥

॥ इति तथान्यदधिकरणम् ॥ १८ ॥

---

## (१९) ॥ अनेन सर्वगतत्वाधिकरणम् ॥

## सू०॥ ओं ॥ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॥ ओं ॥ ३८ ॥

**प्रकृत इति** । "तथान्यत्" इति पूर्वसूत्र इत्यर्थ । तथा च नाना- P. भावरूपपूर्वाधिकरणीयपूर्वपक्षन्यायेनैवात्रापि पूर्वपक्ष इत्यनन्तरसंगतिरिति भाव. ।

---

१ **इतीनि** । Text amended.

२. **प्रतिबिम्बितमिति** । परमदुरूहगहनयोगसाधनध्यानादिरहस्यार्थपरिज्ञानहीनानामाक्षेपाः श्रीविजयीन्द्र-गुरुपादै निपुणतमम् "मध्वाध्वकण्टकोद्धारे" निरस्ता द्रष्टव्याः । चित्प्रतिफलितस्य ब्रह्मत्वाभावेऽपि तस्य ध्यानविषयत्व न विरुद्धमिति भाव "अभिमतध्यानाद्वा" इति पातञ्जलं सूत्रम् ।

**किं सर्वेति** । अत्र परमेश्वरः किं सर्वदेशकालीनसृष्ट्यादिकर्ता न भवति । किं तु देशकालान्तरेऽन्योऽपि कर्ता उत स्वयमेव सर्वदेशकालीनसृष्ट्यादिकर्तेति चिन्ता । तदर्थं कदाचित् स्वातन्त्र्यमन्यस्मै ददात्युत नेति । तदर्थं तस्य स्वातन्त्र्यदानं किं संभावितमुतासंभावितमिति । **प्राचीनोक्तेरिति** । "जन्माद्यस्य यतः" इत्युक्तेरित्यर्थः । युक्तिमिति भाष्याभिप्रायमाह—**राजादीनमिति** । नानावतारकौतुकदर्शनाद्विष्णोः क्वचिद्देशकालान्तरे कौतुकादेव सृष्ट्यादिकर्मकुर्वन्नन्यमेव सामस्त्येन नियोजयतीति **न्यायविरणं** व्याख्यातुमाह—**न चेति** । कुतो नेत्यतः क्वचिद्देशकालान्तर इत्यादिन्यायविवरणांशं व्याख्याति—**भगवतैवेति** । नानावतारकौतुकदर्शनाद्विष्णोरिति **न्यायविवरणं** तन्निवर्तनीयाशङ्काप्रदर्शनपूर्वकं व्याचष्टे—**न चैतदसंभावितमित्यादिना** । **किं विष्णोरिति** । अत्राद्यपक्षद्वयं भाष्यानुरोधेन । तृतीयस्तु **न्यायविवरणानुरोधेनेति** ज्ञातव्यम् । **श्रुतिसद्भावादिति** । "एष सर्वः" इति "सर्वत्र" इति च भाष्योदाहृतश्रुतिसद्भावादिति भावः । अनेन "सर्वत्र सर्वमेतस्मात्" इति श्रुत्या क्रीडायामपि स्वातन्त्र्यावगमादिति **न्यायविवरणम**प्युक्तार्थं भवति । **तदभावादिति** । अनेनादिशब्दादन्यत्र प्रमाणाभावाच्चेति भाष्यमुक्तार्थं भवति । स्वातन्त्र्यात् क्रीडत इत्यादिन्यायविवरणोदाहृतश्रुतिं संयोजयितुमाह—**न चावतारेष्वि**[1]**ति** । क्रीडावगमादित्यनेन **न्यायविवरणे** श्रुतेश्चेत्यनन्तरमत्यक्तस्वातन्त्र्यस्यैव क्रीडावगमादिति शेष इत्युक्तं भवति ॥

ननु "एष सर्वः" इति सर्वगतत्वप्रतिपादकश्रुत्या कथं विष्णोः सर्वदेशकालीनसृष्ट्यादिसर्वकर्तृत्वसिद्धिरित्यत आह—**सर्वगतत्वं चेति** । सर्ववस्तुविषयं सृष्ट्यादीत्यर्थ इति । अनेन सर्ववस्तुष्विति विषयसप्तमी सर्वशब्दश्च सृष्ट्याद्यष्टकपर इत्युक्तं भवति । **इति संगृहीतमिति शेष** इति । प्रमाणाभावाच्चेत्यनन्तरमित्यर्थः ॥ १९ ॥

॥ इति **अनेन सर्वगतत्वाधिकरणम्** ॥ १९ ॥

---

१. **एवेति** । परमात्मा न कदापि स्वकीयं स्वातंत्र्य त्यजेत् । प्रेक्षावत्त्वादिति भावः ।

## (२०) ॥ फलाधिकरणम् ॥

## सू०॥ ओं ॥ फलमत उपपत्तेः ॥ ओं ॥ ३९ ॥

**प्रकृतो हरिरेवेति**। "अनेन" इति पूर्वसूत्रे सर्वदेशकालीनसृष्ट्यादिकर्तृतया प्रकृत इत्यर्थः। तथा च फलदातृत्वाभावे पूर्वोक्तसकलसृष्ट्याद्यष्टककर्तृत्वासंभव इति पूर्वाक्षेपेण प्रवृत्तेरनन्तरसङ्गतिरिति भावः। **किमिति**। अत्रे[1] कर्मैव फलदातृ उत हरिरेवेति चिन्ता। तदर्थं कर्मब्रह्मणो. फलदातृत्वे वा उपपत्त्यनुपपत्तीस्त उत ब्रह्मकर्मणोः फलदातृत्व इति। तदर्थम् "रातिर्दातुः इति" विशेषश्रुतिः ब्रह्मणः फलदातृत्वसाधिका न भवत्युत भवतीति। तदर्थं फलस्य कर्मान्वयव्यतिरेकानुविधायित्वं ब्रह्मणः फलदातृत्वविरोध्युत नेति। तदर्थं ब्रह्मकर्मणोः कर्तृ(का)करणभावे हेतुर्नास्त्युतास्तीति। **तदेवेति**। भाष्यगतैवकारव्यावर्त्यमाह—**नेश्वर इति**। अनेनेश्वरः फलदातेति प्रलोभमात्रमिति **न्यायविवरणांशो**ऽपि व्याख्यातो भवति। फलस्य कर्मान्वयानुविधायित्वप्रतिपादनपरतया कर्मापेक्षत्वात् फलदानस्येति भाष्यं व्याचष्टे—**यैरिति**। अपेक्षापदोक्तमा-[2]वश्यकत्वं विपक्षबाधकमुखेनोपपादयति—**अन्यथेति**।

"वैषम्यं निर्घृणत्वं च वेदाप्रामाण्यकारणम्" ॥

इत्युक्तेरिति भावः। व्यतिरेकानुविधायित्वमाह—**अकृतकर्मण इति**। फलितमाह—**एवं चेति**। अनेन कर्मान्वयव्यतिरेकात् फलस्येति **न्यायविवरणं** व्याख्यातं भवति। भाष्ये सौत्र "अतः" शब्दं सावधारणं व्याख्याय "फलमतः" इत्यत्रोपपत्तेरिति हेतोः स्फुटप्रतिभासादवधारणव्यावर्त्य एव न हीत्यनेन हेतुरुक्तः। स्वयं त्वीश्वर एवेत्यादिना प्रतिज्ञाभागं व्याख्यायोपपत्तेः सौत्रहेतुव्याख्यानपूर्वकं न हीत्यादिभाष्यं व्याचष्टे—**तस्य चेतनत्वेनेत्यादिना**। उपलक्षणमेतत्। तस्यैव स्वातन्त्र्यादिति **न्यायविवरणानुसारेण** स्वातन्त्र्यात् फलदानोपपत्तेरित्यपि ग्राह्यम्। **संभावनैवेति**। चेतनत्वस्य जीवेऽपि सत्त्वेन व्यभिचारान्न निश्चाय-

---

१. **अत्रेति**। भगवान् विष्णुरेवाऽशेषकर्मफलदातेति राद्धान्त इति द्रष्टव्यम्।

२. **अपेक्षेति**। Text amended.

कत्वमिति भावः। दानादिकर्ममात्रेण नेश्वरः फलदाता किन्तु स्वनिष्ठानादिपूर्वकर्मणेत्यभिप्रेत्य प्रवृत्तं तिष्ठमानस्येति श्रुतिशेषमनूद्य व्याचष्टे—**तिष्ठमानस्येति**। स्थितिमात्रस्य सर्वसाधारण्यात् स्वस्मिन् मनसेत्युक्तम्। रातिरित्यस्य "रा दाने" इति धातुजत्वमभिप्रेत्याह—**फलप्रदमिति**।

नन्वीश्वरात् फलमित्युक्ताक्षेपार्थं धर्मात् फलमिति सूत्रणीये "धर्मं जैमिनिरत एव" इति किमर्थमित्यतो न केवलं प्रथमसूत्राक्षेपार्थं किं तु द्वितीयसूत्रोपात्तश्रुतिगतिप्रदर्शनार्थं चैवं सूत्रविन्यास इति प्रदर्शनाय यतः फलमित्यादिभाष्यं प्रवृत्तमित्यभिप्रेत्य तद्भाष्याभिप्रायमाह—**इदं तु न्याय्यमिति**। **उपचारबीजमिति**। फलहेतुकर्मकरणेश्वरस्यापि फलप्रयोजकत्वरूपगुणयोगादिति भावः। भाष्ये "एषह्येव साधु कर्म कारयती"ति श्रुतिप्रतीकग्रहणम्। एष ह्येवा"साधु कर्म कारयती"ति उत्तरवाक्यमपि विवक्षितम्। अत एवोभयसंग्रहार्थं धर्ममिति पदं सामान्येन कर्मेति व्याख्यातमित्यभिप्रेत्याह—**धर्मपदमधर्मस्यापीति**। **द्वेधा व्याख्यातमिति**। "अत" **ईश्वराद्धर्ममेवेति**। "अत" एष ह्येवेति श्रुतेरेवेति च द्वेधा व्याख्यातं ज्ञेयमित्यर्थः। कर्तृत्वव्यपदेशात् करणत्वव्यपदेशादित्यनेन सूत्रभाष्ययोः हेतुशब्दो भावप्रधानः। स च द्वेधा [3]व्याख्येय
P 162 इत्युक्तं भवति। **सामान्यतः कर्मकारणत्वमिति**। कारणत्वमात्रं तु कर्मणः फलं प्रति करणत्वेऽप्युपपन्नमिति भावः। सूत्रभाष्ये तु जैमिनिमतावष्टम्भेन पूर्वपक्षयितुरेवाभिप्रायवर्णनपरे[4]; न तु जैमिन्याचार्याभिप्रायवर्णनपरे इति ज्ञातव्यम्। सूत्रक्रमस्तु अत्राद्ये—ईश्वरस्य फलदातृत्वे उपपत्तिरूपप्रमाणोक्तिः। द्वितीये—तदुपोद्बलकप्रबलविशेषश्रुतिरूपप्रमाणोक्तिः। तृतीये—तदुभयाक्षेपः। चतुर्थे—तत्समाधानमिति। अत्राद्यमधिकरणसप्तकमवस्थानां भगवदधीनत्वप्रतिपादकत्वेनैका पेटिका। तत्राद्ये—स्वप्नावस्थाया भगवदधीनत्वसमर्थनम्।

---

१ **स्थेति**। कर्मानुसारेण भगवान् फलं ददातीति भाव.।

२. **द्वेधेति**। "द्विधा" इति "मध्वविलास"पुस्तकपाठ·।

३. **व्याख्येय इति**। "हेतु"शब्द इति भावः।

४. **पर इति**। पूर्वपक्षयुक्तिप्रतिपादनपरे इति भाव.।

द्वितीये—तत्तिरोधानस्य भगवदधीनत्वसमर्थनम्। तृतीये—जागरावस्थायाः तदधीनत्वनिरूपणम्। चतुर्थे—सुप्त्यवस्थायां भगवतो जीवप्राप्यत्वसमर्थनम्। पञ्चमे—सुप्तिप्रबोधस्य तदधीनत्वसाधनम्। षष्ठे—सार्वकालीनसर्वावस्थानां भगवदधीनत्ववर्णनम्। सप्तमे—मोहावस्थायां भगवतो जीवप्राप्यत्वसमर्थनमिति। अष्टमे—विश्वादिरूपाणामभेदोक्तिः। नवमे—प्राकृतरूपराहित्यसमर्थनम्। दशमे—जीवाभेदनिरासः॥ एकादशद्वादशयोः—भक्तिरूपैकार्थविषयकत्वेन तदधिकरणद्वयमेकापेटिका। तत्राद्ये—भक्तेर्मोक्तानन्दानुभवफलकत्वसाधनम्। द्वितीये—वृद्धिह्रासभावत्वसमर्थनम्। त्रयोदशे—विश्वपालकत्वसमर्थनम्। चतुर्दशे—जीवशक्त्योपलब्ध्ययोग्यत्ववर्णनम्। पञ्चदशषोडशसप्तदशानाम् आनन्दादिगुणरूपैकविषयत्वेन तदधिकरणत्रयमेका पेटिका। तत्राद्ये—गुणस्वरूपस्य गुणित्वसमर्थनम्। द्वितीये—तद्गुणजातस्यालौकिकत्वसमर्थनम्। तृतीये—विचित्रब्रह्मानन्दादिविम्बभूतस्यापि तस्यावैचित्र्यसमर्थनम्। अष्टादशे—भगवतोऽव्यक्तत्वसमर्थनम्। एकोनविंशतिविंशत्यो—सकलजगज्जन्माद्यष्टककर्तृत्वप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका। तत्राद्ये—सार्वकालिकसार्वदेशिकसृष्ट्याद्यष्टककर्तृत्वसमर्थनम्। द्वितीये—तन्मध्यपतितकर्मफलदातृत्वस्य समर्थनमिति॥ २०॥

॥ इति फलाधिकरणम्॥ २०॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृतौ श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्वप्रकाशिकाभावबोधे
तृतीयाध्यायस्य द्वितीयः पादः

---

१. दशम इति। अस्मिन्नधिकरणेऽन्यत्र च भगवता सूत्रकारेणैव जीवब्रह्माऽभेदो निराकृत इति द्रष्टव्यम्।

२. तन्मध्य इति। सृष्ट्याद्यष्टकमध्ये इति भावः।

॥ श्रीः ॥

॥ श्रीवेदव्यासाय नमः ॥

# ॥ तृतीयः पादः ॥

## (१) ॥ सर्ववेदान्ताधिकरणम् ॥

### सू० ॥ ओं ॥ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ओं ॥ १ ॥

"अथ" "ब्रह्मजिज्ञासा" पदाभ्यामुक्तं साधनजातमस्मिन्नध्याये विचार्यत इत्यभिप्रायेण साधनविचारोऽयमध्याय इत्युक्तम् । तत्र "अथ"शब्देनोक्तयोर्वैराग्यभक्त्योः पादद्वयेन विचारितत्वादवसरप्राप्ता ज्ञानसाधनीभूता ब्रह्मजिज्ञासा अस्मिन् पादे उच्यत इति वक्तव्यम् । उपासनास्मिन् पाद उच्यत
P. 163 इति कथमुक्तमित्यत आह—**उपासना नामेति** । "तेनोपासा यदा भवेत् । आपरोक्ष्यं ततो विष्णोः" इत्यनुव्याख्यानानुसारेण "अस्मिन्" इत्यस्याभिप्रायमाह—**सा चेति** ॥

ननूपासनाप्रतिपादकेऽस्मिन् पादे सर्वपरिज्ञानोक्तिः कथं सङ्गता ? तस्याप्युपासनत्वेन सङ्गतत्वेऽपि प्रथमतस्तदुक्तौ किं निमित्तमित्यतः ।

"सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी" ।
"ध्यानरूपापराचैव"

इत्यनुव्याख्यानं मनसि निधाय सर्वपरिज्ञानमिति भाष्याभिप्रायमाह—**उपासना द्विविधेति** ॥

ननु श्रवणमनननिदिध्यासनानामेवोपासनात्वस्य जिज्ञासाधिकरणेऽभिहितत्वात् कथं सच्छास्त्राभ्यासस्याप्युपासनात्वमित्यत आह—**यामाहुरिति** । श्रवणमननयोर्ध्यानाङ्गत्वमेवोपपादयति—**समस्तेति** । अत्र श्रवणं तत्त्वज्ञानमुत्पाद-

---

१. **श्रवणमिति** । श्रवणादीनामुपासनारूपत्वमनुसन्धेयमिति भावः ।

यदज्ञानं निवर्तयति । मननं तु वेदार्थनिर्णयं कुर्वत्संशयविपर्ययौ निवर्तयतीति बोद्धव्यम् । अत एवेति । श्रवणमननयोरुपासनारूपत्वादेवेत्यर्थः । पूर्वसूत्रे पूर्वपदोक्ते ब्रह्मणि सर्ववेदान्तप्रत्ययत्वं विचार्यत इत्यनन्तरसङ्गतिः । यद्वक्ष्यति पूर्वसूत्रे पूर्वपदोदितं ब्रह्मेत्यादि । कर्तव्ये इत्युक्तमिति । जिज्ञासापदेनेत्यर्थः । किमेकैकेनेति । अत्र ब्रह्म किमेकैकेनैव सर्वशाखोक्तश्रवणमननाभ्यां ज्ञातव्यमुत स्वस्वशाखोक्तमिति चिन्ता । तदर्थं प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वं सर्वशाखोक्तज्ञानसाधकचोदनाद्यविशेषबाधकं न भवत्युत भवतीति । तदर्थं प्रतिशाखमुच्यमानानां पृथक्त्वं सर्वशाखाध्ययनाद्यभावरूपयुक्त्युपबृंहितं न भवत्युत भवतीति । तदर्थं सर्वशाखाध्ययनाद्यभावअशक्तिनिबन्धनो न भवत्युत भवतीति । तदर्थं चोदनाद्यविशेषरूपोपपत्तेर्बाधकत्वेनोपन्यस्तानां सर्वशाखाध्ययनाभावादीनामन्यथाकरणे मूलप्रमाणं नास्त्युतास्तीति । सामान्योक्तिरिति । ब्रह्मजिज्ञासा कर्तव्येति सामान्योक्तिरित्यर्थः । "भेदान्नेति चेत्" इति सौत्रपूर्वपक्षप्रदर्शनपरं प्रतिशाखमुच्यमानानामर्थानां पृथक्त्वात्तत्तच्छाखिभिरेव तत्र तत्रोक्तं ज्ञेयमिति नियम इति न्यायविवरणं मनसि निधाय पूर्वपक्षमाह—स्वस्वेति । अनेन तत्तच्छाखिभिरित्यादिसाध्यप्रतिपादकांशो व्याख्यातः । प्रतिशाखमित्यनेन हेत्वंशो व्याख्यातः । दर्शनादित्यनेन "पृथग्दृष्टिः" इत्यनुव्याख्यानानुसारेण न्यायविवरणे पृथक्त्वपदं तद्दर्शनोपलक्षकमित्युक्तं भवति । हेतुस्थिति(हेतूच्छित्ति)रूपविपक्षबाधकतर्कमाह—अन्यथेति । "सलिलवच्च तन्नियमः" इति सूत्रनिवर्तनीयं बाधकमाह—सर्वज्ञानमिति । पूर्वोत्तरविरुद्धमिति । पूर्वं प्रथमाध्याये मन्त्रब्राह्मणादिरूपस्य सर्वस्य वेदस्य समन्वयस्योक्ते "उपसंहारोऽर्थाभेदात्" इत्याद्युत्तरत्रापि सर्ववेदोक्तप्रकारेण ध्यानस्य वक्ष्यमाणत्वादत्रापि सर्ववेदपदेन मन्त्रादिरूपस्य सर्ववेदस्य ग्राह्यत्वात् "सर्ववेदान्त" इत्येकं पदमङ्गीकृत्योपनिषन्मात्रग्रहणं

---

१ सर्वेति । सर्वशाखाप्रतिपादितं ब्रह्म ज्ञातव्यम्, अथ वा स्वस्वशाखोदितमिति विचार्यते ।

२ हेतुस्थितीति । "अप्रयोजकत्व निरास" इति भावदीप अवतारिका । "हेतूच्छित्तिरूप" इति वर्तितव्यम् ।

पूर्वोत्तरविरुद्धमित्यर्थ । सूत्रे सर्ववेदानामन्तेन प्रत्ययो यस्येति व्यधिकरणो बहुव्रीहि । अन्तपदार्थश्च ब्रह्मेत्यभिप्रेत्य प्रवृत्तसर्ववेदेति भाष्य व्याचष्टे—**पूर्वसूत्र इति** । सूत्रभाष्ययोर्विवक्षितसाध्यस्य स्पष्टमप्रतीतेराह—**किमुक्तमिति** । अस्मिन् साध्ये सूत्रभाष्योक्तविध्यविशिष्टत्वस्य साक्षाद्धेतुत्वाभावात्तत्साध्य साक्षाद्धेतु तत्प्रश्नपूर्वकमाह—**कुत इति** । अधिकारिविशेषनिर्देशाभावस्य स्वरूपासिद्धयाशङ्कापरिहारार्थमात्मेत्यादिभाष्याभिप्रायमाह—**स हि भवन्नित्यादिना** ॥

नन्वधिकारिविशेषनिर्देशाभावेऽपि फलेत्यादिनाधिकारिविशेषनिश्चयो भविष्यतीत्याशङ्कानिरासपूर्वक सौत्र"आदि"शब्दव्याख्यानपर तत्रोक्तयुक्तीनाम-
164 विशिष्टत्वादिति भाष्यं व्याचष्टे—**न च वाच्यमित्यादिना** । **स्वर्गकामत्वादिति** । लोकेषणादेर्येत्यादीनामविहितत्वादिति भाव । **तत्रोक्तयुक्तीनामिति** । आत्मत्वमेव कुत उपास्यमित्याशङ्कायामात्मत्वे सर्वगुणानामन्तर्भावादित्यभिप्रायेण "अत्र ह्येते" इति वाक्यस्य प्रवृत्तत्वादिति भाव । **इतरांशस्येति** । तद्धैतदन्तर्ह्यव्याकृतमासीदित्यादिरित्यर्थ । **सर्वाधिकारिसाधारणा** । **एवेति** । सवेषामपि ज्ञानार्थिना मुमुक्षुत्वादिति भाव । इत्यादीतिभाष्यगतादिपदेन "श्रोता मन्ता"इति "य आत्मापहतपाप्मा"इत्यादि ऐतरेयच्छान्दोग्यादिशाखान्तरगत वाक्य गृहीतमित्यभिप्रेत्याह—**क्वचिच्छ्रोतृमन्त्रादीत्यादिना** । अध्ययनसाधारण्यस्य सर्वशाखोक्तप्रकारेण ब्रह्म ज्ञेयमिति साध्ये न साक्षाद्धेतुत्वमिति तत्साध्य साक्षाद्धेतुमाह—**अस्ति खल्वित्यादिना** । नन्वस्तु सर्वशाखानामेकैकेनाध्येतव्यत्वम् । तथापि न तदुक्तप्रकारेण ब्रह्म ज्ञातव्यमिति सिध्यति । अध्ययनविधेरक्षरग्रहणेनैव चरितार्थत्वादित्यत आह—**अध्ययन चेति** । "ज्ञानार्थमध्ययनार्थं गुणाना समुदीरणा" इति वक्ष्याम इत्यर्थ । **सुतरामधिकार इति** । बहुत्वेन परस्परविरुद्धत्वेनाशक्यानुष्ठानेषु सर्वकर्मसु यदाधिकारस्तदा "गति सामान्यात्" इत्युक्तप्रकारेणातादृग्रूपे ब्रह्मज्ञाने सुतरामधिकार इति भाव । शाखाभेद कर्मभेदमिति वक्ष्यमाणानुसारेणाह—**कर्मभेदश्चेति** । ज्ञातव्य-

---

१ **नन्विति** । अधिकारी, कल्प्यतामिति शङ्का कल्पकाभावादिति समाधानम् ।

२ **अध्ययनेति** । अध्ययनविधेरक्षरमात्रग्रहणपर्यवसायित्वमिति केचित् । वेदार्थज्ञानपर्यवसायित्वमिति सिद्धान्त ।

किं सकृदनुष्ठेयं उतावर्तनीयमिति चिन्ता । तदर्थं श्रवणादिविधेः ज्योतिष्टोमादिविधिवत् किं सकृदनुष्ठानमात्रेण चारितार्थ्यमस्त्युत नास्तीति । तदर्थं मोक्षाख्यमहाफलहेत्वपरोक्षज्ञानस्य सर्वसुशक्यत्वं किं गुण उत तदभाव एव गुण इति । तदर्थं श्रवणादिरदृष्टद्वारा फलहेतुरुत दृष्टफलद्वारा वेति । तदर्थं श्रवणाद्यावृत्तिकर्तव्यतायां प्रमाणं नास्त्युतास्तीति । "आत्मा वारे द्रष्टव्यः" इत्याद्युत्तरभाष्यानुसारेण पूर्वपक्षयति—**सकृदिति** । **सकृदनुष्ठिताग्निष्टोमेत्यादिना** । कुतो नेत्यतः श्रवणाद्यनावृत्त्याऽपरोक्षज्ञानोदये सर्वेषां सुशक्यत्वमिति, गुण इति **न्यायविवरणोक्त**युक्तिमाह—**उभयथा दर्शनेप्यनावृत्त्यैवे**त्यादिना । **श्रवणादेः पुनरिति** । निवृत्त्यादीति "आदि" पदेन प्रधानफलापरोक्षज्ञानस्यापि ग्रहणम् । तथा च भाष्योदाहृतश्रुतौ "द्रष्टव्यः" इति दर्शनानुवादेन श्रवणादीनां विधानात्तेषां दृष्टफलसाधनत्वमवगम्यत इति भावः । महाफलत्वात् सर्वेषामशक्यतया एवोपपन्नत्वादिति **न्यायविवरणा**भिप्रायमाह—महाफलस्य तदभावस्यैव गुणत्वादिति । अन्यथा सर्वसुशक्यस्यैव साधनतया सर्वेषां मोक्षापत्तेरिति **न्यायविवरणं** हृदि निधायाह—**सर्वेषामिति** ॥

ननु भाष्योदाहृते "पुनरेव वरुणं पितरमुपससार" इत्यत्र श्रवणाद्यावृत्तिर्न प्रतीयते । "अधीहि भगवो ब्रह्मेति, तं होवाच" इत्यादिप्रश्नोत्तरपर्यन्तं ग्रहणे पूर्वपूर्वश्रुतान्नादिपरित्यागेनोत्तरोत्तरमश्रुतप्राणादिविषय एव भृगोः प्रश्नो वरुणस्यापि तद्विषयकमेवोत्तरमिति प्रतीयते । अतः कथमेतच्छ्रवणाद्यावृत्तिसाधकमित्यतस्तत्पूर्वांशोदाहरणपूर्वकमुपपादयति—"**तस्मा एतत् प्रोवाच**" इत्यादिना । भाष्ये मनननिदिध्यासनावृत्तिप्रतिपादकत्वेनोदाहृतम् "स तपस्तप्त्वा" इति श्रुत्यंशं व्याचष्टे—**श्रुतस्य पुनरिति** । **आलोचनेनेति** । मननेन चेत्यर्थः । अस्त्वेवं श्रवणाद्यावृत्तिस्तस्यापरोक्षज्ञानार्थत्वं कुत इत्यत उक्तम्—**अपरोक्षितत्वेति** । अनेन "अन्नं ब्रह्मेति व्यजानात्" इत्यादिश्रुत्यंशः उक्ततात्पर्यको भवति । अत एवाह—**ज्ञानार्थमिति** । अनेन भाष्योदाहृतस्मृतिगतं ब्रह्मदर्शनमिच्छुभिरित्येतदुक्ततात्पर्यकं भवति ॥

---

१. **उतेति** । सकृदनुष्ठानमात्रं न पर्याप्तमिति भावः ।

२. **सर्वेषामिति** । सर्वसुलभसाधनसकृदनुष्ठानमात्रेण मोक्षश्चेत् सर्वेषामपि महाफललाभः स्यात् । तादृशार्थे श्रुतिप्रमाणमस्तीति द्रष्टव्यम् ।

अत्राद्ये—श्रवणाद्यावृत्तिकर्तव्यतायामुपदेशरूपलिङ्गोक्तिः । द्वितीये—श्रवणादित्रयाणामावृत्तेः कर्तव्यत्वे लिङ्गोक्तिरिति सूत्रक्रम. । यथोक्तं सुधायाम् अनेन श्रवणावृत्तेः कर्तव्यता सिद्धा । त्रयाणामप्यावृत्तिं साधयत् "लिङ्गाच्च" इति सूत्रमिति ॥ १ ॥

इत्यावृत्त्यधिकरणम् ॥ १ ॥

---

(२) ॥ आत्माधिकरणम् ॥

## सू०॥ ओं ॥ आत्मेति तु उपगच्छन्ति ग्राहयन्ति च ॥ ओं ॥ २ ॥

**आत्मत्वोपासनस्येति** । पूर्वमज्ञानादिनिवृत्त्यर्थं श्रवणाद्यावृत्तिः कर्तव्येत्युक्ते तथा सत्यात्मत्वस्य शश्वदतिप्रसिद्धत्वेन तद्विषयकाज्ञानाभावान्न तदुपासनं नित्यशः कर्तव्यमित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भाव । यद्वा पूर्वाधिकरणे सामान्यतः श्रवणाद्युपासनस्य नित्यश कर्तव्यत्वं समर्थ्यात्र तद्विशेषस्यात्मत्वोपासनस्य नित्यशः कर्तव्यत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भाव । **नित्यश इति** । अत्रात्मशब्दोदितस्वामित्वोपासनं किं नित्यशो न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं स्वामित्वस्य शश्वदतिप्रसिद्धिर्नित्यमुपास्यत्वप्रयोजिका न भवत्युत भवतीति । तदर्थमात्मत्वस्य नित्यश उपास्यत्वे प्रमाणं नास्त्युतास्तीति । शश्वदतिप्रसिद्धत्वादात्मशब्दोदितस्वामित्वं न नित्यश उपास्यमिति **न्यायविवरणानुसारेण** पूर्वपक्षमाह—**तत्रात्मत्वं न सर्वथेत्यादिना** । " स्वामी मे विष्णुरित्येव नित्यदोपास्यमञ्जसा" । इत्यनुव्याख्यानानुसारेण आत्मेत्युपासनमित्यादिभाष्यं व्याचष्टे—**विष्णुरात्मेत्युपासनमिति** । अनेन सौत्र"स्म"-मित्यादिभाष्यं व्याचष्टे—विष्णुरात्मेत्युपासनमिति । अनेन सौत्रात्मशब्दस्यावृत्ति. । तत्रैकस्याविवक्षितावयवार्थस्य विष्णुवाचकत्वम् । एकस्य स्वामित्वार्थकत्वमित्युक्तं भवति । **तस्यैव मोक्षसाधत्वादित्यादिना** तद-

---

१. **सुधायामिति** । श्रवण मनन निदिध्यासनानामावृत्ति कार्या । न त्वेकस्यैवेति भाव ।

भावेऽपीत्यन्तेन च मोक्षार्थिभि सर्वथेत्येतदुक्ततात्पर्यकम् । **अन्वयव्यतिरे-कित्वादिति** । मोक्षार्थिभि सर्वथेत्यादिना तस्योक्तत्वादिति भाव । **अविद्य-मानोपासन नैतदिति** । "हि" यस्मादेष विष्णुर्ममात्मा स्वामीति विष्णौ स्वामित्वस्य श्रुतावुपासने हेतुत्वेनोक्तेरिति भाव । सूत्रभाष्ययो श्रुतिसमानार्थत्वायाह—**"उपगच्छन्त्यु"पासते । "ग्राहयन्त्यु"पदिशन्तीति** । अन्येभ्योऽधिकफलत्वेन सविशेषत्वादात्मत्वस्येति **न्यायविवरणा**भिप्रायमाह—**उपासनस्य फलार्थस्येत्यादिना** ॥ २ ॥

॥ इत्यात्माधिकरणम् ॥ २ ॥

(३) ॥ प्रतीकाधिकरणम् ॥

## सू०॥ ओं ॥ न प्रतीके न हि सः ॥ ओं ॥ ४ ॥

**विष्णुप्रतीकैक्योपासनवर्जनस्येति** । पूर्वाधिकरणे यत्सर्वस्वामित्वमुपास्यमित्युक्त तदयुक्तम्[२] । "नाम ब्रह्मेत्युपासीत' इति वाक्यबलाद्ब्रह्मप्रतीकैक्योपासनस्य विहितत्वेन सर्वस्वामित्वस्येवासभवादिति पूर्वाक्षेपेण पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव । यद्वा **न्यायविवरणो**क्तरीत्या फलविशेषवत्त्वेनात्मत्वोपासनस्येव ब्रह्मप्रतीकैक्योपासनस्यापि फलविशेषवत्त्वादेव कर्तव्यमिति पूर्वाधिकरणसिद्धान्तन्यायेनात्र पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव । **ययुक्त सर्वस्वामित्वेनोपासनमिति** । "आनन्दादय प्रधानस्य" इत्यादावुपास्यत्वेनोक्त स्वामित्व संकोचे कारणाभावात् सर्वस्वामित्वमेव तदेव च।"रमेती"इत्यत्र विवक्षितमिति भाव । अत एव टीकाया वेदाना तैत्र महातात्पर्यमयुक्त स्यादित्युक्तम् ।

---

१ **अन्वयेति** । आत्मेत्युपासन यत्राधिकारिविशेषे तत्र मोक्ष । उपासनाभावे मोक्षाभाव इति वेदितव्यम् ।

२ **अयुक्तमिति** । प्रतीकोपासनमेव कर्तव्यमिति शङ्कते ।

१. **वेदानामिति** । महत्तात्पर्यं महासमन्वय सर्वत्वमिति भगवति रमारमण इति भाव । ' स एव सर्वस्य ' इति भगवत्पादा ।

न हि कतिपयस्वामित्वे महातात्पर्यम् किं तु सर्वस्वामित्व एवेति बोध्यम्। **तदयुक्तं स्यादिति** । प्रतीक एव तस्य स्वामित्वासंभवेन सर्वस्वामित्वायोगादिति भाव । **ब्रह्मतयेत्यादि** । अत्र नामवागादिक ब्रह्मतयोपास्यं भवत्युत न भवतीति चिन्ता। तदर्थं तदैक्योपासनं किं मोक्षफलकमुतानर्थफलकमिति । तदर्थं नामादिप्रतीकस्य ब्रह्मैक्यमस्त्युत नास्तीति। तदर्थम् "नाम ब्रह्म" इति श्रुतौ (श्रौत)सामानाधिकरण्य किं निरवकाशमुत सावकाशमिति । "नाम ब्रह्म" इत्युपासीतेत्यादिना शब्दभ्रान्त्येति भाष्यानुसारेणाह—**नाम ब्रह्मेतीति** । कुतो न योग इत्यतस्तर्हि विशेषफलत्वादेव प्रतीकमीश्वर इत्युपास्यमिति **न्यायनिरणोक्तमुपपादयति—यथा खल्वित्यादिना** । इत्यादिना "शब्दभ्रान्त्येति" भाष्ये शब्दभ्रान्त्येति समासकरणादेवेत्यादेवेत्यादिना इत्येतत्र शब्दविशेषणमित्यभिप्रेत्य तद्यथावद्व्याचष्टे—**अत्रैक्योपासनं निधीयत इत्यादिना । प्रतीके ब्रह्मदृष्टिः कार्येति** । अनेन' सूत्रे "प्रतीक" इति P 20 विषयसप्तमी, पूर्वासूत्रात् "आत्म" इतीत्यस्यानुवृत्ति "दृष्टि "इत्युत्तरसूत्रस्थस्यापि संबन्ध इत्युक्तं भवति। "न च विष्णु प्रतीक यत्' इत्यनुव्याख्यानानुसारेण सूत्रगतो "हि"शब्दो हेत्वर्थ इत्यभिप्रेत्य "न हि स " इति सूत्राश व्याचष्टे —**यतः स विष्णुरिति** । यत्र सन्धिरुपपत्तिर्विद्यते तस्यैव ग्राह्यत्वात्। अन्यस्येश्वरत्वग्रहणस्य मिथ्याज्ञानत्वादेवानुपपत्तेरिति **न्यायनिरणाभिप्रायमाह—अन्यथोपासनस्येत्यादिना । न्यायनिरणे** "सन्धिग्रहणे" इत्यनुव्याख्यानगत"सन्धि"पदमुपादायोपपत्तिरिति व्याख्यानमिति ज्ञातव्यम् । **प्रतीकसंस्थितत्वेनैवेति** । अनेन सूत्रे "प्रतीक" इत्यस्यावृत्ति । अधिकरणत्व सप्तम्यर्थ । पूर्वसूत्रात् "आत्मा" इत्यस्यात्रापि सबन्ध इत्यभिप्रेत्य किं तु तत्स्थत्वेनैवेति भाष्यं मनूद्यमित्युक्तं भवति ॥

---

१ अनर्थेति । ब्रह्मप्रतीकैक्योपासन विपरीतफलदमन्यथोपासनमिति भाव ।

२. अन्यथेति । अन्यथोपासने न केवलमिष्टफलाभाव , किं तु अनर्थफललाभश्चेति स्पष्टतर प्रत्यवायश्रवणात् प्रतीके ब्रह्म बुद्धिर्न कार्येति बोध्यम् ।

ननु, न वय ब्रह्मणि प्रतीकत्वोपासन कार्यमिति ब्रूम ; येन ब्रह्मकुपित-मनर्थं प्रयच्छेत् । किं तु प्रतीके ब्रह्मत्वोपासन तत पुरुषार्थप्राप्तिदर्शनादित्याशङ्क्य निषेधति—**न च वाच्यमिति** । कुतो न वाच्यमिति चेत्, क्षत्तरि राजदृष्टेरेवाभावात् ॥

ननु दृष्टेरभावे तथा व्यवहार कथमित्यत आह—**क्षत्तैव राजेत्यस्येति** । ननु कुतो दृष्टिर्नास्तीत्यत —

"पुरतो नरदेवस्य चण्डालो यदि पूज्यते ।
राजवत् किं न कोप स्यात् राज्ञो लोकेऽभिपश्यति ॥"

**इत्यनुव्याख्यान** मनसि निधायाह—**तथा ज्ञात इति** ॥ २ ॥

॥ इति प्रतीकाधिकरणम् ॥ ३ ॥

---

(४) ॥ ब्रह्मदृष्टयधिकरणम् ॥

## सू० ॥ ओं ॥ ब्रह्मदृष्टिरुत्कर्षात् ॥ ओं ॥ ५ ॥

**ब्रह्मत्वोपासनस्येति** । पूर्वाधिकरणे प्रतीके ब्रह्मदृष्टिर्नकार्येत्यत्र हेतुतया 'न हि स " इत्युक्ताभेदाभावे हेतुभूतब्रह्मत्वरूपव्यावर्तकधर्मोपासनस्यात्र विचारादनन्तरसङ्गतिरिति भाव । **उक्तहानिप्रसङ्गादिति** । "भूम्न " इत्यधिकरणे सर्वोपास्यत्वे हेतुत्वेनोक्तज्यायस्त्व भूमगुणस्य मोक्षान्वयव्यतिरेकवदुपास्तिविषयत्वेन साधितम् । भूमशब्दोक्तब्रह्मत्वस्यावश्यकत्वासमर्थने मोक्षान्वय-

---

१. **कुपितमिति** । यद्यपि "न मे द्वेष्योऽस्ति न प्रिय " इति भगवत कोपादि न भवति । एवमप्यन्ययोपासन कारण सत् स्वानुरूप कार्यमनर्थफल जनयतीति द्रष्टव्यम् ।

२ **चण्डाल इति** । "चण्डाल " इत्युपलक्षणम् । य कोऽपिवाऽतिनीचोऽस्त्वल्पश्च पूजनार्होऽपि प्राप्य ।

"चण्डालो नृप इत्युक्ते नृपश्चण्डाल इत्यपि ।
का विशेष "

इति भगवत्पादै ' कुप्यति ब्रह्मलोकात् " इति च ।

व्यतिरेकायोगेन ज्यायस्त्वहानिप्रसङ्गादित्यर्थः। **किमिति।** अत्र ब्रह्मत्वं किं सदा सर्वथोपास्यं न भवत्युत भवतीति चिन्ता। तदर्थं ब्रह्मत्वोपासनं विनापि मोक्षजनकीभूतेश्वरप्रसादो न भवत्युत भवतीति। तदर्थं न भवतीति पक्षे ब्रह्मत्वोपासनायाम् "आनन्दादयः प्रधानस्य" इत्युक्तविरोधः प्राप्नोत्युत न प्राप्नोतीति। प्रतिदिनं विविधगुणन्यासेन भगवत्प्रीत्युपपत्तेर्न ब्रह्मतादृष्टिनियम इति **न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह—भगवत्प्रसादाय हीत्यादिना।** **न्यायविवरणगत**"न्यास"शब्दार्थं उपसंहारेणोपासन इति **न्यायविवरणगत**-"नियम"पदस्यार्थमाह—**तथापि गुणान्तरसाम्यमिति।** अत्र सूत्रे "ब्रह्मदृष्टिः" कर्तव्येत्युच्यते। कुत्रेत्याकाङ्क्षायां सन्निधानात् प्रतीक इति प्राप्नोति। तच्च योग्यताविरहात् प्रागेव निराकृतम्। अतः साकाङ्क्षमिति ज्ञावान्यमित्यतो भाष्ये परमेश्वर इत्युक्तमित्यभिप्रेत्याह—**परमेश्वर इति।** तथाच "आरम"इति सूत्रादा"रम"शब्दोऽर्थवशात् सप्तम्यन्तोऽत्रानुवर्तत इत्युक्तं भवति॥

ननु सूत्रे "उत्कर्षात्" इति हेतुरुच्यते। तत्र न ज्ञायते कस्योत्कर्षात् इत्यतः "उत्कृष्टो ब्रह्मशब्दार्थः" इत्यनुव्याख्यानानुसारेण तद्व्याचष्टे। **भगवदुत्कृष्टत्वं हि ब्रह्मत्वमिति।** ब्रह्मत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यर्थः। तथा चोत्कर्षादुत्कर्षस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्वादिति सूत्रार्थ इति भावः। कथं भगवदुत्कृष्टत्वं ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यत अशेषगुणान्तर्भावेनेति **न्याय-विवरणं** सयोजयति—**तत्र सर्वगुणान्तर्भावेनेति।** अन्तर्भावितसर्वगुणत्वमेव सर्वोत्कृष्टत्वमिति भावः॥

ननु भगवदुत्कृष्टत्वस्य ब्रह्मशब्दप्रवृत्तिनिमित्तत्व परमेश्वरे ब्रह्मदृष्टिः कार्येत्यत्र कथं हेतुरित्यत आह—**तथा चेति॥** ननु विविधगुणोपासनेनैव भगवत्प्रसादसंभवे किमुत्कृष्टत्वोपासनेनेत्यतस्तस्यैवाधिकसाधनत्वादिति **न्याय-**

---

१ **योग्यतेति।** प्रतीकस्य जडत्वादिति भावः।

२. **अन्तर्भावितेति।** ब्रह्मत्वे सकलकल्याणगुणानामन्तर्भाव इति तस्य सर्वातिशायित्वं द्रष्टव्यम्।

**विवरणं** योजयति—**सर्वोत्कृष्टत्वोपासनं चेति । सर्वतो महत्त्वेति ।** लक्ष्म्यादिभ्य सर्वेभ्य इति पञ्चम्यन्तात्तसिरिति भाव । **गुणान्तरोपासनाधिक्येनेति ।** आधिक्येनेत्येतदध्याहृतम् । **तत्कार्यमिति भावेनाहेति ।** अनेन "अत्मेत्येव" इतिस्मृतिवाक्यस्य यदात्मेत्युपासा मोक्षसिद्ध्यर्थं कार्या तदा ब्रह्मत्वोपासनाभावेऽपि मोक्षाभावात् ब्रह्मत्वसयुताप्युपासा कार्यैवेति तात्पर्यमुक्तं भवति । **आत्मत्वविशेषणत्वेनेति ।** अनेनात्मेत्युपासा ब्रह्मत्वसयुतात्मत्वविशेषणत्वेन ब्रह्मत्वविषयिणीति व्याख्यातं भवति ॥ ४ ॥

॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

---

## (५) ॥ आदित्याधिकरणम् ॥

### सू०॥ ओं ॥ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ओं ॥ ६ ॥

**अङ्गाश्रितत्वेनेति ।** आत्मत्ववद्गुणत्वाविशेषेऽपि ब्रह्मत्वस्य नित्योपास्यत्वे विशेषहेत्वभावात, ब्रह्मत्वं नोपास्यमिति पूर्वाधिकरणपूर्वपक्षवदत्रापि गुणान्तरेषु सत्सु भगवदङ्गाश्रितत्वेन विशिष्य चिन्तने कारणाभावादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति भाव । **तन्न्यायेनेति ।** अङ्गाश्रितत्वस्यापि स्वस्वामिभावविशेषरूपत्वादिति भाव । (स्वस्य स्वोत्पत्त्यङ्गाश्रितस्यापि स्वस्वामिभावविशेषरूपत्वादिति भाव. ।) **सदेति ।** अङ्गाश्रितत्वेनोपासनं देवै सर्वथा न कर्तव्यमुत कर्तव्यमिति चिन्ता । तदर्थं देवाना तथोपासने फलं नास्त्युतास्तीति । तदर्थं देवाना तथोपासन किं मिथ्योपासनमुत सदुपासनमिति । तदर्थं जगत्प्रकाशनादौ विनियुक्ताना सूर्यादीना नित्यं भगवदङ्गाश्रितत्वं नास्त्युतास्तीति । विविधस्थानेष्वादित्यादीना चरणाद्विष्ण्वङ्गेषु आदित्यादिमतिनियमो नास्तीति न्याय-
P 202 निरणोक्तपूर्वपक्षयुक्तिमाह—**सूर्यादीनामिति । तथोपासनरयेति** सूर्यादीना चक्षुराद्याश्रयत्वेन उपासनस्येत्यर्थ । स्वोत्पत्तिस्थानत्वादित्यादिभाव्यनिवर्तनीयमाह—**गुणान्तरेष्विति । इत्यादिना यदुक्तमिति ।**

---

१ गुणान्तरेष्विति । अन्यगुणेषु विद्यमानेषु पुन प्रकृतस्य ग्रहणमिति शङ्क्ये ।

" ज्ञानार्थमथध्यानार्थं गुणानां समुदीरणा। "

इति " स्मृतिबलाद्गुणप्रतिपादकवाक्यानां ध्यानार्थत्वं सिद्धमिति भावः। " कृत्यानां कर्तरि वा " इत्युक्तेर्भाष्ये देवानामिति षष्ठ्युपपत्तिरिति भावेनोक्त**मादित्यादिदेवैरिति**। आकाङ्क्षाक्रमेण स्वोत्पत्तिस्थानादित्यादिभाष्यं योजयन्नादौ मुक्तौ तत्र ल्यबपेक्षिनत्वादिति भाष्य तावद्योजयति—**मुक्तावि**ति[1]। **नित्यं रूपान्तरेणेति**। स्वाश्रयत्वादिति भाष्यन्याख्यानपरेणानेन **न्यायविवरणमुक्ततात्पर्यकं** तत्कृतावेतत्कृत्यस्य प्राप्तत्वादादित्यादीनामिति भवति। तदक्षरार्थस्तु आदित्यादीनां तत्कृतौ विविधस्थानसचरणलक्षणकृत्यकृतावपि रूपान्तरेण विष्णवङ्गस्थितिरूपकृत्यस्य प्राप्तत्वादिति। स्मृताविर्थं भावप्रतीतेराह—**स्वाश्रयत्वेनेति** ॥ ५ ॥

॥ इति आदित्याधिकरणम् ॥ ५ ॥

---

## (६) ॥ आसीनाधिकरणम् ॥

## सू०॥ ओं ॥ आसीनः संभवात् ॥ ओं ॥ ७ ॥

**आसनादिनियमसमर्थनादिति**। पूर्वाधिकरणेषु प्रधानस्य ध्यानस्यावश्यकत्वमुक्त्वा इदानीं तदङ्गरूपासनादिनियमसमर्थनादनन्तरसङ्गतिरिति भाव। यद्यपि " आ प्रायणात् " इत्येतदनन्तरमेतद्भवेत्, तथापि यथा जिज्ञासूनामासनादिनियमस्य चित्तविक्षेपनिवारकत्वेन ध्यानस्य ज्ञानजनकत्वापादकत्वं न तथा ज्ञानिनां तेषां चित्तविक्षेपाभावादिति [2]विशेषप्रदर्शनाय तत पूर्वमेतत्करणमिति भाव। अत एव वक्ष्यते **जिज्ञासुरासीन एवेति**। आसनादिनियमेत्यादौ " स्मरन्ति च " इत्यादिसूत्रानुरोधेन " आदि " पदप्रयोग इत्यवधेयम्। अत

---

१ **मुक्ताविति** देवताना मुक्तावित्यर्थ।

२. **विशेषेति**। आसनाद्यनुष्ठाननियमे जिज्ञास्वपेक्षया ज्ञानिनामस्ति विशेष इति भाव.।

एव **न्यायविवरणे** आसनादिनेत्यादिपदप्रयोग इति ज्ञेयम्। **आत्मविशुद्धय इत्यादाविति।** "अत्रादि"पदेन "कायशिरोग्रीवम्" इत्युदाहरिष्यमाण-वाक्यसङ्ग्रह। **तदासनमत्र विषय** इत्यादौ आसनपदमन्यविषयोप-लक्षणमिति बोद्धव्यम्। **सर्वथेति।** अत्रासनादिसर्वथापेक्षितं न भवत्युत भवतीति चिन्ता। तदर्थमासनं विना मनस सम्यग्भगवद्विषयत्वं सभवत्युत न सभवतीति। तदर्थमासनस्य सर्वापेक्षितत्वे "स्मर्तव्य. सततं विष्णु" इत्यादि-विधयो विरुध्यन्ते उत न विरुध्यन्त इति। तदर्थमासनादिनियमग्राहकप्रमाणस्य सर्वदोपासनविधीनां किमेकविपयत्वमुत भिन्नविपयत्वमिति। भिन्नविपयत्वेऽपि प्रत्याहारादिनैवासननियमसाध्यत्वेनाभिमतश्चित्तविक्षेपपरिहारो भवत्युत न भवतीति। तदर्थमासनादीनामावश्यकत्वे प्रमाणं नास्त्युतास्तीति। तदर्थमा-सनादिनियमप्रतिपादकप्रमाणस्य देशकालादिनियमप्रतिपादकप्रमाणसमानयोगक्षेम-त्वमस्त्युत नास्तीति। ज्ञानस्य सम्यक्तद्विपयत्वमात्रेण पूर्तेरासनादिना न कार्यमिति **न्यायविवरणोक्तपूर्वपक्षयुक्तिमाह—तरकृत्याभावादित्यादिना।** "ज्ञानस्य" इत्यनन्तरम् "मनस" इति पदमध्याहृत्योदाहृत **न्यायविवरणं** योजयति—**तस्य च ज्ञानस्येति।** अध्याहाराभावे ज्ञानस्य सम्यग्भगवद्विषयत्व ज्ञानपूर्ति-हेतुत्वेन प्रतीयते। तच्चानुपपन्नमिति भाव। सर्वदोपासन कुर्वन्नपीत्यादि-भाष्याद्यनुरोधेनाह—**आसनं विनेति।**

"असीनस्य भवेत्तत्तु न शयानस्य निद्रया।
स्थितस्य गच्छतो वापि विक्षेपस्यैव सभवात्॥"

इति स्मृत्यनुसारेण तदा विक्षेपाल्पत्वेनेति भाष्यं व्याचष्टे—**आसीनस्य चित्त-विक्षेपाभावादन्यस्य तन्नियमादिति।** ध्यानविरोधिबहुचित्तविक्षेपाभावादित्यर्थ। आसनादिना निश्चलत्वादिविशेषकार्योपपत्तेरिति **न्यायविवरण** यदि निश्चलत्वं मनसो विवक्षित तदासीनस्य **चित्तविक्षेपाभावादित्यनेन** व्याख्यातमिति द्रष्टव्यम्। तत्र निश्चलत्वादीत्यादिपदेनासनादिनेत्यादिपदोक्तस्वनासिकाग्रावलोक-

---

१ ध्यानविरोधीति। अविच्छिन्नचिन्तावृत्तिप्रवाहरूपं ध्यान सति विक्षेपे न सुकर-मिति तद्दशविक्षेपाभावसपादनार्थं प्रयतितव्यमिति भाव। आसनाभ्यासेन विक्षेपाभावसाधन सुकरमिति वेदितव्यम।

नादिनिबन्धनान्यदर्शनाभावादिग्रहणम् । यदि निश्चलत्वपदेन शरीराचलत्वं विवक्षितं तदा **तच्चासने सत्येवेति** तदावश्यकमित्यनेन व्याख्यातं भवति । अस्मिन् पक्षे न्यायविवरणगतं द्वितीयादिपदेन मनसो निश्चलत्वमपि ग्राह्यम् । सर्वदोपासनं कुर्वन्निति भाष्याभिप्रायमाह–**सर्वदोपासनं कार्यमिति**[1]। "ध्याना-च्चे"ति" सौत्रनिर्देशो भावप्रधान इत्यभिप्रेत्य भाष्ये ध्यानत्वाच्चेत्युक्तम् । तत्व्याचष्टे—**उपासनाविशेषस्य ध्यानत्वादिति** । अनेन सूत्रभाष्य-योरुपासानाविशेष इत्युक्तं भवति । अत इति भाष्यं तदुक्तहेत्वाकाङ्क्षोत्थापन-पूर्वकं व्याचष्टे—**कुत एतदित्यादिना** । एतत् उपासनं **हि द्वेधाभवती-**त्यादिनोक्तमित्यर्थ. । **यतः स्मृतावुक्तमिति** । **उपासनं द्वेधा भवतीत्यादिना** । एवं स्मृतियोजनां सूचयति—**स्मरणेति** । लिङ्गव्यत्ययोऽविभक्तिकं वा । उपासनं स्मरणं ध्यानात्मकं चेति, द्विधैव । तत्र स्मरणमेव सर्वदा योग्यम् । ध्यान-रूपोपासनमासन एव भवति । ध्यानस्वरूपप्रदर्शनपूर्वकं तस्यासनादिनियम-सापेक्षत्वस्यान्वयव्यतिरेकाभ्यामुपपादनम् । **नैरन्तर्यमित्यादिना**[2] ॥ सुशकेन स्मरणेनैवालम् ; किं ध्यानेनेत्यत उक्तम्—**स्मरणात् परममिति**[3] । "कायशि-रोग्रीवम्" "अचलम्" "समम्" धारयन्नित्यनेनैव शरीरस्थैर्यात् स्थिर इति पुनरुक्तमित्यत आह—**स्थिरः स्थिरमना** इति ॥

नन्वत्र स्मृतावासनस्यावश्यकत्वानुक्तेः कथमेतदुदाहरणमित्यत आह—**अस्येति** । "दिशश्चानवलोकयन्" "उपविश्यासने युञ्ज्यात्" इति सम्बन्धा-दित्यर्थः । "तमेव" इति स्मृतौ "मनःप्रसादनार्थम्" इत्यादिवाक्यस्वारस्याय "न हि देशादिभिः"इत्येतत्तावत् द्वेधा व्याख्येयम् । ततस्तदनुसारेण सौत्र-"विशेष"पदमपि द्वेधा व्याख्याति—**नियतदेशकालादिनेति** । **स्वतन्त्र-देशादिनेति** च । भाष्ये "अवस्थादे" इति "आ"दिपदेन भोगादेरपि P 20

---

१. **सर्वदेति** । उपासनासाध्यफलाधिगमपर्यन्तमिति भावः ।

२. **नैरन्तर्यमिति** । नैरन्तर्यं मनोवृत्तेर्ध्यानम्.. .." इति भाष्ये उदाहृतं द्रष्टव्यम् ।

३. **स्मरणादिति** । "स्मरणात् परमं ज्ञेयं ध्यानं ...." भाष्योदाहृत-वचनमिदम् ।

ग्रहणादाह—स्थातव्यमित्युपलक्षणमिति। देशकालादिव्यतिरिक्तामवस्था-माह—अवस्थितिरासनमिति ॥

नन्वेवं सत्यासनस्यापि देशकालादिवदनियमे प्रागुक्तविरोधः स्यादित्यत आह—तच्चेति। पद्ममेवेति 'एव'कारस्य वीरमेवेत्यपि संबन्धः। आसनसामान्य-स्यावश्यकत्वेऽपि न तद्विशेषनियम इति भावः। अत्राद्ये—आसनस्यावश्यकत्वे उपासनकारणत्वरूपहेतूक्तिः। द्वितीये—आसननियमस्य "स्मर्तव्यः सततम्" इत्यादिसर्वदोपासनविधिविरोधपरिहाराय नोपासनमात्रे आसननियमः; किं तु ध्यानरूपोपासनविशेष एवेत्यभिप्रेत्यासनादिनियतिमत उपासनस्य ध्यानत्वोक्तिः। तृतीये—आसननियमफलस्य चित्तविक्षेपाभावस्य प्रत्याहारादिनान्यथासिद्ध्युद्धारः।

---

१. पद्ममिति। अत्रेदं बोध्यम्। "स्थिरसुखमासनम्" इति पातञ्जल-योगसूत्रम्।

"हठस्य प्रथमाङ्गत्वादासनं पूर्वमुच्यते"

इति हठयोगप्रदीपिकायां। मन्त्र-लय-हठ-राज-प्रभेदैर्योगस्य चातुर्विध्यम्।

"चतुरशीत्यासनानि शिवेन कथितानि वै।
तेभ्यश्चतुष्कमादाय सारभूतं ब्रवीम्यहम्॥"

"सिद्धं पद्मं तथा सिंहं भद्रं चेति"

हठयोगप्रदीपिका। एवमपि सिद्धासन एव सदा तिष्ठेदित्यपि।

किं च—

"आसनानि च तावन्ति यावन्त्यो जीवजातयः।
एतेषां विपुलान् भेदान् विजानाति महेश्वरः॥"

इति केचित्। तथा च चतुरशीतिलक्षासनानि भवन्ति।

अपि च—

"आसनेन रुजं हन्ति प्राणायामेन पातकम्।"

इति केचित्।

पद्मासनं, वीरासनं, वेति टीकाकाराः। यद्यपि योगशास्त्रे "नाऽऽसनं सिद्ध-सदृशम्" इति सिद्धासनस्योत्कर्षः प्रतिपाद्यते। न टीकाकारोक्तिविरोधः। सिद्धाति-रिक्ताऽऽसनेषु पद्मस्य वा वीरस्य वा श्रेष्ठोक्तिरत्र [illegible]।

अथवा सिद्धासनस्य सर्वोत्कृष्टत्वे नाभिनिवेष्टव्यम्। पद्मस्य वा वीरस्य वा सिद्धासन-[illegible]। स्थैर्यं सौख्यं च [illegible] साधकस्य सौकर्यानुसारेण [illegible] फलितम्।

चतुर्थे—आसनस्यावश्यकत्वे प्रमाणोक्तिः । पञ्चमे—प्रमाणस्यानियतदेशकालादिसापेक्षत्वप्रतिपादकप्रमाणसमानयोगक्षेमत्वोद्धार इति सूत्रक्रमः ॥ ६ ॥

॥ इति आसीनाधिकरणम् ॥ ६ ॥

---

## (७) ॥ आप्रायणाधिकरणम् ॥

### सू०॥ ओं ॥ आप्रायणात्तत्रापि हि दृष्टम् ॥ ओं ॥ १२ ॥

**अत्र भगवज्ज्ञानसाधनध्यानस्येति ।** भगवज्ज्ञानसाधनत्वेन विहिते यस्मिन् ध्याने पूर्वाधिकरणे आसननियम उक्तस्तस्य ध्यानस्य ज्ञानिनामाप्रायणान्तत्वं समर्थ्यत इत्यनन्तरसङ्गतिरिति भावः । **ध्यानफलाभावप्रसङ्गेनेति ।** अपरोक्षज्ञानानन्तरकृतध्यानस्य आनन्दादिवृद्धिलक्षणफलाभावप्रसङ्गेनेत्यर्थः । **किमित्यादि ।** अत्र ध्यानं किं ज्ञानपर्यन्तमेव कर्तव्यमुत मुक्तिपर्यन्तमपीति चिन्ता । तदर्थं ज्ञानिकृतध्यानस्य फलं नाम्स्युतास्तीति । तदर्थं तत्फलत्वेनाभिमतानन्दातिशयः किं श्रवणादिसाधनान्तरेणान्यथासिद्धो भवत्युत न भवतीति । यावन्मोक्षस्तावदुपासनादीति भाष्यनिवर्तनीयं पूर्वपक्षमाह—**ज्ञानपर्यन्तमेवेत्यादिना ।** अन्यस्यापि साधनस्य कर्तुं शक्यत्वान्न यावन्मुक्ति ध्यानं कार्यमिति **न्यायविवरणं**तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे—**न चानन्दातिशयार्थमित्यादिना ।** ननु श्रवणादित्रयस्य ज्ञानसाधनत्वेऽपि यथाध्यानमेव प्रबलं साधनं तद्वदत्रापि ध्यानस्य प्राबल्यं किं न स्यादित्यत आह—**ज्ञान एवेति ।** यावन्मुक्ति ध्यानं न कार्यमिति वदता किं मुक्तेः पूर्वं कदापि ध्यानं न कार्यमित्युच्यते, उतापरोक्षज्ञानानन्तरमेवेति विकल्पं हृदि निधायाद्यपक्षनिराकरणपरत्वेन ध्यानं विनापरोक्षज्ञानाख्यविशेषकार्यानुपपत्तेरिति **न्यायविवरणं** व्याचष्टे—**ध्यानं विनेति ।** द्वितीयमाशङ्क्य तन्निराकरणपरत्वेन स य इति भाष्यं व्याचष्टे—**तथापीति । कैमुत्येनापीति ।** अनेन "तत्रापि" इति

---

१. ध्यानमिति । मुक्तिपर्यन्तं ध्यानं कर्तव्यमिति सिद्धान्तः । ज्ञानपर्यन्तमेवेति पूर्वः पक्षः ।

सूत्रांशो विमुक्तावपीति, एतच्छ्रुत्युदाहरणेनोक्ततात्पर्यको भवतीति सूचितम्। भाष्योदाहृतश्रुतिद्वये उपासनामात्रस्य श्रुतत्वात् किमर्थं तत्पूर्वभाष्ये उपासनादि" इति "आदि"पदप्रयोग इत्यत आह—**ज्ञानात्पूर्वमिति**। "भक्तिश्चानन्तकालीना"इति उत्तरार्धानुसारेणाह—**दृष्टतत्त्वस्य च ध्यानं निरवधिकमिति**। अनेन दृष्टतत्त्वपुंसः परमे ब्रह्मणि विषये ध्यानं निरवधिकं स्फुटा भक्तिश्चानन्तकालीना। तत्र हेतुर्यदा यस्मात्दृष्टिः फलत्वेन न विद्यते सिद्धत्वादिति स्मृतियोजना सूचिता भवति। **मोक्षविरोधादिति**। ज्ञानोत्तरं निरवधिकध्यानस्य विहितत्वेन करणे मोक्षेऽपि तथाकरणापत्त्या विधिबन्धवर्जितत्वरूपमोक्षत्वविरोधादित्यर्थः। **करणानुपपत्तेरिति**। मोक्षात् पूर्वमित्यर्थः। **ध्यानस्यैवेति**। "शमः कारणम्" इत्यत्र शमशब्देन ध्यानस्यैव विवक्षितत्वादिति भावः॥ ७॥

॥ इति आप्रायणाधिकरणम्॥ ७॥

---

## (८) ॥ तदधिगमाधिकरणम्॥

### सू०॥ ओं॥ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्॥ ओं॥ १३॥

**अन्यथा मोक्षाभावप्रसङ्गेनेति**। यज्ज्ञानिनां ध्यानस्य विहिततया कर्तव्यत्वं मोक्षपर्यन्तमित्युक्तम्, तन्न; प्रागापादितकर्मणां प्रतिबन्धकानां सत्त्वेन ज्ञानेन मोक्षस्यैवाजननादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः। **उक्तव्याहतेरिति**। "अनियमः सर्वेषाम्" इत्युक्तव्याहतेरित्यर्थः। **मोक्षमि-**

---

१. **शमेति**। योगारूढेनापि ध्यानं कर्तव्यमिति भावः। आनन्दानुभवातिशयलाभार्थमिति द्रष्टव्यमिति।

२. **प्रतिबन्धकेति**। पूर्वजन्मार्जितकर्मरूपप्रतिबन्धकसद्भावेन ब्रह्मज्ञानेन मोक्ष एव न भवतीति शङ्क्यते। यद्येवं तर्हि किमर्थं ध्यानमिति पूर्वाक्षेपेण प्रकृतोत्थानमिति द्रष्टव्यम्।

त्यादिना । अत्रापरोक्षज्ञानं किं मोक्षं जनयति उत न जनयतीति चिन्ता ।
तदर्थं प्रागुत्तरं चापादितकर्मणां मोक्षप्रतिबन्धकत्वं संभवत्युत न संभवतीति ।
तदर्थं तेषां पूर्वोत्तरकालं कृतानां ज्ञानेन विनाशाश्लेषौ न सम्भवत उत संभवत
इति । विनाशाश्लेषपक्षेऽपि किं सर्वेषां विनाशाश्लेषावुत प्रारब्धानामेवेति ।
तदर्थं प्रारब्धानां भोगैकनाश्यत्वे प्रमाणं नास्त्युतास्तीति । अथवा ब्रह्मविषयका-
परोक्षसम्यज्ज्ञानमिथ्याज्ञाने मोक्षान्धंतमसी न साधयत उत साधयत इति
चिन्ता। तदर्थं प्रागुत्तरमापादितसम्यज्ज्ञानिमिथ्याज्ञानिपापपुण्यकर्मणां मोक्षान्धं-
तमसप्रतिबन्धकत्वमस्त्युत नास्तीति । तदर्थं तेषां सम्यज्ज्ञानमिथ्याज्ञानाभ्यां
विनाशाश्लेषौ न भवत उत भवत इति । विनाशाश्लेषपक्षेऽपि किं सर्वेषां
विनाशाश्लेषौ उत प्रारब्धानामेवेति । तदर्थं सम्यग्ज्ञानिमिथ्याज्ञानिनोः पुण्य-
पापयोर्भोगैकनाश्यत्वे प्रमाणं नास्त्युतास्तीति । **प्रागापादितेत्यादिना** "तद-
धिगमे" इत्यादिसूत्रसूचितपूर्वपक्षयुक्तिमभिधाय ज्ञानोदय अशेषकर्मक्षये कृतकृत्य-
त्वात् तदैव मुक्तिः । अथ न ज्ञानानन्तरमेव मोक्ष इति **न्यायविवरणोक्तपूर्व-**
**पक्षयुक्तिमाह—किं चेत्यादिना । अथ न ज्ञानानन्तरमेव मोक्ष** इति । P 2
अनेन न्यायविवरणे न चेत्यत्रापि मुक्तिरिति संबध्यत इत्युक्तं भवति । **न च**
**वक्तव्यमित्यादिना** । अनेन ज्ञानोदयेऽशेषकर्मक्षयो न चेत् कदापि कर्मक्षय
इति न्यायविवरणवाक्यं प्रकारान्तरेण व्याख्यातं भवति । **पूर्वपापविना-**
**शादुत्तरस्याश्लेषाच्चेति** । सूत्रभाष्यस्थक्रमोल्लङ्घनं कर्मक्रमानुसारेणेति ज्ञातव्यम् ।
स्तुत्यधिकरणे "कामचारेण चैके" इति सूत्रेण ज्ञानि[1]कृतपापानां मोक्षप्रति-
बन्धकत्वं नास्तीत्युक्तम् । अत्राश्लेषपदेन ज्ञानिकृतपापस्येह लोकेऽशुचित्वादि-
हेतुत्वं परलोके नरकाद्यनर्थहेतुत्वं नास्तीत्युच्यते । तत्रैव "उपमर्दं च" इति सूत्रेण
प्रारब्धजस्य फलस्यैव ज्ञानिनामल्पीयान् भोगो न त्वज्ञवद्यावद्भोग इति उक्तम् ।
इह तु विनाशपदेन प्रारब्धानामेव स्वरूपविनाश उच्यत इति न ताभ्यामस्य
गतार्थते[2]ति ।

---

१. **ज्ञानीति** । पूर्वपापानामिति भाव. ।

२. **गतार्थतेति** । प्रतिपाद्यविषयविशेषसद्भावेन न चारितार्थ्यमिति द्रष्टव्यम् ।

" ज्ञानोत्तरस्य पापस्य चतुर्थेऽश्लेष उच्यते ।
अशुचित्वादिकं चास्य न भवेदिति तत्फलम् ॥

अत्र ज्ञानफलस्यैव मुक्तेर्नियततोच्यते ।
प्रारब्धकर्मजस्यैव विषमक्षान्मृतेरिव ॥

प्राप्तस्याप्यनिवृत्तस्य किञ्चिद्भुक्तस्य संविदा ।
उपमर्द इह प्रोक्तः ........................ " ॥

इत्यनुव्याख्यान एवोक्तम् । उपपादितं च सुधायाम् । **अनत्परिहारार्थं** इतीति । यथा दग्धगेहेष्टेः गृहदाहनिमित्तमेव न तु तज्जनितपापपरिहारार्थत्वम् । दग्धस्य पुनः परावृत्त्यभावात् । तथा प्रायश्चित्तस्यापि ब्रह्महननादिनिमित्तकत्वमेव ; न तु तज्जनितपापपरिहारार्थत्वम् । " नाभुक्तं क्षीयते कर्म " इति स्मृतिविरोधादिति भावः । **नास्माभिः सर्वपाप इत्यादिना** प्रारब्धस्य कृतस्य यावद्भोगं संस्थितेरिति न्यायविवरणमप्युक्ततात्पर्यकं भवति । **"चार्थः" "स्तु"शब्द इति** । अनेन "तदधिगमस्तु" इति "तु"शब्दसंबन्ध इत्युक्तं भवति । **तदधिगमाख्यकार्ययेति** । अनेन तच्च तत्कार्यं चेति विग्रह उक्तो भवति । **ज्ञानकार्येति** । अनेन तस्य कार्ययेति षष्ठीतत्पुरुष इत्युक्तं भवति । **इत्युभयस्यापि मोक्षानुप्रवेशितत्वादिति** । अनेनाग्निहोत्राद्यपि मोक्षेऽनुभवायैवेति भाष्यं मोक्षे[1] फले विवक्षिते तज्जनकापरोक्षानुभवायेति ; मोक्षे जाते आनन्दानुभवायेति च द्वेधा व्याख्यातं भवति । उक्तार्थद्वयपरत्वेन " स य आत्मानमेव लोकमुपास्ते " " न हास्य कर्म क्षीयते " इति वाक्यं द्वेधा व्याचष्टे—**यो जिज्ञासुरित्यादिना** । " भाक्तं वानात्मवित्त्वात् " इत्यत्र मोक्षस्य कर्मसाध्यत्वप्रतिपादकश्रुतिगतिप्रदर्शनाय पूर्वोत्तराकाम्यपुण्यकर्मणां परंपरया साक्षाच्च मोक्षानुप्रवेशत्वोक्तिः । अत्र तु पूर्वोत्तराकाम्यपुण्यकर्मणां मोक्षप्रतिबन्धकत्वाशङ्कानिरासायोक्तकारणद्वयेन मोक्षानुप्रवेशोक्तिरिति फलभेदान्न पुनरुक्तिः । " अप्रारब्धमनिष्टं चेत् " इति स्मृत्यनुसारेण श्रौतं " साधुकृत्या "

---

१ **मोक्ष इति** । मोक्षलाभात् पूर्वं पश्चाच्चेति कालभेदो विवक्षितः । कालभेदेनाग्निहोत्रादेरुपयोगभेदश्च भवतीति भावः ।

शब्दं व्याख्याति —**अत्रापीति**। सूत्र इव श्रुतावपीत्यर्थः। महानन्तफलत्वा- P. 205 युक्तस्तस्य मोक्षानुप्रवेश इति पुरुषार्थाधिकरणे "तच्छ्रुतौ" इत्यत्र विद्यायुतं कर्म मोक्षेतरपुरुषार्थाय प्रभवतीत्युक्तम्। अत्र मोक्षगतानन्दातिशयाय प्रभवतीत्युच्यत इति। न तेनास्य पौनरुक्त्यमिति।

"पूर्वं स्वर्गादिसिद्ध्यर्थं वीर्यवत्त्वेन चोदितम्।
कर्म विद्यायुतं पश्चान्मोक्षवीर्यप्रदं त्विति॥"

इति **अनुव्याख्यान** एवोक्तम्। **नश्यतीत्यादीति**। पूर्वतनमनिष्टं चेन्नश्यति। उत्तरमनिष्टं चेन्न श्लिष्यत इत्यर्थः। **प्रारब्धं भोगेन क्षपयित्वेति**। अनेन यावद्भोगं संस्थितेरिति **न्यायविवरणांशो**ऽप्युक्तार्थो भवति। अनेन "न चेन्न कर्मक्षयः" इत्याक्षेपः परिहृतो भवति। **ब्रह्मणां शतस्येति**। अनेन ब्रह्मणां शतमिति षष्ठ्या अलुक्; तस्य कालो ब्रह्मणां शतकालः। तस्मात्तत्समासः पूर्वमेव सर्वेषां ज्ञानिनामारब्धसक्षयो भवतीति स्मृतियोजनोक्ता भवति। **प्रजहातीति**। इत्यादिज्ञानस्वरूपप्रतिपादकवाक्याच्च बन्धककर्मत्यागश्रवणादिति भावः। अत्र कर्माणि क्षपयेद्विष्णुरिति **न्यायविवरणो**दाहृतस्मृतौ "तथोपास्याञ्जसा दृष्टं ब्रह्म" इत्य**नुव्याख्याने** चोक्तप्रकारेण न ज्ञानसामर्थ्येन कर्मक्षयो भवति; किं तु ज्ञातेन ब्रह्मणैवेति "तदधिगम" सूत्रतात्पर्यमुक्तमिति ज्ञातव्यम्।

अत्राद्ये—ब्रह्मज्ञानस्य ज्ञानिकृतपूर्वोत्तरपापविनाशाश्लेषहेतुत्वं प्रतिज्ञाय तत्र प्रमाणोक्तिः। द्वितीये—मिथ्याज्ञानस्यापि मिथ्याज्ञानिकृतपूर्वोत्तरपुण्यविनाशाश्लेषहेतुत्वोक्तिः। यद्येवं ब्रह्मज्ञानिद्वेषिणोर्ज्ञानादिनैव पुण्यपापक्षयः तर्हि ज्ञानाद्युदय एव मोक्षादिप्रसङ्ग इत्याशङ्कानिरासाय, तृतीये—प्रागुक्तविनाशाश्लेषावप्रारब्धपापपुण्ययोरेव न तु प्रारब्धयोरिति प्रतिपादनम्॥

---

१. अत्रापीति। Text restored.

२. ब्रह्मणेति। कर्मक्षयस्तावन्न ज्ञानप्रभावेण भवति, किं तु ज्ञातस्य भगवतः प्रमादेनैवेति भाव.।

ननु ज्ञानिकृतपापस्य ज्ञानेन विनाशाश्लेषयोरपि तत्कृतपूर्वोत्तरपुण्यस्य प्रतिबन्धकस्य सत्त्वात् कथं मोक्ष इत्याशङ्कानिरासाय तत्पुण्यं किमकाम्यमुत काम्यमिति विकल्प्य हृदि निधाय, चतुर्थे—अकाम्यस्य मोक्षानुप्रवेशित्वोक्तिः। पञ्चमे—अनिष्टकाम्यस्य विनाशाश्लेषोक्तिः। ननु नाशश्लेषरहितस्वफलस्य कर्मणो मोक्षानुप्रवेशित्वं कथमित्याशङ्कापरिहाराय, षष्ठे—काम्यकर्मणोऽपि ज्ञानिकृतस्यानन्तमहाफलत्वसमर्थनम्। नन्वेवमप्रारब्धपुण्ययोर्नाशाश्लेषविनियोगसत्त्वेनाप्रतिबन्धकत्वेऽपि प्रारब्धयोस्तयोः प्रतिबन्धकत्वात् कथं ज्ञानादिना मोक्षादीत्याशङ्कानिरासाय, सप्तमे—प्रारब्धयोरपि पापपुण्ययोः भोगेनैव[1] विनाशोक्तिरिति सूत्रक्रम ॥

अत्र फलान्तरङ्गतयावश्यंभाविसाधनप्रतिपादकतयाधिकरणसप्तकमेका पेटिका। तत्रापि ज्ञानसाधनानां मध्ये प्रधानभूतश्रवणादेरवश्यकर्तव्यत्वप्रतिपादकतया आद्यमधिकरणपञ्चकम् अवान्तरपेटिका। तत्राद्ये—श्रवणाद्यावृत्तेर्नित्यकर्तव्यत्वसमर्थनम्। द्वितीये—आत्मत्वोपासनस्य कर्तव्यत्वप्रतिपादनम्। तृतीये—आत्मत्वोपासनोपयोगितया प्रतीकेष्वोपासनवर्जनस्य वर्णनम्। चतुर्थे—ब्रह्मत्वोपासनस्य कर्तव्यत्ववचनम्। पञ्चमे—स्वोत्पत्त्यङ्गाश्रितत्वेन भगवदुपासनस्य देवैः कर्तव्यत्वोपपादनमिति। षष्ठे—ज्ञानप्रधानसाधनभूतध्यानाङ्गस्यासननियमस्य साधनम्। सप्तमे—ज्ञानिनामपि ध्यानस्याप्रायणान्तत्वसमर्थनमिति। अष्टमे—कर्मक्षयलक्षणमोक्षप्रतिपादनमिति ॥ ८ ॥

॥ इति तदधिगमाधिकरणम् ॥ ८ ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्व-
प्रकाशिकाभावबोधे चतुर्थाध्यायस्य
प्रथमः पादः ॥ १ ॥

---

१ भोगेनैवेति। प्रारब्धस्य विना भोगं न विनाश इति भावः। "अवश्यमुपभोक्तव्यम्"—"नाऽभुक्तं क्षीयते कर्म" इति प्रमाणात्।

॥ श्रीगुरुभ्यो नम. ॥

# अथ द्वितीयः पादः

## (१) ॥ वागधिकरणम् ॥

### सू० ॥ ओं ॥ वाङ्मनसि दर्शनाच्छब्दाच्च ॥ ओं ॥ १ ॥

अत्र भाष्ये देवानामित्येतस्य मोक्षोत्क्रान्तिभ्यां सबन्धः प्रतीयते।
स चायुक्तः। तथात्वे देवेभ्योऽन्येषां शरीरिणामेवावस्थानप्राप्तेः। अन्यत्र वा
तच्छरीरपरित्यागप्रकारस्य चिन्तनीयत्वात्। अचिन्तने वाकारणस्य वाच्यत्वादित्यतः

"उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः"

इत्यनुव्याख्यानानुसारेणभाष्यं व्याचष्टे—स च द्विविध इत्यादिना। अनेन P 206
भाष्ये देवानामित्यस्यमोक्ष इत्यनेनैवान्वय.। मोक्षश्च प्रकरणवशाद्देहादिति गम्यते।
उत्क्रान्तिश्चेत्यस्यान्येषां देवव्यतिरिक्तानामित्यध्याहृतेन सबन्ध इत्युक्तं भवति।
उपासनावदेकस्यैवार्थस्येति। सकलवेदोक्तगुणादेर्विशिष्योपासनं तावद्गुणाना
विशिष्यक्रियायाश्च सामान्यत उपासनम्। बहुगुणोपासन चतुर्गुणोपासनमिति चतु-
र्मुखाद्यधिकारिभेदेनावान्तरवैचित्र्ये विद्यमानेऽपि उपासनत्वेनैकीकृततत्प्रति-
पादकत्वेन तत्पादस्यैकपादत्ववदत्रापि स्वोत्तमप्रवेश उत्क्रमणमिति, देवाद्यधि-
कारिभेदेनावान्तरवैचित्र्ये विद्यमानेऽपि देहक्षयत्वेनैकीकृततत्प्रतिपादकत्वेन
पादैक्यं संभवतीति भाव भगवत्प्राप्तिलक्षणमोक्षार्थमिति। पूर्वसूत्रे "अथ
संपत्स्यते" इत्युक्तभगवत्प्राप्तिलक्षणमोक्षार्थं वाचो मनसि लयसमर्थनाद-
स्तिशास्त्रादिसङ्गतिरिति भावः। मनसीति। अत्र वाङ्मनसि न लीयत उत
लीयत इति चिन्ता। तदर्थं तयो किं नियम्यनियामकभावो नास्त्युतास्तीति।
तदर्थं "वाक् पूर्वरूपम् मन उत्तररूपम्" "मन पूर्वरूपं वा वागुत्तररूपम्"

---

१. अत्रेति। कर्मक्षयानन्तरमुत्क्रान्तिरस्मिन् पादे प्रतिपाद्यते। विचार्यते च।

२. पूर्वेति। ज्ञानिना मोक्ष इव देहिनां तम इत्यपि द्रष्टव्यम्।

इत्युक्त्योर्व्यामिश्रत्वेन नियम्यनियामकभावे विरोधित्वमस्त्युत नास्तीति। तदर्थं वाङ्मनसोर्नियम्यनियामकभावे प्रमाणं नास्त्युतास्तीति। **विशेषप्रमाणादर्शन-मिति**। "तत्पूर्वकत्वाद्वाचः" इत्यत्रोत्तरश्रुतेः वक्ष्यमाणन्यायेन व्यामिश्रत्वान्न विशेषप्रमाणमिति भावः। "वाक् पूर्वरूपम् मन उत्तररूपम् मनः पूर्वरूपम् वागुत्तर-रूपम्" इत्युक्ते व्यामिश्रत्वादनिर्णय इति **न्यायविवरणं** मनसि निधाय पूर्वपक्षमाह— **तदधीनस्येत्यदिना**। **प्रत्यक्षत एवेति**। अनेन सूत्रे "दर्शन"-पदस्य श्रुतिपरत्वे "शब्दात्" इत्येतत् पुनरुक्तं स्यादिति भाष्ये वाचां मनो-वशत्वदर्शनादित्यनेन "दर्शनात्" इति पदस्य प्रत्यक्षपरत्वमेवोक्तमित्युक्तं भवति। **मुनिमतविवादउच्यत** इति। "अथाध्यात्मं वाक्पूर्वरूपं मन उत्तररूपम् प्राणः संहिता" इति शूरवीरो माण्डूकेयः। अथ हास्याहज्येष्ठः "मनः पूर्वरूपम् वागुत्तररूपम्" इति शूरवीरमांडूकेयतज्ज्येष्ठपुत्राख्यमुनिमतविवादे उच्यत इत्यर्थः। "वाक् पूर्वरूपं मन उत्तररूपम्" इति वाचः पूर्ववर्णदेवतात्वनिर्दे-शमात्रेण मनः पूर्वरूपम्" इत्यनेन साम्यमिति **न्यायविवरणं** व्याचष्टे—**तत्रेति**। **अन्यतरेति**। मतद्वयेऽपि विष्णुरूपयोरेव पूर्वोत्तरवर्णदेवतात्वादिति भावः। **उभयोरपीति**। वाङ्मनोनामकयोरुभयोरपि विष्णुरूपयोः प्रत्येकं पूर्वोत्तरवर्ण-प्रतिपाद्यत्वेन पूर्वोत्तरवर्णदेवतात्वोपपत्तेरित्यर्थः। मनसा वा अग्रे संकल्पयति अथ वाचा व्यवहर इति युक्तितो विशेषो मनःपूर्वकत्वस्यैव श्रूयत इति प्राधान्यं मनस एव हि ज्ञायत इति **न्यायविवरणार्थ**माह—**गुणप्रधानभावेत्वित्यादिना**। युक्तिमात्रेण कथमुक्तेरर्थान्तरविषयत्वमित्यत आह—**प्रत्यक्षेति**। **वाचो मनोऽधीनत्वेऽपीति** सङ्कल्पव्यवहरणे प्रत्यचेतनयोरेव कारणत्वमिति भावः। **अचेतनस्येति**। उपलक्षणमेतत्।

"सृष्टौ च विलये चैव सदा पूर्वप्रवर्तने।
नियन्तृत्वे च वचसो मनोऽधीशं शिवो हि तत्॥"

इति **न्यायविवरणो**दाहृतश्रुतेश्चेत्यपि ग्राह्यम्।

---

१. विवाद इति। "माण्डूकेयतज्ज्येष्ठपुत्रमतयोर्विवाद" इति भावदीपकारा.।

२. कारणत्वमिति। तच्च देवनानिमित्तकम्।

ननु उमायास्तस्मिन् जन्मनि मोक्षाभावाद्रुद्रस्य च मोक्षमार्गत्वाभावात् कथं तस्यास्तत्र मोक्षार्थं देहलय इत्यत —

" उमागिरीशावपि भारतीशा-
विति सवाग्वेदगता ब्रवीति ।
अहीन्द्रपत्नीमहिप विरिञ्च-
पत्नीं विरिञ्च च विमुक्तिकाल ॥ "

इत्यनुव्याख्यान मनसि निधायाह—**अत्रोमापदेनेति** । सूत्रगत "नु" शब्दव्याख्यानरूपयथानुकूलमिति भाष्य व्याचष्टे—**स्वनियम्यनियामकभावानुसारेणेति** ।

" इन्द्रप्रवेशस्तु यदोच्यतेऽत्र
तदा ह्युमेत्येव सुपर्णपत्नी ।
उक्ता सुपर्णश्च गिरीशनाम्ना
ततो विरोधश्च न कश्चनात्र ॥ "

इत्यनुव्याख्यानं मनसि निधायाह— **अत्रोमारुद्राभ्यां सुपर्णीसुपर्णावुच्येते** इति ।

" सूर्योऽग्नियुक्तो गुरुमाप्य तेन ।
　　　　　　　　　　　　　　　" ॥
शक्रम्

इत्यनुव्याख्यानं मनसि निधायाह— **अग्नेस्त्विति** ॥ अत्र द्वे —वाचो मनसि लये विशेषप्रमाणोक्ति । द्वितीये—सर्वदेवाना स्वनियामकदेवविशेषे लये[1] श्रुतिरूपप्रमाणोक्ति ॥ १ ॥

**॥ इति वागधिकरणम् ॥ १ ॥**

---

१ लय इति । मुक्तिकाले तद्देशलय इति भाव ।

## ॥ (२) मनःप्राणाधिकरणम् ॥

### सू०॥ ओं ॥ तन्मनः प्राण उत्तरात् ॥ ओं ॥ ३ ॥

**मनसो ब्रह्मप्राप्त्यर्थमिति** । अत्र "वाङ्मनसि सपद्यते। मन प्राणे। प्राणस्तेजसि। तेज परस्या देवतायाम्" इति श्रुतिक्रमेणैवैषा त्रयाणामधिकरणाना प्रवृत्तत्वादनन्तरसङ्गति । तेजसो मार्गमात्रत्वस्य वक्ष्यमाणत्वेन "प्राण परस्या देवतायाम्" इति श्रुतिसमाख्यया च प्राणस्यापि परमात्मन्येव लयसमर्थनादिति ज्ञातव्यम् । **प्राणे लीयत** इति । अत्र मन कि प्राणे न लीयत उत लीयत इति चिन्ता । तदर्थं मन प्राणयोरुभयोरपि सर्वचेष्टकत्वेनान्यूनत्वमुत तयोर्नियम्यनियामकभाव इति । तदर्थं मनस किं भगवदुत्पन्नत्व किं वा प्राणादुत्पन्नत्वमिति । तदर्थं मनसो भगवदुत्पन्नत्वप्रतिपादिका "मन सर्वेन्द्रियाणि चेत्" इति श्रुति किं निरवकाशोत सावकाशेति । तदर्थं मनस प्राणोत्पन्नत्वे विशेषप्रमाण नास्त्युतास्तीति । **विशेषादर्शनमिति** । भगवदुत्पन्नस्यापि मनसो भगवति लयाभाववत् प्राणोत्पन्नस्यापि तस्य तत्र देहलयाभावसंभवेन प्राणोत्पन्नत्वमनिर्णायकमिति भाव । मन पूर्वकत्वनियमादशेष दृष्टादृष्टव्यापाराणा तस्य प्राणादनूनतेति **न्यायविवरणोक्त**पूर्वपक्षयुक्तिमाह— **मनस** इत्यादिना । **मनसः प्राणादूनत्वमुक्तमितीति** । सङ्कल्पाद्यशान्तोत्तमप्राणादूनत्व सङ्कल्पाद्यवरमनस कैमुत्यसिद्धमिति भाव । **तत्र मनःशब्दस्यान्यपरत्वादिति** । तत्र "मनो वा व वाचो भूय" इत्यत्र—

> "एव तस्याभिमुक्तौ च पर्जन्य सर्वतो वर ।
> मनोऽभिमानी स प्रोक्त ॥"

इति च्छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण मन शब्दस्य पर्जन्यपरत्वादित्यर्थ । **स्मरशब्देन तद्ग्रहणमिति** । "स्मरो वाव आकाशात् भूयान्" इत्यत्र "तस्याश्चैव सदाशिव स्थिरस्मृत्यभिमानी स समभेव रते स्मर" इति । छान्दोग्यभाष्योदाहृतप्रमाणानुसारेण स्मरशब्देन रुद्रग्रहणमित्यर्थ । तथा च तदुत्तमाशोत्तमप्राणोनत्व रुद्रस्य सिद्ध्यतीति भाव ॥

---

१ **रुद्रेति**। प्रमयवलन **स्मर**—शब्देन **स्मरहर** ग्रहणं द्रष्टव्यम् ।

ननु प्राणस्यास्मिन् जन्मनि मुक्त्यभावात् कथ मन शब्दवाच्यशेषगरुडयो-स्तत्र मुक्त्यर्थं देहलय उच्यत इत्यत आह—**अत्र प्राणपदेन चतुर्मुख इति** । अत्र नियामकमनुव्याख्यान प्रागेवोदाहृतम्—

"तथा सुपर्णं सह तेन वार्णा ब्रह्माणमेतद्गत एव याति"

इत्यनुव्याख्यानानुसारेणाह—**तत्र मनस इति** । **उदतिष्ठदित्यादे-रिति** । आदिपदेन "इन्द्रियस्थै स्वरूपैस्तु" इत्यादिन्यायविवरणोदाहृतश्रुति-ग्रहणम् ॥ २ ॥

॥ इति मन.प्राणाधिकरणम् ॥ २ ॥

---

## (३) ॥ अध्यक्षाधिकरणम् ॥

### सू० ॥ ओं ॥ सोऽध्यक्षे तदुपगमादिभ्यः ॥ ओं ॥ ४ ॥

अत्रानन्तरसङ्गति प्रागेवोक्ता । **कस्यापीति** । चतुर्मुखप्रवेशेनैव सर्वेषा मुक्तिरिति भाव । **किं परमात्मनीति** । अत्र प्राण किं परमात्मनि न लीयत उत लीयत इति चिन्ता । तदर्थं प्राण परमात्माधीनो न भवत्युत भवतीति । तदर्थम् "चक्षुरादिवत्" इति प्रागुक्त प्राणस्य परमात्माधीनत्व प्राणस्य स्वातन्त्र्यादि-प्रतिपादकबहुश्रुतिबाधित भवत्युत न भवतीति । तदर्थं प्राणस्वातन्त्र्यप्रतिपादक-श्रुति कि निरवकाशोत सावकाशेति । तदर्थं प्राणस्यपरमात्माधीनत्वे विशेषप्रमाण नास्त्युतास्तीति । **पूर्वोक्तमेवेति** । प्राणस्य भगवदुत्पन्नत्व विशेषादर्शन चेत्यर्थ । एतदुपपादन पूर्ववज्ज्ञातव्यम् । "सोऽध्यक्ष" इत्यस्याप्येव-मेव शङ्का । श्रुतिबाहुल्यमेव शङ्काया विशेषहेतुरिति **न्यायविवरणा**भिप्रायमाह—**तस्य तदधीनत्वेत्यादिना । गत्यन्तर चोक्तमिति** ॥

"अनन्येश्वरताप्राणे तदन्येश्वरवर्जनात्"

---

१ चतुर्मुखेति । प्राणस्य परमात्मनि लयाभावे, न कस्यापि मुक्तिरिति भाव । ... सर्वैव सर्वेषा मुक्तिरिति परमार्थ ।

इत्यादिना "चक्षुरादिवत्" इत्यत्रोक्तमित्यर्थः । **लयाभावोक्तेश्चेति ।** अनेन श्रुतिबाहुल्यमिति **न्यायविवरणं** लयाभावेऽपि श्रुतिबाहुल्यमिति व्याख्यातं भवति । **तदधीनत्वेऽपि श्रुत्यादिर्बाहुल्यादिति ।** अनेन श्रुतिबाहुल्य एव परिहारे च विशेषहेतुरिति **न्यायविवरणं** व्याख्यातं भवति । **इति न्यायेनेति ।** इत्युक्तन्यायेनेत्यर्थः । रुद्रादिसकलजीवप्राप्यत्वे तच्चेष्टकत्वादिना श्रुत्युक्तत्वात-न्ययोपपत्तेरिति भावः । **अन्यैरनद्यमान इतीति ।** अनेन "श्रुतिबाहुल्यम्" इति प्राणस्य विष्णुनाद्यमानत्वे श्रुतिबाहुल्यमित्यपि सिद्धान्ते व्याख्यातं
208 भवति । **प्राणत्व—इति ।** प्राणस्य चतुर्मुखत्वेन पुनर्जननात् ।

" विलीनोह्हि प्रकृतौ ससारमेति " इति श्रुतेरिति भावः ॥ ३ ॥

॥ इति अध्यक्षाधिकरणम् ॥ ३ ॥

---

## (४) ॥ भूताधिकरणम् ॥

## सू०॥ ओं ॥ भूतेषु तच्छ्रुतेः ॥ ओं ॥ ५ ॥

**अग्नावेव सर्वलये प्रागुक्तन्यायबाध. स्यादिति ।** पूर्वाधिकरणेषु वागादीना मन आदिषु लये[२] तन्नियामकतया ततोऽधमत्वं यद्धतुतयोक्तम् , तत्र युक्तम् । अग्नौ सर्वदेवा विलीयन्त इत्यन्युत्तमानामप्यग्नौ लयस्य श्रुतत्वेन व्यभिचारादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भाव । **किमिति ।** केचिद्देवा अग्नौ केचिद्भूतान्तरेऽपीत्यर्थ. । अत्र सर्वे देवा किमेकस्मिन्नग्नावेव लीयन्ते उत सर्वेष्वपि भूतेषु लीयन्त इति चिन्ता । तदर्थम् "अग्नौ सर्वे देवा विलीयन्ते" इति श्रुति किमसङ्कुचितार्थोत सङ्कुचितार्थेति । तदर्थं सर्वेष्वपि भूतेषु देवाना लये विशेषप्रमाण नास्त्युतास्तीति । **अन्याधीनत्वमिति ।** इन्द्राग्निन्यादीन वायुवरुणादिभूतान्तराधीनत्वमित्यर्थ । **विपर्यय इति ।** भूतान्तरे लय

---

१ **बाहुल्यादिति ।** "बहुल्यसद्भावादि"ति "मध्वविलास" पुस्तक पाठः ।

२. **लय इति ।** अग्नावेवेति पूर्व पक्ष । समस्तभूतेष्विति सिद्धान्त ।

इत्यर्थः। **नियामकानां बाहुल्येनेति**। अग्निप्रभृतिनियामकानां वायु-वरुणादिभूतानां च बाहुल्यमित्यर्थः। **अत्र ये विशिष्योक्तेभ्य इति**। "वाङ्मनसि" इत्याद्यधिकरणत्रये शेषसुपर्णचतुर्मुखपरमात्मसु लीयमानत्वे-नोक्तेभ्यो वारुणीसौपर्णीशेषसुपर्णचतुर्मुखेभ्य इत्यर्थः। तेषां विशिष्य लयोक्ते-रुक्तसन्देहाविषयत्वादिति भावः। यद्यपि वारुण्यादिचतुर्णामिन्द्रादिवदस्ति वायौ देहलयः; तथापि न भूताभिमानित्वं तद्देहलयाधिकरणतावच्छेदकं, किं तु, प्राणत्वमेव। इन्द्रादिदेहलयाधिकरणतावच्छेदकं तु, भूताभिमानि-त्वम्। "वायाविन्द्र इति" तत्प्रतिपादकश्रुतौ इन्द्रादीनां ग्रहणाद्वारुण्यादीनाम-ग्रहणादिति द्रष्टव्यम्। **भूतेषु देवा इति श्रुतेरेवेति**। तथा च विपर्यये प्रमाणाभावः सिद्ध इत्यर्थः। "न चाग्नौ सर्वे देवा" इति श्रुतिविरोधः; "भूतेषु" इति बहुवचनस्य निरवकाशत्वेन[1] तच्छ्रुतेर्बाधितत्वात्। तस्याश्च सावकाशत्वस्य वक्ष्यमाणत्वात्। न च नियामकबाहुल्येनानिर्णय इति वाच्यम्; वक्ष्यमाणश्रुत्यनुसारेण निर्णयोपपत्तेरिति भाव। तदिदमुक्तं **श्रुतेरेवेति** "एव"कारेण। "आकाश उर्वी च गुरुं प्रविश्य" इत्यनुव्याख्यानं मनसि निधायाह—**आकाशोर्व्योः बृहस्पतिद्वारेति**। "शक्रं मरुद्गणाः" इत्यनु-व्याख्यानं मनसि निधायाह—**भूतवायोरिति**॥ "सोमस्तु वारीशयुतः" इत्यनुव्याख्यानं मनसि निधायाह—**अपां सोमद्वारेति**। अस्मिन्नधिकरणे[2] "भूतेषु तच्छ्रुते" "नैकस्मिन् दर्शयतो हि" इत्यनयोरधिकरणयोरनतिभि-न्नार्थकत्वात् पृथङ् न्यायविवरणाभाव। अत एव न्यायविवरणे "तन्मनः प्राण उत्तरात्" इत्यधिकरणसंबन्धित्वेन अनुव्याख्यानोक्तकार्यकारणतादाढर्यलक्षण-पूर्वोत्तरपक्षयुक्त्यो "सोऽध्यक्षे तदुपगमादिभ्य" इत्यस्मिन्नधिकरणे "सोऽध्यक्षे" इत्यस्याप्येवमेवाशङ्कापरिहारश्चेत्यतिदेशवदत्र युक्त्यतिदेशो न कृत॥ ४॥

॥ इति भूताधिकरणम् ॥ ४॥

---

१ निरवकाशेति। निरवकाशेन सावकाशस्य बाध इति भाव।

२. अस्मिन्निति। पार्थक्येनाधिकरणन्यायस्य विवरणाऽकरणे कारणं प्रति-पादितं ज्ञेयम्।

## (५) ॥ नैकस्मिन्दर्शयतोऽधिकरणम् ॥

## सू०॥ ओं ॥ नैकस्मिन्दर्शयतो हि ॥ ओं ॥ ६ ॥

**अत्र पुनरिति।** यदुक्तं पूर्वाधिकरणेऽग्नावेव सर्वदेवलयाङ्गीकारे "भूतेषु" इति बहुवचनविरोध इति ; तदयुक्तम्। अग्नावेव सर्वदेवलयाङ्गीकारेऽपि अग्नेः वायौ वायोश्चाकाशे लयेऽग्नौ लीनानां भूतेषु लयसंभवेन बहुवचनोपपत्तिरिति आक्षेपोत्थानादनन्तरसङ्गतिरिति भावः। **किमिति।** अत्र देवाः विमग्नावेव लीयन्ते उत पञ्चस्वपि भूतेष्विति चिन्ता। तदर्थमग्नावेव सर्वदेवलयाङ्गीकारे बाधकत्वेनोक्तम् "भूतेषु" इति बहुवचनं किममुख्यार्थमुत मुख्यार्थमिति चिन्ता। तदर्थम् "अग्नौ सर्वे देवाः" इति श्रुतिः निरवकाशोत सावकाशेति। तदर्थं पञ्चस्वपि भूतेषु देवानां प्रत्येके लये विशेषप्रमाणं नास्त्युतास्तीति। भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेर्मुक्तिलययोर्विशेषाभावाच्चैकस्मिन् भूते सर्वलयोऽर्थतः बलप्त इति पूर्वपक्षयुक्तिप्रदर्शकन्यायविवरणस्याकाङ्क्षाक्रमेण अन्वयप्रदर्शनपूर्वकमभिप्रायमाह—**एकस्मिन्नग्नावेवेत्यादिना।** तत्र "एकस्मिन्नग्नौ" इत्यनेन एकस्मिन्नेव भूते सर्वेषां लयोऽर्थतः बलप्त इत्यंशस्य**अस्ति तावद्भूतानामि**त्यनेन भूतानामुत्पत्तिक्रमवैपरीत्येन लयोक्तेरित्यंशस्य **मुक्तिश्च प्रलयविशेष** इत्यनेन मुक्तिप्रलययोर्विशेषाभावाच्चेत्यंशस्य व्याख्यानं कृतम्॥

ननु प्रलयकालीनभूतलयस्य उत्पत्तिक्रमविपरीतक्रमकत्वेऽपि मुक्तिकालीनदेवतालयप्रतिपादकश्रुतिगतस्य "भूतेषु" इति बहुवचनस्योपपत्तिः कथमित्यत आह—**मुक्तिश्च** प्रलयविशेष इति। **मुख्यार्थ** इति। "भूतेषु" इति श्रुतेर्देवानां साक्षादेव भूतेषु लय इत्येवंरूपमुख्यार्थ इत्यर्थः। "**दर्शयतो हि**" इति सूत्रादिनिवर्तनीयपूर्वपक्षयुक्तिमाह—**न चात्र विशेषप्रमाणमस्तीति।** "पृथिव्याम्भवः" इत्यादिश्रुतिभ्यामिति। अनेन विशेषश्रुतेश्चेति **न्यायविवरणांशोऽपि** व्याख्यातो भवति। तत्तद्भूतोद्भवत्वात् तत्तद्देवतानामिति

---

१. मुक्तिश्चेति। यतो मुक्तिः प्रलयविशेषस्ततः उत्पत्तिक्रमविपरीतक्रमानुसारेण लय इति शङ्कते।

न्यायविवरणं व्याचष्टे—येषां देवानामिति । तत्समानां च विशेषवचनाभावे स्वसमानलयस्थान एव लयोपपत्तेरिति न्यायविवरणं तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे—न चाश्विप्रभृतीनामिति । तदनुत्पन्नत्वेऽपि स्वसमानदेवतालयस्थानत्वेन यदि तत्र देवतानां लयस्तर्हि सौपर्ण्यादीनां स्वसमानवारुण्यादिलयस्थाने शेषादौ लयः स्यादित्यत उक्तम्—विशेषवचनाभावे चेति । सौपर्ण्यादीनां विशिष्य लयस्योक्तत्वादिति भावः । अग्नादिदेवतेत्यत्र वरुणव्यतिरिक्तानां ग्रहणम् । अन्यथा[1] व्याख्यानमिति । "भूतेषु देवाः" इति श्रुतेरग्नेर्वायावित्यादिना कृतमित्यर्थः । उक्तक्रमेणेति । इन्द्र उमायामित्युक्तक्रमेणेत्यर्थः ॥

"सोमस्तु वारीशयुतोऽनिरुद्धं
　विशत्यसौ काममसौ च वारुणीम् ।
साशेषदेवं सगिरं च सैव
　वायुम्......... ...... ...." ॥

इत्यनुव्याख्यानं मनसि निधायाह—सोमस्य चेति—

"सूर्योऽग्नियुक्तो गुरुमाप्य तेन
　शक्रं सहैतेन सुपर्णपत्नीम् ।
तया सुपर्णं सह तेन वाणी
　ब्रह्माणमेतद्गत एव याति ॥"

इत्यनुव्याख्यानं हृदि कृत्वाह—सूर्यस्येति । "शक्र मरुद्गणा" इत्यनुव्याख्यानं हृदि कृत्वाह—मरुतामपीति । आदिपदेन सौपर्णीसुपर्णवाण्यो ग्राह्याः । भूताभिमानिनां चान्योन्यं लयाभावादिति । तेजोवाय्वभिमानिनामग्निप्रवहादीनां वाय्वाकाशाभिमानिनो प्रवहादिविनायकयोर्लयाभावादित्यर्थः । पूर्वमन्यथाव्याख्यानं विशेषश्रुति[2]बलादिहेतुना निराकृतम् । अधुना

---

१. अन्यथेति । पूर्वपक्षिणा कृतमन्यथाव्याख्यानमुत्पत्तिक्रमवैपरीत्येन लय इति ज्ञेयम् ।

२. श्रुतीति । "पृथिव्याम्भव·" इत्यादि विशेषश्रुतिबलेनेति भाव ।

अन्योन्यलयाभावरूपहेतुनेति भाव । अत एव " अन्योन्यलयाभावात् " चेति "च"शब्दसंबन्ध । उत्पत्तिश्रुतिविरोध इति । "आकाशाद्वायु " "वयोरग्नि"रिति श्रुतिविरोध इत्यर्थ । " विपर्ययेणोत्क्रमोन उपपद्यते च " इत्यत्र सर्वदेवानामुत्पत्तिक्रमवैपरीत्येन लयस्य निर्णीतत्वादिति भाव ॥

ननु " भूत भूताभिमानी च " इत्यनुव्याख्याने आकाशदिपदैर्देवानामपि गृहीतत्वात् कथमेतदित्यत आह—**अनुसर्गप्रतिपादनादिति** । आदिसर्गे वैपरीत्येनैव देवादीना देहस्य इति भाव । " अग्नौ सर्वे देवा " इति श्रुतिगतसर्वशब्दस्य " विंशतिशिष्टा अपि हव्यवाहम् " इत्यनुव्याख्यानानुसारेण विषयान्तरमाह—**उपलक्षणमेतदिति** ॥ ५ ॥

॥ इति नैकस्मिन् दर्शयतोधिकरणम् ॥ ५ ॥

---

## (६) ॥ समनाधिकरणम् ॥

## सू० ॥ ओं ॥ समना चामृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ओं ॥ ७ ॥

**प्रकृतेर्विष्णौ लयाभावसमर्थनादिति** ॥ ननु[१] श्रियो देहलयाभावप्रतिपादकस्यास्याधिकरणस्य कथमस्मिन् देहक्षयप्रतिपादकेऽन्तर्भाव इति चेदुच्यते— " सोऽध्यक्षे तदुपगमादिभ्य " इत्यत्र साक्षाच्चतुर्मुखस्य परमात्मन्येव लयोऽभिहित । स न युक्त । प्रमाणाभावात् । न च " प्राण परमुपगच्छति " इत्यादिश्रुतिरेव मानमिति वाच्यम् , " प्राणस्तेजसि " इति विशेषश्रुतिबलेन तेजोद्वारा परमात्मोपगमादिप्रतिपादकत्वेन तस्या सावकाशत्वात् । न च

" प्राणस्यतेजसि लयो मार्गमात्रमुदाहृतम् "

इति स्मृत्या " प्राणस्तेजसि " इति श्रुतेर्गतिरुक्तेति वाच्यम् , अनुपपत्त्यभावेन

---

१ **नन्विति** । श्रिय देहलयाभावप्रतिपादनमस्मिन् देहक्षयप्रकरणे कथ सगच्छत इति शङ्कते ।

गतिकथनस्याप्ययोगात् । न च तेजसि लये परमात्मनि लयाभावात्
कथं मोक्ष इति वाच्यम् ; चतुर्मुखस्य परमात्मनि लयेन चतुर्मुखे लीनानां
देवानां मोक्षवत्तेजसोऽपि परमात्मनि लयेन तत्प्रलीनस्य चतुर्मुखस्य
मोक्षोपपत्तेः । एवं चतुर्मुखस्य साक्षाद्विष्णौ देहलयस्य श्रियस्तत्र देह-
लयाभावसमर्थनं विनाऽसिद्धेस्तत्साधकत्वेन "हानौ तूपायनशब्दशेषत्वात्"
इत्यादिना उपासनापादान्तर्भाववदस्यापि संभवत्येवात्रान्तर्भावः । [1]किं च
"कामादितरत्र" "तत्र चायतनादिभ्यः" इत्याद्यधिकरणस्योपासने अधि-
काराभावप्रतिपादकस्यापि उपासनापादेऽन्तर्भाववदस्याप्यत्रान्तर्भावोपपत्तिरिति ।
अत्र यदि तत्तद्देवानां तत्तद्भूतोद्भवत्वयुक्त्या "पृथिव्यामृभवो विलीयन्ते"
इत्यादिविशेषश्रुत्या ऋभ्वादीनां पृथिव्यादौ लयस्तर्हि [2]लक्ष्म्या अपि पराधीन-
विशेषलाभवत्त्वेन परमात्मोद्भूतत्वात् "तेजः परस्यां देवतायाम्" इति विशेषश्रुतेश्च
परमात्मनि लयः स्यादिति पूर्वपक्षोत्थानादनन्तरसङ्गतिरिति । **परमात्मनीति ।**
अत्र प्रकृतिः परमात्मनि लीयते उत न लीयत इति चिन्ता । तदर्थं "तेजः
परस्यां देवतायाम्" इति श्रुतिः परमात्माधीनत्वयुक्तिश्च किमबाधितविषयोत
बाधितविषयेति । तदर्थं तद्बाधकं प्रकृतेर्नित्यमुक्तत्वादिकं नास्त्युतास्तीति
तदर्थं नित्यमुक्तत्वाद्यङ्गीकारे प्रकृतेः परमात्मना सर्वसाम्यमुत पारमेश्वरगुणान्तर-
रहितत्वेन किञ्चित्साम्यं वेति । तदर्थं प्रकृतेः किञ्चित्परमात्मसाम्याङ्गीकारे
परमात्मनाऽसाम्यप्रतिपादिका "असमैव" इति श्रुतिविरोधो भवत्युत न भवतीति ।
तदर्थं सा श्रुतिः प्रकृतिविषयोत जीवमात्रविषयेति । तदर्थं प्रकृतेः परमात्मना
किंचित्साम्यादौ विशेषप्रमाणं नास्त्युतास्तीति । **अन्यथा वागादीनामीति ।** P 2
एतच्छ्रुतियुक्तिभ्यामेव वागादीनां मनआदौ लयस्य साधितत्वादत्र तयोरसाध-
कत्वे तत्राप्यसाधकत्वप्रसङ्गादिति भावः । प्रकृतेः संसाराभावादिनैवान्यथा-
न्यथाकर्तुमशक्यत्वेन सुदृढत्वात्, सर्वसाम्यमेवेश्वरेण न चेत् संसारित्वमेवेति

---

१ **किं चेति ।** कारणान्तरमप्यस्ति । उपासनाधिकाराभावप्रतिपादकस्योपासना-
पादान्तर्भावदर्शनादिति भावः । तद्दर्शनं कारणान्तरम् ।

२. **लक्ष्म्या अपीति ।** लक्ष्म्या अपि परमात्मनि लयः स्यादिति शङ्कते ।
परमात्मनः सकाशात् पराधीनविशेषलाभरूपोत्पत्तेरिति ।

न्यायविवरणे न चेत्संसारित्व प्रकृते. तर्हि संसाराभावादिनेश्वरेण सर्वसाम्यमेवेत्यन्वयमभिप्रेत्य तद्भागं व्याचष्टे—**तथात्व** इति। ईशेनाप्यन्यथाकर्तुमशक्यत्वेन सुदृढत्वादिति **न्यायविवरणांशं** तन्निवर्तनीयाशङ्कानिरासपूर्वकं व्याचष्टे—**न च गुणान्तरवैषम्यमिति**। स्वातन्त्र्यादिगुणान्तरेण वैषम्यमित्यर्थ । **नित्यसंसाराहित्य** इति। अनेन संसाराभावादिनेत्यंश्येशेनेत्यत्रापि सवन्धप्रदर्शनपूर्वकमुईशेनान्यथा स्वनियम्यत्वापूर्णत्वादे कर्तुमशक्यत्वेन स्वातन्त्र्यस्य सुदृढत्वादिति **न्यायविवरणांशो** व्याख्यातो भवति। न चेत् सर्वसाम्यमेवेति **न्यायविवरणांशस्य** सवन्धमभिप्रेत्याह—**न च सर्वसाम्यमित्यादिना**। तथा च सिद्धान्तविरोधात् सर्वसाम्यं न चेत् संसारित्वमिति व्याख्यातं भवति। **नित्यत्वाचेति**। देहतोऽपि नित्यत्वादित्यर्थ.। अत एव **परमेश्वरवदित्युक्तम्**[1]। तेन न जीवेषु व्यभिचार इति बोध्यम्। **तदधीनत्वादिति**। **प्रयुक्तमिति**। उक्तयुक्ते प्राबल्येन तया बाधितत्वादिति भाव। **नित्यत्वादिना साम्यमेवेति**। नित्यत्वादिनैवेत्येवकारसवन्ध.। अनेन "समवेतौ" इत्यादिनित्यमुक्ताविरयेतच्छ्रुत्युदाहरणस्य प्रयोजनमुक्तं भवति। **प्रकृताविति**। अनेन सूत्रे तस्मादपीतिस्तदपीतिस्तदपीतेरिति च हेतौ पञ्चमीत्युक्तं भवति। साम्याभावलक्षणसाध्येन हेतो सामानाधिकरण्यायाह—**मोचकत्वामोचकत्ववतोरिति**। प्रकृतेरपि ब्रह्मसूक्ष्ममित्यादिना ईश्वरस्य महामहिमत्वादिति **न्यायविवरणांशोऽ**प्युक्तार्थ इति तात्पर्यम्[1]। **गुणपरिमाणेन चाधिकमिति**। अनेन सूत्रभाष्ययो "प्रमाण" शब्द "परिमाण"वाचक। सूत्रे चाधिकमिति शेष इत्युक्तं भवति। **असाधारण्यमनुपमृद्येति**। लक्ष्म्या अपि स्वातन्त्र्यादौ न विष्णौ तद्गुणोपमर्द। किं तु तेषा विष्णुमात्रनिष्ठत्वलक्षणासाधारण्योपमर्द एवेत्यभिप्रेत्य भाष्ये तेषामित्युक्तमिति भावेनासाधारण्यं पूरितमिति अवधेयम्। **एव नित्यमुक्तत्वादिसाम्येऽपीति**। अनेन नित्यम

---

१. **परमेश्वरवदिति**। "परमपुरुषवत्" इति "मध्वविलास"पुस्तकपाठ।

१. **तात्पर्यमिति**। ईश्वरस्य मोचकत्व, प्रकृतेर्बन्धकत्व, प्रकृते सूक्ष्मत्वे, ततोऽधिकसूक्ष्मत्वं ब्रह्मण, प्रकृते ज्ञानानन्दपरिमाणन्यूनत्व, परमात्मन आनन्दादिगुणपरिमाणाधिक्यमिति न प्रकृतिपरमयो सर्वसाम्यमिति द्रष्टव्यम्।

ससारित्वस्य नित्यतदनुग्रहणोपपत्तेरित्यादिन्यायविवरणांशोऽप्युक्तार्थो भवति । अत्र सूत्रे "उष्मा" इति पद तत्पदोपेतश्रुतिसूचकमित्यभिप्रेत्याह—'ईश्वरस्यैवेति । तदभावमुक्त्वाप्रतिषिद्धत्वादिति । "सर्वे ह्येतेऽणव" इत्यादिना तदभावमुक्त्वा "असमो वा" इति प्रतिषिद्धत्वादित्यर्थ । अत्राद्ये—प्रकृतेर्ल्याभावसाधकनित्यमुक्तत्वे सर्वगतत्वादिहेतूक्ति । द्वितीये—तस्या मुक्तत्वाङ्गीकारे परमात्मना सर्वसाम्य स्यादित्याशङ्कानिरासाय तस्या अमोचकत्वोक्ति । तृतीये—ब्रह्मण सूक्ष्मत्वज्ञानानन्दादिगुणाधिक्ये च प्रमाणोक्ति । प्रकृते सर्वसाम्याभावे नित्यमुक्तत्वादिकमपि न स्यादित्याशङ्कापरिहाराय, चतुर्थे—पूर्वसूत्रसिद्धहेतुना किञ्चित्साम्यसाधनम् । पञ्चमे—किञ्चित्साम्य एव श्रुतिरूपप्रमाणोक्ति । षष्ठे—प्रकृते परमात्मना किंचित्साम्यस्य "असमो वा" इति श्रुतिविरोधमाशङ्क्य तच्छ्रुतेर्जीवविषयत्वोक्त्या तद्विरोधपरिहार । सप्तमे—सामान्यश्रुते जीवविषयत्वसिद्धये ईश्वरेण प्रकृते किञ्चित्साम्ये जीवानामत्यन्तासाम्यश्रुतिरूपप्रमाणोक्ति ॥ अष्टमे—तत्रैव विशेषस्मृतिरूपप्रमाणोक्तिरिति सूत्रक्रम ॥ ६ ॥

॥ इति समनाधिकरणम् ॥ ६ ॥

---

## (७) ॥ तानिपराधिकरणम् ॥

## सू० ॥ ओं ॥ तानि परे तथा ह्याह ॥ ओं ॥ १५ ॥

चतुर्मुखेतरदेवानामिति । पूर्वाधिकरणे तेजस परमात्मनि लयाभाव P 2
समर्थनेन प्राणपदोदितचतुर्मुखस्य साक्षात्परमात्मनि लये सिद्धे तत्र तदितर देवाना परमात्मप्राप्त्यर्थं तद्द्वारा परमात्मनि लयसमर्थनादनन्तरसङ्गतिरिति भाव । भगवतीति । अत्र देवा किं परमात्मनि न लीयन्त उत लीयन्त इति चिन्ता । तदर्थं तेषा भगवत्प्रतिबिम्बत्व नास्त्युतास्तीति । तदर्थं तेषा प्राणप्रतिबिम्बत्वादिक भगवत्प्रतिबिम्बत्वादिबाधक उत साधकमिति । अन्यदेवाना प्राणाधीनत्वात्

१ ईश्वरस्यैवेति । "परमेश्वरस्यैव" इति 'मध्वविलास' पुस्तकपाठ ।

तत्प्राप्तिनियमात्। परप्राप्तिर्नास्त्येवेति **न्यायविवरणोक्तयुक्तिमाह**—"प्रतिबिम्बो हरेः प्राणः" इत्यादिना। **न च तदभाव एवेति**। परमात्मनि लयाभाव एवास्त्वित्यर्थः। साधकाभावादिति भावः। **"सर्वे देवाः" इति विशेषश्रुतीति**। उपलक्षणं चैतत्। "प्राणं प्राप्य" इति **न्यायविवरणोक्तश्रुतिरपि** ग्राह्या ॥ ७ ॥

॥ इति तानिपराधिकरणम् ॥ ७ ॥

---

## (८) ॥ अविभागाधिकरणम् ॥

## सू०॥ ओं ॥ अविभागो वचनात् ॥ ओं ॥ १६ ॥

**भगवदधीनत्वसमर्थनादिति**। यदुक्तं पूर्वाधिकरणे भगवत्प्रतिबिम्बत्वेन देवानां भगवति लय इति तदयुक्तम्; तेषां मुक्तत्वादिना स्वतन्त्रत्वात्तदधीनस्वरूपतत्प्रतिबिम्बत्वस्यैव अयोगादित्याक्षेपोत्थानादनन्तरसङ्गतिरिति भावः। अत एवोपासनासंबन्ध्यर्थप्रतिपादकानाम् "व्यतिहारो विंशिषन्ति हीतरवत्" इत्यादीनां उपासनापादेऽन्तर्भाववत्, भगवल्लीनदेवानां भगवदधीनत्वप्रतिपादकस्याप्यस्य पादेऽन्तर्भावो युक्त एव। अत एव वक्ष्यति—**देवा एव प्रकृता इति**। **किमिति**। अत्र भगवल्लीनत्वेन प्रकृता देवाः किं मुक्तौ स्वतन्त्रा उत भगवदधीना इति चिन्ता। तदर्थं तेषां मुक्तत्वसत्यकामत्वादिकं स्वातन्त्र्यसाधकं भवत्युत न भवतीति। तदर्थं सत्यकामत्वादिकं किमीश्वर इव मुख्यम् उत ईश्वरकामाद्यनुसारित्वादिरूपममुख्यमिति। तदर्थं तेषां विवक्षितसत्यकामत्वे दुःखप्राप्तिर्न भवत्युत भवतीति। **मुक्तत्वादेवेति**। अनेन सत्यसङ्कल्पादेरिति न्यायविवरणे आदिपदेन मुक्तत्वं ग्राह्यमित्युक्तं भवति। **अस्वातन्त्र्य इति**।

---

१. **न चेति**। देवानां परमात्मनि लयाभावः। तत्प्रतिबिम्बत्वाभावादिति भावः।

२. **युक्त एवेति**। भगवल्लीनदेवानां मुक्तत्वेऽपि भगवदधीनत्वसमर्थनमत्र प्रकरणे युक्तमेवेति भावः। तथा चास्मिन् पादे युक्त एवान्तर्भावः।

अनेन संसारसमानधर्मत्वं मुक्तेः इति न्यायविवरणांशो व्याख्यातः । सत्य-
कामत्वादिश्रुतेश्चेति । अनेन सत्यसंकल्पत्वादेरिति न्यायविवरणोक्तसत्य-
संकल्पत्वहेतोरसिद्धिः परिहृता भवति । श्रुतिर्यत्सत्यकामत्वं वक्तीति ।
"तत्" इत्यतः पूर्वं भाष्ये शेषोक्तिरियम् । तत्परमेश्वरकामाद्यविभागेनेति
भाष्यव्याख्यानपरेणानेन सत्यसङ्कल्पत्वादेः ईश्वरसङ्कल्पाद्यनुसारित्वनियम इति
न्यायविवरणांशस्यापि तात्पर्यमुक्तं भवति ॥

नन्वेवं सत्यस्वातन्त्र्यापातेन दुःखादिप्राप्त्या संसारसमानधर्मत्वं मुक्ते-
रिति न्यायविवरणेऽभिहितमित्यत आह—अत एवेति । सत्यसंकल्पत्वादेः
ईश्वरसंकल्पाद्यनुसारित्वनियमादेवेत्यर्थः । कृतार्थत्वेनैव विशेषोपपत्तेरिति न्याय-
विवरणं विवृण्वन्, अत एवेत्युक्तमेव दर्शयति—यदा खल्वित्यादिना ।
मुक्तास्त्वित्यादिना कृतार्थत्वेनेत्येतदुक्तत्वेनेति अस्वतन्त्राणामपीत्यनेन
अवधारणं, स्वातन्त्र्यादिव्यावर्तकमिति अदुःखित्वाद्युपपन्नमित्यनेन विशेषो-
पपत्तेरित्येतद् दुःखाभावसत्यसङ्कल्पत्वादिविशेषोपपत्तेरिति व्याख्यातं भवति ।
स्वकामितागमनमीश्वरेच्छया कथमित्यत आह— तदिच्छानन्तरमिति ।
स्वकामितागमने स्वेच्छाया एव कारणत्वादीश्वरेच्छायाः कथं कारणत्वमित्याक्षि-
पति—कथमिति । तदुत्तरत्वेन हृदयाद्धृदयं मृत्योरित्येतद्व्याख्याति—ईश्वरे-
च्छया ममेच्छेति-तात्पर्यमाह—[1]भगवदिच्छानुसारिणीति ॥ ८ ॥

॥ इति अविभागाधिकरणम् ॥ ८ ॥

---

## (९) ॥ तदोकाधिकरणम् ॥

**सू०॥ ओं ॥ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्
तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया॥ओं॥१७॥**

अनन्तरसङ्गतिं दर्शयन् विषयमाह—देवानामन्योन्येति । किमिति । अत्र[2]
ज्ञानिना मोक्षार्थं देहादुत्क्रमणमज्ञमरणसदृशमुत तद्विलक्षणमिति चिन्ता । तदर्थं

---

१ भगवदिच्छेति । ब्रह्ममत्यनुकूला मतिर्मुक्ताविति द्रष्टव्यम् ।

२ अत्रेति । ज्ञानिना देहादुत्क्रमणप्रकारः प्रतिपाद्यतेऽस्मिन् प्रकरणे ।

मपरोक्षज्ञान गत्यनुस्मृतिसहकृत हृदिस्थहर्येनुग्रहद्वारा हृदयाग्रज्वलनादिजनकतया विशिष्टोत्क्रमणहेतुर्न भवत्युत भवतीति । तदर्थं रश्मीना सहकारित्व न सभवत्युत सभवतीति । तदर्थं रात्रौ पर्यवसितकर्मणा रात्रौ रश्म्यभावेन विशिष्टोत्क्रमणाभावान्मोक्षाभाव । तदुत्क्रमणस्य वैलक्षण्य वेति मोक्षाभाववैलक्षण्यापत्ति प्राप्नोत्युत न प्राप्नोतीति । तदर्थं दिवैवादित्यरश्मिग्राहकप्रत्यक्षानुसारेण नाडीनामहन्येवादित्यरश्मिसम्बन्धोऽङ्गीकार्य उत "सतता वा एते रश्मयश्च नाड्यश्च" इति श्रुत्यनुसारेण रात्रौ बाह्यादित्यरश्म्यभावेऽपि अन्तर्गतादित्यरश्मिभि नाडीना सम्बन्धमादाय यावद्देहमहोरात्र नाड्यादित्यरश्मिसम्बन्धोऽङ्गीकार्य इति । तदर्थं ज्ञानिना मोक्षार्थमुत्क्रमण रात्रौ नास्त्युतास्तीति । तदर्थम् "दक्षिणे मरणात्" इति स्मृते कालविशेषपरत्वमुत दक्षिणायनादिसज्ञकरश्मिविशेषपरत्वमिति । तदर्थं तत्र विशेषप्रमाण नास्त्युतास्तीति । विशेषप्रमाणाभावे स्मृते कालपरत्वेन प्रमाणाभावेन च ज्ञानिना मोक्षार्थं रात्रावुत्क्रमणासिद्धे दिवैवादित्यरश्मिविषयकप्रत्यक्षानुसारेण दिवस एव नाडीरश्मिसम्बन्धस्याङ्गीकार्यत्वे रात्रौ पर्यवसितकर्मणा मोक्षाभावतदुत्क्रमणावैलक्षण्यान्यतरप्राप्त्या रश्मीना सहकारित्वासभवे हृदयाग्रज्वलनादिजनकतयापरोक्षज्ञानस्य विशिष्टोत्क्रमणहेतुत्वासभव इति पूर्वपक्षे[1] फलफलिभाव ।

"उत्तरदक्षिणमिति त एव तु निगद्यते" ।

इति विशेषप्रमाणसद्भावे तु "दक्षिणे मरणात्" इत्यादिस्मृते तत्सज्ञकरश्मिविशेषपरत्वेन तद्विरोधाभावात् ,

"न तु कालविशेषोऽस्ति ज्ञानिन" 

इति प्रमाणबलेन ज्ञानिना रात्रावप्युत्क्रमणसिद्धौ मोक्षार्थं ज्ञान्युत्क्रमणस्य रश्म्यनुसारित्वग्राहकमहर्लोकादिगन्तार (रात्रावप्युत्क्रमण) "उत्तरायणरश्मिभि" इति प्रमाणबलेन "सतता वा" इति श्रुत्यनुसारेण रात्रावपि नाडी-

१ पूर्वपक्ष इति ज्ञानिनामुत्क्रमणे विशेषो नास्तीति शङ्कत । विशेषहेत्वभावादिति ।

नामन्तर्गतादित्यरश्मिसम्बन्धस्य यावद्देहमहोरात्रमङ्गीकार्यत्वे, रात्रौ पर्यवसित-कर्मणामपि मोक्षार्थमुत्क्रमणस्य रश्म्यनुसारित्वे सिद्धे तेषां मोक्षाभाव-तदुत्क्रमणवैलक्षण्यान्यतरप्राप्त्यभावेन रश्मीनां सहकारित्वसंभवे युक्तमेवापरोक्ष-ज्ञानस्य हृदयाग्रज्वलनादिजनकतया विशिष्टोत्क्रमणहेतुत्वमिति सिद्धान्ते[1] फल-फलिभाव । प्रारब्धकर्मशेषत्वात् उत्क्रान्तावविशेषो ज्ञानिन इति न्याय-विवरणोक्तयुक्तिमाह—तस्याप्यन्यमरणादित्यादिना । ज्ञानोदयानन्तरं सर्वदा ज्ञानफलस्यानुवृत्तेरिति न्यायविवरणानुसारेण विद्यासामर्थ्यादिति भाष्यं व्याचष्टे—प्रारब्धकर्मसद्भावेऽपीत्यादिना । स्वोदयमारभ्यैवेति । न तु P लिङ्गभङ्गादिमात्रफलकमित्यर्थः । ननु किं प्रारब्धकर्मसद्भावमङ्गीकृत्य ज्ञानसाम-र्थ्येनैव विशिष्टोत्क्रमणोपपादनेन सञ्चितस्येव प्रारब्धस्यापि ज्ञानेनैव विनाशमङ्गी-कृत्य ज्ञानसामर्थ्येनैव विशिष्टोत्क्रमणं कुतो नोपपद्यत इत्याशङ्का परिहरन् ज्ञानस्य स्वोदयमारभ्य फलदत्वे न्यायविवरणोदाहृतं प्रमाणमाह—तदुक्त-मिति । कर्मदेहमारभ्य फलदमिति संबन्धः । स्वोदयादिति ल्यब्लोपनिमित्ता पञ्चमी । स्वोदयमारभ्येत्यर्थः । अधिकारिभेदेन व्यवस्थितविकल्पोऽयम् । अत्र प्रारब्धकर्मणः फलदत्वोक्त्या ज्ञानिनामपि तत्सद्भावोऽवगम्यते ॥

ननु यदि कर्म आ देहमा रवेर्वा फलदं तर्हि तदनन्तरमेव लिङ्गभङ्गः स्यात् । न चैवम् । "ब्रह्मणा सहाभिधत्ते" इति प्रमाणबलेन तदनी लिङ्गभङ्गा-भावादित्यत उक्तम्—प्रारब्धकर्मशेषस्त्विति । सूर्यादौ निःशेषतया कर्म-नाशाङ्गीकारान्नोक्तदोष इति भावः । हरिणा सहेति । तस्यैवानुग्रहेणेत्युक्त-त्वान्न तृतीयायाः करणार्थत्वमिति भावः । उत्क्रान्तिसद्भावादिति । अनेन P "अयनेऽपि हि" इति सूत्रगतो "हि"शब्दो हेताविन्युक्तं भवति । दक्षिणायने ज्ञानिनामुत्क्रमणाभावः "किं दक्षिणे मरणात्" इति स्मृत्यनुरोधादुच्यते। उत हेत्वभावात् । नाद्यः, स्मृतेरन्यविषयत्वेन व्याख्यास्यमानत्वात् इत्यभिप्रेत्य

---

१ सिद्धान्त इति । विलक्षणमुत्क्रमणं ज्ञानिनां योगादिसाधनानुष्ठानसाध्यमिति भावः । अत्र पूर्वापरपक्षफलफलिभावनिरूपणमनितरसाधारणसामर्थ्यमाविष्करोति ग्रन्थ-कृदिति विभावनीयम् ।

द्वितीयस्योत्तरत्वेन सूत्रगत "अत" शब्द व्याचष्टे—**सौररश्मीति**। **साक्षान्मोक्षस्येति**। लिङ्गभङ्गस्येत्यर्थ ॥[1]

ननु "आजनात्त जनिर्भुवि" इत्यादिना जनआदिलोकस्यैवापुनरावृत्तिस्थानत्वेनोक्तत्वात् कथमेतदित्यत आह—**महर्लोकादीत्यतद्गुणसंविज्ञान** इति। तत्राद्ये—ज्ञानिमरणवैलक्षण्याय ज्ञानिमरणस्य सहेतुक हृदयाग्रज्वलनप्रकाशित द्वारवत्त्वरूपवैशिष्ट्योक्ति। द्वितीये—यदि प्रकाशितनाडीद्वारा निष्क्रामतितर्हीज्ञवत्, नाड्यन्तरस्तमसैव गमनं स्यादित्याशङ्कापरिहाराय नाड्यन्तराततसौररश्म्यनुसारित्वरूपवैशिष्ट्यान्तरोक्ति। तृतीये—रात्रावपि पर्यवसितकर्मणा ज्ञानिना मोक्षार्थोत्क्रमणसिद्ध्यर्थं रात्रौ रश्म्यभावमाशङ्क्य सदा रश्मिसद्भावोक्ति। चतुर्थे—"सबन्धात्" इति सदा सत्त्वोक्त्या प्राप्तातिप्रसङ्गपरिहाराय तेषा रश्मीना सप्रमाणक यावद्देहभावित्वोक्ति। पञ्चमे—"दक्षिणे मरणाद्याति स्वर्गम्" इत्यादिस्मृत्या दक्षिणायने मरणाभावसिद्धौ तद्वदत्रापि उत्क्रमणाभावात् सदा रश्मिसद्भावप्रतिपादन व्यर्थमित्याशङ्कापरिहाराय।

"उत्तर दक्षिणमिति त एव तु निगद्यते"

इति स्मृत्यनुसारेण स्मृते रश्म्यर्थत्वेन कालार्थत्वाभावान्नतद्विरोध इत्यभिप्रेत्य दक्षिणायनेऽपि[2] ज्ञानिना मरणोक्तिरिति सूत्रक्रम ॥ ९ ॥

॥ इति तदोऽकाधिकरणम् ॥ ९ ॥

---

(१०) ॥ योग्यधिकरणम् ॥

## सू० ॥ ओं ॥ योगिनः प्रतिस्मर्येते स्मार्ते चैते ॥ ओं ॥ २२ ॥

**गत्यनुस्मरणादेरिति**। पूर्वाधिकरणे विद्यासामर्थ्याद्गत्यनुस्मरणयोगादिति पञ्चम्या गत्यनुस्मरणादेर्ब्रह्मनाड्योत्क्रमणेनार्चिरादिगतौ हेतुत्वमित्युक्तम् तस्मात्र

१ **लिङ्गेति**। साक्षान्मोक्षो लिङ्गशरीरभङ्ग इति व्याख्यात। "साक्षान्मोक्षस्य, साक्षाद्विमुक्तेरित्यर्थ" इति **भावदीप** कारा। मुमुक्षुगम्यस्य साक्षान्मोक्षस्येति **टीकाकारा**।

२ **अपीति**। भाष्मेण यद्यपि स्वच्छन्दमृत्युना निजदेहत्याग उत्तरायण कृत। तथापि ज्ञानिना देहपरित्यागोदक्षिणायन संभवतीति द्रष्टव्यम्।

समर्थनादनन्तरसङ्गतिरिति भावः । **किमिति** । अत्र गतिः किं विद्यागति, स्मृतिसापेक्षा न भवत्युत भवतीति चिन्ता । तदर्थं सा किं केवलकालकृता-भवत्युत न भवतीति। तदर्थम् "अग्निर्ज्योति" इति गीतावाक्यं किं केवलकालपरं उत देवतापरमिति । तदर्थं तत्र देवतापरत्वज्ञापकं नास्त्युतास्तीति । न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते इति भाष्योक्तयुक्तिमाह— **अग्निर्ज्योतिरि-त्यादानित्यादिना** । कृष्यादिलौकिकसाधनस्य फलस्मरणानपेक्षत्वात्, स्वर्ग-मोक्षयोरपि तथात्वमिति **न्यायविवरणं** मनसि निधायाह— **लोके फलानु-स्मृतिमन्तरेणैवेति । न च स्मृतिविरोध** इति । "यं यं वापि" इति स्मृतिविरोध इत्यर्थः । **लिङ्गस्यापीति**। "आचार्यस्तु ते गतिं वक्ता" इति यदाचार्योपदेशरूपं लिङ्गमुक्तं तस्यापीत्यर्थ.। गते कालादिकृतत्वात्तत्र ज्ञानस्येति गत्यनुस्मरणस्य ज्ञानशेषत्व इव कालस्यं ज्ञानशेषत्वे मानाभावादिति भाव ॥

ननु "अग्निर्ज्योति" इत्यत्र योगिपदाभावाद्योगीति विशेषणादिति कथमुक्तमित्यत आह—**उपलक्षणमेतदिति**। **अन्यत्रेति। गीताभाष्य-तत्तात्पर्ययोरेतच्छ्लोकव्याख्यानावसर** एवोक्तत्वादित्यर्थ ।

"क्रियानुवृत्तिर्लौकिके साधने तु<br>मनोनुवृत्तिर्वैदिके साधने स्यात् ।<br>फलं भवेत्सर्वथैत्येव तस्मात्<br>स्मरेत्सदा निश्चितत्वेन विद्वान्"

इति श्रुतेस्तदनुसार्यनुवृत्तेर्लौकिकवैदिकयो. साम्यादतोऽत्र फलानुस्मरण लवनादि-कृष्याद्यनुवृत्तिवद्द्रष्टव्यम्। वचनप्रामाण्यादिति **न्यायविवरणं** हृदि निधायाह—**यथा खल्वित्यादिना** ॥

अत्राद्यमधिकरणपञ्चकं देवानां देहलयप्रतिपादकत्वेनैका पेटिका। तत्र "वाङ्मनसि" इत्याद्येकवाक्यगतलयप्रतिपादकतया आद्यमधिकरणत्रिकमेका

१ **कालस्येति**। गते कालादिकृतत्वाभावात् । कालस्य ज्ञानकृतत्वाभावात् । न ज्ञानस्य सम्पूर्णमोक्षार्थेनेति पूर्व पक्ष ।

पेटिका। तत्राद्ये—वाचो मनसि लयसमर्थनम्। द्वितीये—मनसः प्राणे लयसमर्थनम्। तृतीये—तस्य प्राणस्य परमात्मनि लयसमर्थनमिति। देवानां भूतेषु लयप्रतिपादकत्वेन तदुत्तरमधिकरणद्वयमेका पेटिका। तत्राद्ये—देवानां सामान्यतो भूतेषु लयप्रतिपादनम्। द्वितीये—सर्वेषु विशेषतो लयसमर्थनमिति। षष्ठे—प्रकृतेर्देहलयाभावप्रतिपादनम्। सप्तमे—सर्वेषां देवानां परमात्मनि लयसमर्थनमिति। अष्टमे—मुक्तानां भगवदधीनत्वसमर्थनम्। नवमदशमयोः—उत्क्रमणतदुपयुक्तप्रतिपादकत्वेन तदधिकरणद्वयमेका पेटिका। तत्राद्ये–मनुष्याणां मोक्षार्थं[1] देहोत्क्रान्तिसमर्थनम्। द्वितीये—तदुपयुक्तगत्यनुस्मरणस्यावश्यकत्वसमर्थनमिति॥ १०॥

॥ इति योग्यधिकरणम्॥ १०॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयति-
कृते श्रीमज्जयतीर्थपूज्यचरणविरचित
तत्त्वप्रकाशिकाभावबोधे चतुर्थाध्यायस्य
द्वितीयः पादः॥ २॥

---

१. मोक्षार्थमिति। चरमशरीरपरित्यागोऽयं ज्ञानिन इति द्रष्टव्यम्।

॥ श्रीगुरुभ्यो नमः ॥

# ॥ तृतीयः पादः ॥

## ॥ अर्चिराद्यधिकरणम् ॥

### सू०॥ ओं ॥ अर्चिरादिना तत्प्रथितेः ॥ ओं ॥ १ ॥

**ब्रह्मनाड्योत्क्रान्तानामिति** । अनेन पूर्वपादेनास्य पादस्य सङ्गति P " रुक्ता भवति। **तेन पथागतानामिति** । उपलक्षण चैतत् । देहलयवनामित्यपि ग्राह्यम् । अत एव सुधाया गम्यप्रतिपादकाधिकरणपर्यालोचनया " विमुक्त गम्यम्" इत्यनुव्याख्यानस्थ"विमुक्त' पदस्योत्क्रान्तलीनदेहोभयपरत्वेन व्याख्यान कृतम् । अनन्तरसङ्गतिं दर्शयन्विषय दर्शयति—**गत्यनुस्मरणमिति** । **किमिति** । अत्र ब्रह्मप्राप्तिमार्गे क्रमिमर्चिर्वायूभयप्राथमिक उतार्चिर्मात्रप्राथमिक इति चिन्ता । तदर्थं ब्रह्मप्राप्तिमार्गेऽधिकारिभेदेनोभयोरपि प्राथम्यमुपपद्यत उत नोपपद्यत इति । तदर्थं ते " अर्चिषमभिसमवन्ति'' इति। "स वायुमागच्छति'' इति श्रुतिद्वयस्यापि निरवकाशत्वम् उत "स वायुमागच्छति" इति श्रुते सावकाशत्वमिति । तदर्थमर्चिर्मात्रप्राथमिकत्वे मार्गस्य प्रमाण नास्त्युतास्तीति । तत्र तत्र मार्गस्यान्यथोक्तेरधिकारिभेदेन पृथङ्मार्ग क्रमोपपत्तिरिति **न्यायविवरणोक्त**प्रकारेण भाष्यसूचितपूर्वपक्षयुक्तिमुपपादयति—**श्रुतिद्वयस्यापि निरवकाशत्वादित्यादिना** । **किं त्वेक एव मार्ग इति** । अनेन ज्ञानिनामेकमार्गस्यैव प्राप्तिरिति **न्यायविवरणमुक्त**तात्पर्यं भवति । उपलक्षण चेतत् । " एष एव ब्रह्मपथ । द्वे सृती पुनरावर्तिन '' इति **न्यायविवरणोदाहृत**श्रुतिस्मृतिष्वित्यपि द्रष्टव्यम् । अनेन सूत्रे " प्रथिते ' इत्यस्य श्रुतौ स्मृतौ च प्रसिद्धेरित्यर्थ उक्तो भवति । **सोमादनन्तरमिति** । "सोम वैश्वानरम् ' इति प्रमाणबलादिति भाव । [अन्यथा **न्यायविवरणे** " एष एव

---

१ **पथेति** । ब्रह्मप्राप्तिमार्ग इति यावत् । ब्रह्मानन्द्या उक्ता ज्ञानिनो येन गच्छन्ति स उत्कृष्टो मार्ग ।

१ **अन्यथेति** अधिकोऽय पाठ ।

ब्रह्मपथ" इत्यवधारणविरोधात् "अन्यथा" इत्याद्ययुक्तम् स्यात्]। **प्रबलश्रुत्यनुसारेणेति** । उदाहृतश्रुतिस्मृतिसाहित्येन "तेऽर्चिषमभिसम्भवन्ति" इति प्रबलश्रुत्यनुसारेणेत्यर्थ । अथ वा, "सर्वे वा एते ब्रह्मामन्ति" "तेऽर्चिषमेवाभियन्ति। ततो वायुम् ततोऽह पूर्वपक्ष इत्येष एव ब्रह्मपथ" इति **न्यायनिरणोदाहृत** "अर्चिषमेव" इत्यवधारण युक्तत्वेन "ततो वायुम्" इति वायोर्द्वितीयगम्यत्वप्रतिपादकत्वेन "एष एव" इति ज्ञानिमार्गैक्यप्रतिपादकत्वेन च प्रबला या श्रुतिस्तदनुसारेणेत्यर्थ ॥ १ ॥

॥ इति अर्चिराद्यधिकरणम् ॥ १ ॥

---

## (२) ॥ वायुशब्दाधिकरणम् ॥

### सू०॥ ओं ॥ वायुशब्दादविशेषविशेषाभ्याम् ॥ ओं ॥ २ ॥

P 214 **वायोर्द्वितीयप्राप्यत्वसमर्थनादिति** । "तेऽर्चिषमेवाभियन्ति" "ततो वायुम्" इति श्रुतौ क्रमानुसारेणार्चिष प्रथमप्राप्यत्व प्रथमाधिकरणे प्रतिपाद्यात्र वायोर्द्वितीयप्राप्यत्व समर्थ्यंन इत्यनन्तरसङ्गतिरिति भाव । **किं तत्रेति।** अत्र ब्रह्मप्राप्तिमार्गे किं वायुरह उभयद्वितीयक उत वायुमात्र द्वितीयक इति चिन्ता। तदर्थं प्राप्तिमार्गेऽधिकारिभेदेनोभयोरपि द्वितीयत्वमुपपद्यत उत नोपपद्यत इति । तदर्थम् "अर्चिषोऽह स वायुमागच्छन्ति" इति श्रुतिद्वयस्यापि निरवकाशत्वम् उत "अर्चिषोऽह" इति श्रुते सावकाशत्वमिति। तदर्थं वायुमात्रद्वितीयकत्वे विशेषप्रमाण नास्त्युतास्तीति। **स वायुमागच्छतीति** । अस्या श्रुते प्रागुक्तरीत्या वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वमिति भाव । अत्र भाष्ये एतच्छ्रुतिद्वयानुदाहरण तु पूर्वमुदाहृतत्वात्। अत एव पूर्वम् "अर्चिषोऽह" इत्यधिकाशोदाहरणमिति ज्ञातव्यम् । तत्र तत्रेत्यादि**न्यायनिरण**मेतदधिकरणपूर्वपक्षसंबन्ध्यपि भवतीत्यभिप्रेत्याह—**उभयोरपि पूर्ववदिति**। पूर्वन्यायेन दूषयितु शक्यत्वात कथमस्यायुक्तेरुपन्यास इत्यत आह—**न च पूर्वव्यवस्थेति** । किं त्वेर्

---

१ **एक एवेति** । मार्गभेदे प्रमाण भावादिति द्रष्टव्यम् ।

**एव मार्ग इति ।** अनेन ज्ञानिनामेकमार्गस्यैव प्राप्तेरिति न्यायविवरणमुक्त-तात्पर्यं भवति । भाष्ये "अविशेष"इति सूत्रांशव्याख्यानपरेण "सामान्यवचनात्" इत्यनेन "स वायुमागच्छति" इत्यस्य वायोर्द्वितीयत्वसाधकत्वं कथमुच्यते ? अनिर्णायकत्वादित्यतस्तदुपपादयति – **सामान्यश्रुतेश्चेत्यादिना । प्रसिद्धि-निरोधेनेति ।** "तत्पथिते." इत्युक्तप्रसिद्धिविरोधेनेत्यर्थः । **तामुदाहरतीति ।** उपलक्षणं चैतत् । "सर्वे वा एतदुत्क्रामन्ति" । "तेऽर्चिषमेवाभियन्ति ।" "ततो वायु ततोऽह:" इति **न्यायविवरणो**दाहृतश्रुतिरपि वाय्वहोर्द्वितीयतृतीय-प्राप्यत्वप्रतिपादकत्वेनाप्यस्मिन्नर्थे विशेषश्रुतिरिति ज्ञातव्यम् । अनेन"अविशेष-विशेषाभ्याम्" सामान्यतो विशेषतश्च "वायुशब्दात्" इति सूत्रार्थ उक्तो भवति। अविशेषविशेषाभ्यां वायुशब्दाद्वायुशब्दोपेतसामान्यश्रुतेः द्वितीयप्राप्यत्वप्रतिपाद-कतया वायुशब्दोपेतविशेषश्रुत्या बाधेन[1] वायोर्द्वितीयप्राप्यत्वप्रतिपादकत्वं तदर्थ इति सूत्रस्यार्थान्तरप्रदर्शनपरतयापि भाष्यं व्याचष्टे—**वायुश्रुतेरिति ।** अनेन "अर्चिषो वायुं गच्छति" इति भाष्ये इति श्रुत्यर्थ इति शेष इत्युक्तं भवति । **सामान्यत्वादित्यनेन** भाष्ये सामान्यवचनादिति भावप्रधान इत्युक्तं भवति ॥

ननु सामान्यवचनत्वादेव प्रथमप्राप्यत्वप्रतिपादकत्वं किं न स्यादित्यत. प्रवृत्तस्य "स इतो गतो द्वितीयं गतिं वायुमागच्छति" इति विशेषवचनाच्चेति भाष्यस्याभिप्रायमाह—**सामान्यस्य चेति ।** अस्मिन् व्याख्याने "वायोरहरह आपूर्यमाण पक्ष" इति श्रुत्युदाहरणस्य अनुपयोगात् तदनुरोधेन प्राचीनं व्याख्यानम् । अत एव तत्र वायोरनन्तरमह्नः प्राप्तिसंभवादिति एतदुदाहरण-स्योपयोग उक्त ॥ २ ॥

॥ इति वायुशब्दाधिकरणम् ॥ २ ॥

---

१. बाधेनेति । विशेषश्रुत्या सामान्यश्रुतेर्बाध इति भाव. ।

## ॥ (३) तटिदधिकरणम् ॥

## सू०॥ ओं ॥ तटितोऽधिवरुणः संबन्धात् ॥ ओं ॥ ३ ॥

नन्वत्र "अर्चिषो वायुं वायोरहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षट् उदङ् हि एति मासान् मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकम्" इति [1]श्रौतक्रमानुसारेण एतदधिकरणत्रयस्य क्रमेणानन्तर्यं वाच्यम् । तत्र शुक्लपक्षोत्तरायणसंवत्सरपरित्यागेन तदुपरितनतटिद्वरुणविचारपरस्यास्य कथं तदानन्तर्यमित्यत आह— स चेति । विपरीतश्रुत्यभावेन तत्र विवादाभावादस्यैव विरुद्धश्रुतिविवादविषयत्वेन तदनन्तरं विचार्यत्वमिति तद्विचारपरस्यास्य अनन्तरसङ्गतिरिति भावः । **तत्र किमिति** । अर्चिरादिमार्गः किं साक्षात्तटिद्वरुणोभयानन्तर्योपेतसंवत्सरप्राप्यक उत क्रमिकतटिद्वरुणानन्तर्योपेतसंवत्सरप्राप्यक इति चिन्ता। तदर्थमर्चिरादिमार्गेऽधिकारिभेदेन तटिद्वरुणयोरुभयोरपि संवत्सरानन्तर्यमुपपद्यत उत नोपपद्यत इति । तदर्थम्, "संवत्सराद्वरुणलोकम्" "संवत्सरात्तटितम्" इति श्रुतिद्वयस्यापि निरवकाशत्वमुत "संवत्सराद्वरुणलोकम्" इति श्रुतेः सावकाशत्वमिति । तदर्थं क्रमिकतटिद्वरुणानन्तर्योपेतसंवत्सरप्राप्यकमार्गैक्ये विशेषप्रमाणं नास्त्युतास्तीति । "तेऽर्चिषमभिसंभवन्ति" । "अर्चिषोऽहरिति" "स वायुमागच्छति" इति श्रुतिद्वयविवक्षयैव "संवत्सराद्वरुणलोकम्" "संवत्सरात्तटितम्" इति श्रुतिद्वयविवक्षयापि तत्र तत्रेत्यादिन्यायविवरणं प्रवृत्तमित्याशयेन पूर्वपक्षमाह— **उभयोरपीति** । "वरुणलोकात् प्रजापतिलोकम्" "तटितः प्रजापतिलोकम्" इति श्रुतिशेषद्वयोदाहरणस्य तन्निवर्तनीयाशङ्कानिरासपूर्वकं प्रयोजनमाह—**न च विरोध** इत्यादिना । अभ्यधिकाशङ्कामाह—**न चात्रेति** । **किं त्वेक एवेति** । अनेन ज्ञानिनामेकमार्गेणैव प्राप्तेरिति **न्यायविवरणांशस्य** तात्पर्यमुक्तं भवति । **न्यायविवरणे** विशेषश्रुतित इत्युक्ता विशेषश्रुतिः तटिता वहत इति भाष्योदाहृतैव । अत एवोपरि संबन्धादित्यनुक्त्वा उपरि संबन्ध-

---

१. **श्रौतेति** । अधिकरणविन्यासौचित्यं प्रदर्शयति ।

स्मृतेरिति भाष्येऽभिहितमिति ज्ञेयम् । वीतरागे इति । अन्यथा सत्यानृतविवेचकत्वं न स्यादिति भावः ॥ ३ ॥

॥ इति तटिदधिकरणम् ॥ ३ ॥

---

## ॥ (४) आतिवाहिकाधिकरणम् ॥

### सू०॥ ओं ॥ आतिवाहिकस्तल्लिङ्गात् ॥ ओं ॥ ४ (५) ॥

अनन्तरसङ्गतिं सूचयन्नाह—**वायोरातिवाहिकत्वेमसमर्थनादिति** ॥ ननु तर्ह्यस्य "वायुशब्दात्" इत्येतदानन्तर्यमेव स्यादिति चेत्, सत्यम् । एकवाक्यपठिततटिद्वरुणविचारस्यान्तरङ्गत्वेन तदानन्तर्यमेवास्य प्राप्तस्यादिति भावः । **किमिति** । अत्र "स इतो गतो द्वितीयं स वायुम्" इति श्रुत्युक्तो वायुः किं मुख्य उतातिवाहिक इति चिन्ता । तदर्थं श्रौतोऽयं वायुशब्दो मुख्यया वृत्त्या प्राप्यत्वेनाभिमतमुख्यवायुपर उतामुख्यया वृत्त्या तथाभूतातिवाहिकपर इति । तदर्थं तत्पतिं वायुमुपगम्येत्यन्ते प्राप्यत्वेन श्रुतो वायु किमातिवाहिक उत मुख्य इति । तदर्थमन्ते प्राप्यस्य मुख्यवायुत्वे पूर्वप्राप्ययातिवाहिकत्वे च विशेषप्रमाणं नास्त्युतास्तीति । वायुशब्दस्य तत्रैव मुख्यत्वादिति । अनेन शाब्दे ज्ञाने शब्दमुख्यार्थस्यैव प्रथमं विषयत्वेन भाति । तत्र बाधकोपस्थित्यनन्तरम् अमुख्यार्थस्येति मुख्यवायुग्रहणे प्रतीतिसुक्रमोपपत्तिरिति **न्यायविवरणांशो** व्याख्यातो भवति ॥ यद्वा—विक्रम इत्युक्तन्याय एतदधिकरणसंबन्धित्वेनापि "न च सोमादग्निम्" इत्यादिन्यायविवरणेन **विवृत** इत्यभिप्रेत्याह—**मुख्यस्यापि प्रथमप्राप्तिसंभवादिति** । अत्र "अपि" पदेनोत्तमत्वक्रमानुसारेण न प्राप्तिक्रम । "सोमं वैश्वानरं चेन्द्रम्" इत्यादौ सोमादनन्तरमग्ने-

---

१. **वीतराग इति** । "वीतरोग" इति "मध्वविलास" पुस्तकपाठ । **भावबोध** कारास्तु तदभ्युगस- "आमयपदस्य रोगार्थत्वादाह" इति **भावदीप** कारा । "अन्यथा सत्यानृतविवेचकत्वं न स्यात्" इति कारणमाहुरिति पाठसाधुतासमर्थनाय द्रष्टव्यम् ।

२. **समर्थनादिति** । "साधनात्" इति "मध्वविलास" पुस्तकपाठ ।

२१७ रग्नेरनन्तरमिन्द्रस्य प्राप्त्युक्त्या व्यभिचारादिति सूचयति—सन्देहेऽपीति। अनेन सूत्रगत"व्यामोह"शब्दस्य सन्देहार्थत्व पञ्चम्या अनुपयोगात् सप्तम्यर्थत्वं चाभिप्रेत्य भाष्ये व्यामोह इत्युक्तमित्युक्त भवति। उत्तरस्य दिवस्पतित्व श्रवणादिति। अनेनोत्तरस्य दिवस्पतित्वप्रतिपादकविशेषश्रुतितोऽन्ते प्राप्यत्वेनै कमार्गस्यैव मुख्यवायुरूपमार्गस्य प्राप्तिरिति न्यायविवरणांशो व्याख्याता भवति। यद्वा, उक्तमित्युक्तन्याय एतदधिकरणसम्बन्धित्वेनाप्युक्तमत्वात् "तस्येव" इति न्यायविवरणेन च विवृत इत्यभिप्रेत्याह—तस्य चेति। दिवस्पतित्वरूपो-त्कृष्टत्वस्येत्यर्थ। वरुणानन्तराया इति। तडिद्विद्युच्छब्दयोरेकार्थत्वादिति भाव। अत्र प्रथमे—पूर्वप्राप्यस्य वायोरातिवाहिकत्वे पूर्वप्राप्यत्वलिङ्गोक्ति। अन्तिमे—अन्ते प्राप्यस्य वायोर्दिवस्पतित्वरूपहेतूक्तिरिति सूत्रक्रम ॥ ४ ॥

॥ इत्यातिवाहिकाधिकरणम् ॥ ४ ॥

---

## (५) ॥ वैद्युताधिकरणम् ॥

## सू० ॥ ओं ॥ वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ओं ॥ ६ ॥

मुख्यवायोरन्तिमत्वसमर्थनादिति। पूर्वाधिकरणे दिवस्पतित्वेनोक्तस्य मुख्यवायोरत्रान्तिमप्राप्यत्व समर्थ्यत इत्यनन्तरसङ्गतिरिति भाव। किमिति। अत्र प्राप्तिमार्गे किं मुख्यप्राणपरब्रह्ममध्यगतकिञ्चित्प्राप्यको भवत्युत न भवतीति चिन्ता। तदर्थम् "सोम वैश्वानर चेन्द्र ध्रुवम्" इत्यादिनोक्तोत्तमक्रमानुसारेण प्राप्तिक्रमः भाव, मध्ये कस्यचित् प्राप्यत्वसाधको भवत्युत न भवतीति। तदर्थं वायोरन्यस्य ब्रह्मप्रापकत्वशक्तिरस्त्युत नास्तीति। तदर्थं ब्रह्मप्रापकत्वशक्तेर्मुख्यप्राणमात्रनिष्ठत्वे विशेषप्रमाण नास्त्युतास्तीति। "सोमादग्निमग्नेरिन्द्रम्" इति सोमादवरत्वस्यापि प्राप्ते प्रधानवायोरप्यवरोऽन्य प्राप्योऽस्तीति न्यायविवरण मनसि निधाय पूर्वपक्ष रचयति। "ब्रह्मणोर्वाग्वायो परतोऽन्य प्राप्य" इत्यादिना उदाहृत न्यायविवरणानुसारेण तत्र तत्रेत्यादिभाष्य व्याचष्टे—तत्र तत्रेत्यादिना।

---

१ एकेति। एक एव मार्ग इति व्यवस्थापितत्वादिति भाव।

रैजादौ तथा दर्शनादिति । अनेन न हि राजानं यः कश्चित् प्रापयति । वल्लभमतिप्रियं चापहायेति न्यायविवरणांशो व्याख्यातो भवति । ब्रह्मप्राप्तिश्च वायुनैव भवतीति । अनेनोत्तमत्वात्तस्यैव ब्रह्मप्रापयितृत्वशक्तेरिति न्यायविवरणमुक्तनात्पर्यं भवति । तत्पुरुषो मानव इति । उपलक्षणमेतत् । "वायुरेव ब्रह्म 'गमयति तस्य ह्येषा शक्तिः" इत्यादिन्यायविवरणोदाहृतश्रुतेश्चेत्यपि द्रष्टव्यम ॥ ५ ॥

॥ इति वैद्युताधिकरणम ॥ ५ ॥

---

## (६) ॥ कार्याधिकरणम् ॥

### सू० ॥ ओं ॥ कार्यं बादरिरस्य गत्युपपत्तेः ॥ ओं ॥ ७ ॥

अत्र तेन मार्गेण गतानामिति । एतच्च गम्यनिरूपणस्य प्राथमिकत्वशङ्कापरिहारार्थमेवोक्तम् । मार्गानिरूपणे गम्यनिरूपणस्यानाकाङ्क्षितत्वात् । न तु गन्तृनिर्देशार्थम् । देहलयवतामपि गन्तृत्वादिति ज्ञातव्यम् । अत एव मार्गे विचार्येत्येतदपि सार्थकम् । गम्यनिरूपणादिति । पूर्वाधिकरणे मुख्यप्राणो यद्ब्रह्म गमयतीत्युक्तम्, अत्र तद्गम्यनिरूपणादनन्तरसङ्गतिरिति भाव । तदर्थं किमिति । अत्र गम्यं किं कार्यपरयोरन्यतरदेवतोभयमपीति चिन्ता । तदर्थं बादरिजैमिनिमताश्रयेण तत्तत्पक्षसाधकत्वेनोक्ताना गत्युपपत्त्यादीना ब्रह्मशब्दमुख्यार्थत्वादीनां मुनिमतयोश्च किमेकाधिकारिविषयतया अन्योन्यनिषेधकत्वेन विरोध उत भिन्नाधिकारिविषयतया अन्योन्यपक्षानिषेधकत्वेनाविरोधो वेति । तदर्थं भिन्नाधिकारिकत्वपक्षेऽपि तत्तत्प्राप्तौ तेषां तेषामधिकारिणा योग्यतारूपो नियामक क्रमो नास्त्युतास्तीति । तदर्थं कार्यपरयोरुभयोरपि प्राप्यत्वेऽप्रती-

---

१. राजादाविति । राजसन्निहितातिप्रधानमनुज एव राजानं प्रापयति यथा, तथा वायुरेव परमात्मान गमयतीति भाव । अत सिद्ध वायोरतिप्राधान्यम् ।

२. गम्येति । मार्गनिरूपणानन्तरमेव तेन मार्गेण प्राप्यस्य गम्यस्य निरूपणमिति भाव ।

कालम्बनप्रतीकालम्बनत्वादययोग्यतारूपकमसत्त्वे च विशेषप्रमाण नास्त्युतास्तीति। चैतुर्मुखमुक्तिपर्यन्त सततत्वनियमाद्बन्धस्य तावद्ब्रह्मप्राप्तिर्नास्तीति नियम इति न्यायनिरणोक्तयुक्तिप्रमाणोदाहरणपूर्वकमाह—**तथापि प्रकृतेर्बन्ध** इत्यादिना। **चतुर्मुखस्यैव गत्युपपत्तेरिति।** अस्यैव गत्युपपत्तेरिति भाष्यव्याख्यानपरेणानेन तावद्ब्रह्मप्राप्तिर्नास्तीति नियम इति **न्यायनिरण**स्यापि फलित दर्शितमिति ज्ञातव्यम्। **बद्धत्वसाम्यादिति।** प्रथम विष्णुप्राप्तौ बाधकत्वेनोक्तस्य बद्धत्वस्य प्रलयादर्वाक् द्वितीयतया प्राप्यत्वेऽपि बाधकत्वात्। एवमपि द्वितीयतया प्राप्यत्वे प्रथममेव प्राप्तिसंभवादित्यर्थ। "परस्मान्त" इत्यत्र 'पर'-शब्दार्थमाह—**पर ब्रह्म वायुरिति। मुख्यार्थे ममरतीत्यादिना।** परब्रह्मण एव ब्रह्मशब्दमुख्यार्थत्वेन प्रथमप्राप्तत्वेनापोह्यऽयुक्तेस्तस्यैव प्राप्तिनियम इति **न्यायनिरण**मुक्ततात्पर्यमिति ज्ञातव्यम्। परप्राप्तिर्यस्याभीष्टा तस्य तत्प्राप्तिरिति नियम इति न्यायनिरण मनसि निधाय तृतीयपूर्वपक्षे युक्तिमाह—**यस्य कार्यप्राप्तीच्छा तस्य कार्यप्राप्तिरित्यादिना।** अनेन परप्राप्तिरिति **न्याय-निरण**मुपलक्षकमित्युक्त भवति। यथासौकर्यं चतुर्मुखस्य परस्य वा संप्राप्तिरिति **न्यायनिरणार्थ**माह—**क्रमपक्षे**ऽपीत्यादिना॥

ननु पक्षद्वयस्यापरिहार्यत्वे क्रम विनैवोभयप्राप्तिरस्त्वित्यत आह—**महाफल** इति। अक्रमस्य क्रमाभावस्येत्यर्थ। क्रमान्तरेणान्यथासिद्धि परिहरति **क्रमान्तरस्य** चेति। **कार्यमेव नयतीत्यन्यव्यावृत्त्येति।** परप्राप्तिग्रहणे कार्यप्राप्त्युक्तहेत्वनुपपत्तिरणो दोष तदा स्यात्। यदि कार्यप्राप्त्युक्तहेतो परप्राप्तिबाधकरूपत्वेन कार्यमात्रप्राप्तौ विशेषहेतुत्व स्यात्। न चैवमित्यर्थ॥

ननु बद्धत्वेन परगत्यनुपपत्तेरुक्तत्वात् कथ विशेषहेतुत्वाभाव इत्यत आह—**येषा परप्राप्तिरिति। प्रमाणबलेनेति।** ब्रह्मशब्दमुख्यार्थत्वदृष्टत्वादिरूपयुक्तिरूपप्रमाणबलेनेत्यर्थ। **अन्यनिषेधकत्वाभावादिति।** "प्राप्नोति

---

१ **चतुर्मुखेति।** चतुर्मुखमुक्तिपर्यन्त बन्धस्याविनाभाव इति द्रष्टव्यम्। 'तथापि प्रकृतबन्धा ब्रह्मणा सहाभवत इति **टीकाकारै**रुदाहृत वचनम्।

२ **महाफल इति।** [illegible]महाफल अथवा मो[illegible]णमहाफल इति भाव।

ब्रह्माणं चतुर्मुखम् " इत्यादाववधारणाद्यभावादिति भावः । **नापि परमेवेति ।** तात्पर्यं पूर्ववत् ।

ननु " ब्रह्मा गमयति " इत्यत्र ब्रह्मशब्दस्य विष्णौ मुख्यत्वेन विशेषहेतुत्वात् कथं तदभाव इत्यत आह—**केषाञ्चित् कार्यप्राप्तेरेव प्रमाणबलेनेति ।** " प्राप्नोति ब्रह्माणं चतुर्मुखम् " इति प्रमाणबलेनेत्यर्थः । दर्शनप्रतिपत्त्यभिसन्धीनामपि विशेषहेतुत्वं निरस्यति—**कार्यप्राप्तिमतां चेति ।**

ननु पक्षद्वयोक्तदोषाभावेऽपि पक्षद्वयाङ्गीकारे मुनिमतद्वयविरोधो दोषः स्यादित्यत आह—**मुनिमतयोश्चेति । यान्ति देवमिति ।** अनेन—

" यान्ति देवं परं केचित् पूर्वं केचिल्लये विभुम् ।
योग्यतातारतम्येन विशेषोऽयमपीष्यते ॥ "

इति श्रुतेस्तथा प्राप्तत्वादिति । " यान्ति देवं परं केचित् " इति प्रमाणप्राप्तत्वादेवेति च **न्यायविवरण**मुक्ततात्पर्यं भवति । **न्यायविवरणो**दाहृतश्रुतिमुदाहरति—**क्रमानुरागीति ॥**

ननु यथा उभयप्राप्तौ क्रमसापेक्षत्वप्रतिपादक**न्यायविवरणो**दाहृतश्रुतिरस्ति तथा क्रमं विनेच्छानुसारेणाप्युभयप्राप्तौ भाष्योदाहृता स्मृतिरस्तीत्याशङ्क्य परिहरति—**न च यत्प्राप्तुमित्यादिना ।** अत्र कर्मोपासनमेवेति भाष्यं तन्निवर्तनीयाशङ्कानिषेधपूर्वकं व्याचष्टे—**न चात्रेति । श्रुतिस्मृतिप्राप्तस्यैव ग्राह्यत्वेनेति ।** श्रुतिश्च " सप्रतीकाश्चतुर्मुखम् " इत्यादिका **न्यायविवरणो**दाहृतेति ज्ञातव्यम् । अनेन श्रुत्युक्तानुवृत्तेरेव न्याय्यत्वादिति **न्यायविवरणं** यदि " क्रमानुरागी भवान् " इति श्रुत्यनुरोधेनोभयप्राप्तौ क्रमानुवृत्तिः कर्तव्या तर्हि " सप्रतीकाश्चतुर्मुखम् " इति श्रुत्याद्युक्तक्रमानुवृत्तेरेव न्याय्यत्वाद्योग्यतारूपक्रमस्यैवानुवर्तनं कर्तव्यम्, न सौकर्यरूपस्येति व्याख्यातं भवति ॥

---

१. **नापीति ।** परमेव प्राप्नोतीति नाऽवधारणमिति भाव । नाऽपि कार्यमेवेति ।

२. **अनुवर्तनमिति ।** योग्यतारूपक्रमस्य पूर्वपक्षिणाऽऽक्षिप्तस्येति भाव ।

ननु " कार्यं बादरि " इत्यादि " विशेषं च दर्शयति " इत्यन्तदश-सूत्र्या एकाधिकरणत्वे,

" सान्तानिकप्राप्तिरभीष्टता च
सौकर्यमित्यन्यमतस्य तर्का ।
विशेषसंप्राप्तिरस्त्वमास्ति,
क्रमानुराग कथितानुवृत्ति " ॥

इत्यनुव्याख्याने एतद्दशसूत्रीसंबन्धित्वेन पूर्वोत्तरपक्षयुक्तिद्वाहुल्यकथनमयुक्तं स्यादिति चेत, न, न्यायनिरूपण एवान्तर्भेदोऽधिकरणत्वात् समुदाययोरि-त्यनेनास्या परिहृतत्वादिति। अत्र कार्याकार्यपरयोरधमोत्तमभावस्य विवक्षया आदौ प्रथमसूत्रे—चतुर्मुखस्य प्राप्यत्वे गत्युपपत्तिरूपहेतूक्ति । द्वितीये—तत्रैव तदुपोद्बलकत्वेन " प्राप्नोति चतुर्मुखम् " इति श्रुत्युक्ति । तृतीये—" ब्रह्मविदाप्नोति परम् " इति श्रुतिविरोधपरिहाराय तस्या समीपत एव ब्रह्मप्राप्त्यर्थत्वोक्ति । बद्धत्वेन समीपतोऽपि परप्राप्तिर्न भवतीति श्रुतेस्तदर्थत्वा सम्भवाशङ्कानिरासाय, चतुर्थे—सामीप्यशब्दस्य विवक्षितार्थकत्वे श्रुतिरूप प्रमाणोक्ति । पञ्चमे—तत्रैव विशेषश्रुतिरूपप्रमाणोक्ति । षष्ठे—परब्रह्म प्राप्यत्वे ब्रह्मशब्दमुख्यार्थत्वरूपहेतूक्ति । उक्तबाधकवशाद्ब्रह्मशब्दस्यामुख्यार्थ त्वमेवाङ्गीकार्यमित्य शङ्कानिरासाय दृष्टत्वरूपहेत्वन्तरोक्ति । अष्टमे—अमुख्यार्थ स्वीकारे बाधकोक्ति । नवमे—उभयोरपि प्राप्यत्वमिति सिद्धान्तोक्ति । तत्र परमिति शेष । अन्यान् कार्यमित्यस्योपलक्षणम् । तथा च " अप्रतीकालम्ब-नान्नयति " इति प्रतिज्ञा । " उभयथा च दोषात् " इत्यनेनोभयत्र हेतूक्ति । " तत्क्रतुश्च " इति क्रमोक्ति । " अप्रतीकालम्बनान् " इत्यादिना क्रमस्य योग्यतारूपत्वोक्ति । दशमे तत्र श्रुतिरूपप्रमाणोक्तिरिति सूत्रक्रम ॥

अत्र मार्गप्रतिपादकत्वेन आद्यमधिकरणपञ्चकमेका पटिका । तत्रैकवा क्यविचारपरतयाऽऽद्यमधिकरणत्रयमवान्तरमेका पेटिका । तत्राद्ये—ब्रह्मप्राप्ति मार्गस्यार्चिप प्राथम्योक्ति । द्वितीये—वायोर्द्वितीयत्वोक्ति । तृतीये—

१ परयोरिति । अकार्यं ब्रह्म परं ब्रह्मेत्यर्थ ।

तटितः संवत्सरानन्तर्यस्य वरुणस्य तटिदानन्तर्यस्योक्तिः । उत्तरमधिकरणद्वयं वायुविचारपरतया एका पेटिका । तत्राद्ये—द्वितीयप्राप्यस्य वायोरातिवाहिकत्वोक्तिः । द्वितीये—अन्तिमप्राप्यस्य वायोर्मुख्यत्वोक्तिः । षष्ठे—गम्यप्रतिपादनमिति ज्ञातव्यम् ॥ ६ ॥

॥ इति कार्याधिकरणम् ॥ ६ ॥

इति श्रीमद्रघुवर्यतीर्थपूज्यपादशिष्यरघूत्तमयतिकृते
श्रीमज्जयतीर्थपूज्यचरणविरचिततत्त्व-
प्रकाशिकाभावबोधे चतुर्थाध्यायस्य
तृतीयः पाद ॥ ३ ॥

---

१. गम्येति । प्रतिपादितमार्गेण गतैः प्राप्यस्य गम्यस्येति भाव. ।

॥ श्रीगुरुभ्यो नमः ॥

# ॥ चतुर्थः पादः ॥

## (१) ॥ सम्पद्याधिकरणम् ॥

### सू० ॥ ओं ॥ संपद्या विहाय स्वेन शब्दात् ॥ ओं ॥ १ ॥

718 **क्रमप्राप्त इति।** अनेनास्य पादस्यानन्तरसङ्गतिरुक्ता भवति। **गम्यत्वाभावप्रसङ्गादिति।** अनेन पूर्वपादान्त्याधिकरणोक्तस्य ब्रह्मणो गम्यत्वस्यात्र समर्थनादनन्तरसङ्गतिरुक्ता भवति। उक्तभोगस्यैवाप्रसक्तौ ब्रह्मातिक्रम्यानतिक्रम्य वा भोगान भुङ्क्त इति सन्देहप्रकारकथनमशक्यमित्यत आह— **तस्य च भोग आवश्यक इति।** [1]अन्यथा मुक्ते पुरुषार्थत्व न स्यादिति भाव। **ब्रह्मातिक्रम्येति।** अत्र मुक्त किं ब्रह्मातिक्रम्य भोगान् भुङ्क्ते, उत तत्समीप एवेति चिन्ता। तदर्थम् "अन्ध सन्ननन्धो भवति" इत्युक्तस्वरूपाविर्भावपूर्वकालीन "तीर्त्वा" इत्युक्ततरणकर्मत्वसमभिव्याहृतसेतुपदोक्तब्रह्मण उतान्यस्येति। तदर्थम् "एत सेतु गन्तुमन्यत्तीर्त्वा" इति वाक्यभेदाय पदद्वयाध्याहारो न कर्तव्य उत कर्तव्य इति। तदर्थमध्याहारज्ञापक मुक्तस्य ब्रह्मातिक्रमाभावे नदीविशेषस्य मुक्तकर्तृकतरणकर्मत्वे च विशेषप्रमाण नास्त्युतास्तीति। **अर्चिराद्यतिक्रमोक्तिरिति।** अर्चिरादावतिक्रमसहदृष्टत्वस्य प्राप्यत्वस्य ग्रामादावनतिक्रमसहदृष्टगम्यत्वस्य च ब्रह्मणि दर्शनादिति भाव। सूत्रस्थ "स्वेन" इतिपदसूचितन्यायविवरणभाष्योक्तपूर्वपक्षयुक्ति सङ्गमयितु विकल्पेन पृच्छति—**परमात्मानमविहायैवेति।** "एत सेतु तीर्त्वा" इत्यतिक्रमोक्ते ब्रह्मातीत्य गच्छतीति **न्यायनिरसणोक्तयुक्त्याद्य**पक्ष निराचष्टे—**नाद्य इत्यादिना।** अत्र सूत्रे "पर जैमिनि" इत्यत ब्रह्मार्थक "पर" मित्यस्यानुवृत्ति। "अविहाय" इत्यत पर भोगान् भुङ्क्त इति शेष। "स्वेन" इत्यत पर रूपेणावस्थानादिति च शेष इत्यभिप्रेत्य सूत्रार्थमाह—

---

१ अन्यथेति। भोगभाव इत्यर्थ।

**ज्ञानीत्यादिना** । अविहायानतिक्रम्येत्यर्थः । स्वेन रूपेणावस्थानं ससारावस्थायामप्यस्तीत्यतः **अन्यथारूपं परित्यज्येत्युक्तम्** । **आविर्भूतस्वरूपत्वेन भोगो मुक्तानामित्येतत् कुत इति** । यद्यप्युदाहरिष्यमाणश्रुत्यंशे भोगो न प्रतीयते, तथापि तच्छेषे "स तत्र पर्येति" इत्यत्र स्पष्टं भोग. प्रतीयत इति भाव.। **यतस्तत्रेति** । तत्र तरणमित्यादिभाष्यन्याख्यानपरेणानेनैव "सेतुं प्रत्यन्यत्तीर्त्वाइत्यर्थोपपत्तेरिति **न्यायविवरणांशो**ऽपि व्याख्यातो भवति । **एतं सेतुं तीर्त्वेदं गच्छतीति** । अनेन "ब्रह्म तीर्त्वेदं गच्छति" इति विशेषानुक्तः "तरती" इति सामान्यप्रतीतेः "इमा घोरामशिवा नदीं तीर्त्वा ब्रह्म सपत्स्यते" इति विशेषोक्तेश्चेत्यन्वयप्रदर्शनपूर्वकं **न्यायविवरणस्याप्यर्थ** उक्तो भवति ॥ १ ॥

॥ इति संपद्याधिकरणम् ॥ १ ॥

---

## (२) ॥ मुक्ताधिकरणम् ॥

### सू०॥ ओं ॥ मुक्तः प्रतिज्ञानात् ॥ ओं ॥ २ ॥

**भोगभोक्तुरिति** । "स तत्र पर्येती'त्युक्तस्येत्यर्थ । **अन्यथा** P 2
**भोगासिद्धे-रिति** । पूर्वाधिकरणे "स्वेन रूपेणाभिनिष्पद्यते स उत्तम पुरुष स तत्र पर्येती"त्यादिवाक्यबलान्मुक्तस्य "स एव विदि"ति श्रुत्युक्तो यो भोग उक्तस्तस्यान्यथा श्रुत्या भोगभोक्तुर्मुक्तत्वाभावेऽसिद्धेरित्यर्थ । अनेनानन्तर्यसङ्गतिरुक्ता भवति । एतेन ब्रह्मानतिक्रमेणैव भोगानुभवसाधनेनैव ब्रह्मप्राप्य तदविहायैव भोगभोक्तुर्मुक्तत्वस्यापि सिद्धत्वाद्गतार्थमिदमधिकरणमित्यपि परास्तम् । भोगप्रतिपादकश्रुत्युक्तस्य मुक्तत्वाक्षेपात् ।

---

१. **अन्यथेति** । अन्यथारूपपरित्यागसहकृतस्वरूपावस्थानमिति भाव । स्वरूपावस्थितिमात्रस्य बद्धावस्थायामपि विद्यमानत्वात् । उक्तं च—
"मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थिति" इति ।

२. आक्षेपादिति । श्रुतिप्राप्तभोगभोक्तुर्मुक्तत्वमाक्षिप्य व्यवस्थाप्यत इति द्रष्टव्यम् ।

**किमिति** । अत्र "स तत्र पर्येती"ति श्रुत्युक्तः किममुक्त उत मुक्त इति चिन्ता । तदर्थं "पर्येती"त्युक्तक्रियाया एतद्वाक्योक्तस्यामुक्तत्वसाधकत्वं संभवत्युत न संभवतीति । तदर्थं क्रियायाः साधकत्वाङ्गीकारे एतद्वाक्योक्तरमणादिदिव्यभोग "स्वेन रूपेणे"ति पूर्ववाक्योक्तस्वरूपाविर्भावयोर्मुक्तत्वसाधकयोरसंभवविरोधौ न प्राप्नुत उत प्राप्नुत इति । तदर्थं दिव्यभोगस्य ब्रह्मप्राप्तिमात्रनिबन्धनत्वं स्वेन रूपेणेति" "स तत्र पर्येती"ति वाक्ययोर्निर्गुणोपासकसगुणोपासकरूपभिन्नभिन्नविषयत्वेन प्रकरणभेदश्च कल्पयितुं शक्येते उत न शक्येते इति । तदर्थं दिव्यभोगस्याविर्भूतस्वरूपमुक्तमात्रनिष्ठत्वे विशेषप्रमाणं प्रकरणभेदकल्पने बाधकं च न स्त उत स्त इति । "स तत्र पर्येती"त्यादौ कृतिमत्वादमुक्त एवोच्यत इति **न्यायविवरणं** मनसि निधाय पूर्वपक्षमाह--**नायं मुक्त**—इत्यादिना । कृतकृत्यस्येत्यनेन **न्यायविवरणो**क्तकृतिमत्वहेतोरप्रयोजकत्वशङ्का परिहृता भवति । मुक्तत्वे कर्तव्यस्य कृतत्वेन निरर्थकक्रियावत्वं न स्यादिति हेतूच्छित्तेः । **अन्यदेति** । अनेन भाष्ये"ऽहरहरेनमि"त्यादि"तद्भवती"त्यन्तश्रुत्युदाहरणस्य निवर्तनीयप्रदर्शनेन प्रयोजनमुक्तं भवति । "स तत्र पर्येती"ति श्रुत्यैक्यप्रतीतेश्चेत्यादि**न्यायविवरण**निरसनीयमाह—**न च मुक्तत्वे श्रुत्युक्तस्ये**त्यादिना । "दिव्ये"त्यनेन"ऽहरहरि"ति श्रुतेरेतावन्तं कालं सुखमहमस्वाप्समित्यनुस्मृतिविरोध परिहृतो भवति । **श्रुतिविरोधादिति** । अथ "यदैन मुक्तोऽनुप्रविशती"ति श्रुतेर्मुक्तस्य प्रवेशलक्षणक्रियाप्रतीतेरिति भाव । क्रियाया. फलरूपत्वेन कृतकृत्यत्वमप्युपपद्यत इति भाव । "स तत्र पर्येती"त्यादौ "स्वेन रूपेणाभिनिष्पद्यत" इति मुक्तस्य स्पष्ट प्रतिभातत्वाच्छ्रुताविति **न्यायविवरणार्थ**माह—**स्वरूपाविर्भावोक्त्या-चेति** । "स तत्र पर्येती"ति श्रुत्यैक्यप्रतीतेश्चेत्यादि प्रसङ्गादित्यन्त**न्यायविवरण**फलितार्थमाह—**एकप्रकरणत्वेन प्रतीतस्ये**त्यादिना ॥ २ ॥

॥ इति मुक्ताधिकरणम् ॥ २ ॥

---

१. **नायमिति** । श्रुतिप्रतिपादितभोगभोक्ता न मुक्त इति पूर्व पक्ष । तस्य क्रियाप्रतीतेः । मुक्तत्वाऽविनाभूतकृतकृत्यत्वक्रियावत्त्वयोर्विरोधादिति भाव । कृतकृत्य क्रियावत्त्विति व्याहतमेतत् ।

## ॥ (३) आत्माधिकरणम् ॥

### सू०॥ ओं ॥ आत्मा प्रकरणात् ॥ ओं ॥ ३ ॥

**ज्योतिषो ब्रह्मत्वेति ।** पूर्वाधिकरणे यज्ज्योतिः[1] प्राप्य भोगभोक्तुर्मुक्तत्वमुक्तम्, तस्य ज्योतिष इत्यर्थः । अनेनानन्तरसङ्गतिरुक्ता भवति । **ब्रह्मप्राप्त्यनुपपत्तेरिति ।** "परं ज्योतिरुपसंपद्य" इत्युक्तब्रह्मप्राप्त्यनुपपत्तेरित्यर्थः । **विष्णुरिति ।** अत्र परं ज्योतिरित्युक्तं ज्योतिः किमादित्यं उत विष्णुरिति चिन्ता । तदर्थम् "स तेजसि सूर्ये": इति समाख्यायाः "परं ज्योतिः" इति वाक्यस्यादित्यपरत्वसाधकत्वं न संभवत्युत सभवतीति । तदर्थम् "आत्मा" इत्यादिपरमात्मप्रकरणं समाख्याबाधकं न भवति उत भवतीति । तदर्थम् "य आत्मापहतपाप्मा" इति परमात्मप्रकरणेऽपि आदित्यस्य परंज्योतिः शब्देनोक्तिः प्रासङ्गिकी संभवतीति, प्रकरणं सावकाशमुत समाख्या सावकाशेति । तदर्थं परंज्योति.शब्दः किमादित्यादेर्वाचक. उत परमात्ममात्रवाचक इति । तदर्थं तन्मात्रवाचकत्वे प्रमाणं नास्त्युतास्तीति । परमात्मैवोच्यत इति भाष्यसूचितपूर्वपक्षमाह—**न विष्णुरित्यादिना ।** **न्यायविवरणं** सयोजयितुमाह—**न चेति ।** परंज्योति.शब्देनेत्यादिप्रयोजनमित्यन्तं **न्यायविवरणं** व्याचष्टे । **अत्रादित्याङ्गीकार** इत्यादिना । **एकवाक्यत्वलाभादिति ।** एकार्थत्वलाभादित्यर्थः । अनेनैकार्थतेति प्रयोजनमिति **न्यायविवरणांशो** व्याख्यातः । एवं तर्हि "स पाप्मना" इत्यनेन "स्वेन रूपेण" इत्यस्य एकार्थत्वरूपसमाख्यायाः का गतिरित्यत "सावकाशत्वलिङ्गात्' इति **न्यायविवरणांशं** व्याख्याति—**तस्याः सावकाशत्वाचेति ।** तत्रैकार्थतेति प्रयोजनमित्युक्तसमाख्याया एव लिङ्गपदेन विवक्षितत्वात् । **नैतदस्तीति ।** अनेन परंज्योति-शब्दस्य निरवकाशत्वप्रतिज्ञापरत्वेनापि परंज्योति शब्देन परमात्मैवोच्यत इति भाष्यं व्याख्यातं भवति । **स्मृतिविरोधादिति ।** उपलक्षण चैतत् । अथकिमुच्यते परंज्योति आत्मैव परं ज्योतिरित्यादिन्यायविवरणोदाहृतश्रुति-

१ ज्योतिरिति । ज्योति परं ब्रह्म विष्णुरिति स्थाप्यतेऽस्मिन्नधिकरणे ।

२. आदित्य इति । ज्योतिरादित्य न ब्रह्मेति पूर्व पक्ष । समाख्याबलात् ।

विरोधाच्चेत्यपि द्रष्टव्यम् । अनेन परज्योति शब्दस्य श्रुतित्वेन "पर ज्योति-रुपसपद्य" इति श्रुत्युक्तज्योतिषो विष्णुत्वसाधकत्वमुक्त भवति । तथा च निरव-काशश्रुतेरेव बलवत्त्वादिति न्यायविवरणमुक्ततात्पर्यं द्रष्टव्यम् ॥ ३ ॥

॥ इति आत्माधिकरणम् ॥ ३ ॥

---

## (४) ॥ अविभागाधिकरणम् ॥

### सू०॥ ओं ॥ अविभागेन दृष्टत्वात् ॥ ओं ॥ ४ ॥

अनन्तरसङ्गतिमाह—**परमात्मान प्राप्येति** । पूर्वाधिकरणे "स तत्र पर्येति" इति वाक्योक्तदिव्यभोगभोक्तृमुक्तप्राप्यस्य परज्योतिशब्दवाच्यस्य विष्णुत्वसमर्थनेनास्य निष्टङ्कितत्वादिति भाव । **किमिति** । अत्र "रममाण " इत्यादिवाक्योक्ता रमणादिदिव्यभोगा मुक्त परमात्मभुक्ता एव भुञ्जन्ते उत परमात्माभुक्ता एवेति चिन्ता । तदर्थं नियमपक्षे मुक्तौ परमपुरुषार्थत्व न सभवत्युत संभवतीति । तदर्थं मुक्ताना कदाचित् कामिताप्राप्तिरुत सर्वदा कामिता-प्राप्तिरेवेति । तदर्थं पूर्णानन्दस्यापि परमात्मनो भोग किं कादाचित्क उत सार्वकालिक इति । तदर्थं तद्भोगस्य सार्वकालिकत्वे प्रमाण नास्त्युतास्तीति । परमगतित्वादीश्वराभुक्ता अपि भोगा मुक्तौ भवन्तीति **न्यायविवरणानुसारेण** पूर्वपक्षमाह—**परमात्माभुक्ता** इति । अनेनेश्वरेत्यादिप्रतिज्ञांशो व्याख्यात । परमगतित्वस्य हेतुत्वं घटयति—**मोक्षस्येति** । ईश्वरस्य स्वत एव पूर्णानन्दत्वाद-भोगस्यापि सभवादिति **न्यायविवरण** विपक्षबाधकप्रदर्शनपरत्वेन व्याचष्टे —**परमात्मभुक्ता एवेति नियम** इति । परमगतित्वहेतोरप्रयोजकत्वमाह— **मुक्तानामिति** । उक्ततर्कदूषणपरत्वेन

---

१ **परमात्मानमिति** परमात्मान प्राप्य परमात्मभुक्तानामेव भोगाना भाजन भवात मुक्त इत्यत्र व्यवस्थाप्यत ।

२ **परमात्मेति** । अन्यथा परमात्मन सर्वोत्तमत्वसर्वभोक्तृत्व न स्यातामिति भाव ।

"पूर्णानन्दः पूर्णभुक् पूर्णकर्ता
पूर्णज्ञानः पूर्णमाः पूर्णशक्तिः।
आश्चर्यत्वाद्भगवान्वासुदेवो
विरुद्धशक्तिर्न च दोषस्पृगीशः।"

इति आश्चर्यतयैव ब्रह्मण उभयोक्तेरिति न्यायविवरणं व्याचष्टे—पूर्णानन्द इति। न्यायविवरणगतस्योभयोक्तेरित्यस्य व्याख्यानं पूर्णानन्दत्वेऽपि पूर्णभोगश्रवणादिति॥ P 2

ननूपपत्तित्वाविशेषात् परमगतित्वस्य कथमाश्चर्यत्वेन बाध इत्यत उक्तं न्यायविवरणे सावकाशोपपत्तिमात्रान्निरवकाशश्रुतियुक्तोपपत्तेरेव प्रबलत्वादिति। अत्र श्रुतिशब्देन "पूर्णानन्दः पूर्णभुक्" इत्युदाहृतश्रुतिरेव ग्राह्या; न तु श्रुतिलिङ्गमित्युक्तश्रुतिरिति ज्ञातव्यम्॥ ४॥

॥ इति अविभागाधिकरणम्॥ ४॥

---

## (५) ॥ ब्राह्माधिकरणम्॥

**सू० ॥ ओं ॥ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ओं ॥ ५-(७)॥**

**भोगस्य समर्थनादिति**। पूर्वाधिकरणे सायुज्यभाजा भगवद्भुक्तभोग उक्तः। तस्यात्र भगवद्देहादिकारणविशेषोक्त्या समर्थनादनन्तरसङ्गतिरिति भावः। तदर्थं **मुक्तानामिति**। सायुज्यभाजा भोगो न युक्त उत युक्त इति चिन्ता। तदर्थं संसारपारगतिरूपा तत्कारणरूपो देहो मुक्तानां न सम्भवत्युत सम्भवतीति। तदर्थं मुक्तिर्देहमात्रविरोधिनी उत मर्त्यदेहैकविरोधिनीति। तदर्थं मर्त्यदेहैकविरोधित्वपक्षेऽपि ब्राह्मचितिमात्रदेहाभ्यां भोगो न युज्यत उत युज्यत इति। तदर्थं "ब्राह्मेण" इति जैमिनिमतस्य सायुज्यभाजा स्वदेहाभावाभ्युपगमरूपत्वेन

---

१ **पूर्वेति**। येषां मुक्तानां पूर्वाधिकरणे भगवद्भुक्तस्यैव भोग उक्तः स्तेषां मुक्तानां शरीरसद्भावोऽत्र विचार्यते।

"चितिमात्रेण" इत्यौडुलोमिमतस्य[1] तेषां स्वदेहाभ्युपगमरूपत्वेन परस्परं विरोधः उताविरोध इति। तदर्थं ब्राह्मचितिमात्रदेहयोः सायुज्यभानामन्तर्बहिर्भोगकारणत्वे विशेषप्रमाणं नास्त्युतास्तीति। पारगतत्वान्मुक्तस्य चिन्मात्रदेहोऽपि नास्तीति न्यायविवरणं सोपस्करं व्याचष्टे—**तेषां संसारपारंगतत्वेनेति।** मुक्तस्येति **न्यायविवरणसूचिततर्कमाह—अन्यथेति।** सूत्रनिरसनीययुक्तिमाह—**शरीराभाव इति।** देहाभावाभ्युपगमे हेतुमाह—**सर्वदेहेति।** अनेन भाष्ये ब्रह्मणैवेत्येवकारोक्तदेहाभावे सर्वदेहपरित्यागेन मुक्ताः सन्त इत्यनेन हेतुरुच्यत इति, तृतीयाया इत्थंभावार्थत्वमिति चोक्तं भवति। सूत्रे "चितिमात्रेण" इत्यतः परं भुज्यत इति शेष इत्यभिप्रेत्य प्रवृत्तं तेन भुज्यत इति भाष्यं तात्पर्यतो व्याचष्टे। **न मुक्तानां भोगासंभव इति।** देहो मुक्तानां पृथग्वियत इति भाष्यं व्याचष्टे। **तेषामिति**—पृथगित्यस्यार्थो **ब्रह्मदेहातिरिक्तेति।** भाष्ये चितिमात्र इति हेत्वर्थगर्भविशेषणमित्यभिप्रेत्याह—**देहस्य चितिमात्रत्वादिति।** चितिमात्रेणेत्यनेनोक्तस्य मुक्तदेहस्य चिन्मात्रत्वहेतोः संसारिभावे साध्येऽप्रयोजकत्वपरिहाराय सूत्रे "तदात्मकत्वात्" इत्युक्तम्। तद्व्याख्यानपरं च तदात्मकत्वादिति भाष्यं तन्निवर्तनीयाशङ्कां देहस्येत्यादिना प्रदर्श्य व्याचष्टे—**चिन्मात्रस्य[2] मुक्तस्वरूपत्वादिति।** अनेन सूत्रभाष्ययोर्मुक्तस्येति शेष इत्युक्तं भवति। अस्यापि च कथं हेतुत्वमित्यत अकृत्रिमत्वादित्यादिन्यायविवरणानुसारेण हेतुहेतुमद्भावं घटयति—**कृत्रिमशरीरस्येत्यादिना। जीवस्येति।** मुक्तस्येत्यर्थः। **अनुक्तत्वादिति।** "सर्वं वा एतत्" इति श्रुतौ मुक्तस्य चिच्छरीरमात्रोक्तावपि तस्य भोगकारणत्वानुक्तेरित्यर्थः। **स वा एष इति श्रुताविति।** उपलक्षणं चैतत्। कथं मुक्तस्य चिन्मात्र एव देहो भवतीत्यादिन्यायविवरणोदाहृतश्रुतावित्यपि द्रष्टव्यम्। **स्मृत्या दर्शयतीति।** स्मृतौ

'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः'

१. **मतस्येति**। मुक्ताना देहाभाव इति जैमिनिमतम्। देहभाव इत्यौडुलोमिमतम्। एतयोर्मतयोर्न विरोध इति बादरायणीयं मतमिति द्रष्टव्यम्।

२. **चिन्मात्रेति**। मुक्ताना चिन्मात्रशरीरमिति भाव।

इत्यनेन जैमिनिमतस्य नश्वरदेहाभावाभ्युपगमरूपत्वेन, व्यवस्थया [1]विरोध-परिहारप्रकारस्योक्तत्वादिति भावः । "सायुज्यभाजां भगवत्प्रवेशो न भोगस्य गच्छामि" इति श्रुत्युक्तरीत्या तदाशासितत्वेन तथा भोगस्य बहिर्भोगापेक्षया प्राथम्यप्राधान्यबाहुल्यादिना चाभ्यर्हितत्वे नाद्ये—सूत्रे तत्र प्रमाणोक्तिः । द्वितीये—तदनुग्रहतया कादाचित्कबहिर्भोगकारणतया च ब्राह्मदेहापेक्षयाऽप्रधानजीवस्वरूपचितिमात्रदेहोक्तिः । तृतीये—चिन्मात्रदेहस्य भोगकारणत्वे प्रमाणविशेषोक्तिपूर्वकं मुनिमतयोः स्वमतत्वोक्त्याऽविरोधोक्तिरिति सूत्रक्रमः ॥ ५ ॥

॥ इति ब्राह्माधिकरणम् ॥ ५॥

---

## (६) ॥ सङ्कल्पाधिकरणम् ॥

### सू०॥ ओं ॥ सङ्कल्पादेव च तच्छ्रुतेः ॥ ओं ॥ ८ ॥

**सङ्कल्पमात्रसाध्येति** । पूर्वाधिकरणे यस्य भोगस्य[2] कारणत्वमुक्तं तस्यात्र सांसारिकभोगवैलक्षण्याय सङ्कल्पमात्रसाध्यत्वसमर्थनादनन्तरसङ्गतिरिति भावः । **किं तदिति** । अत्र मुक्तभोगः किं तत्तदुपायसाध्यसाधनसाध्य उत सङ्कल्पमात्रसाध्य इति चिन्ता । तदर्थम् तत्तदुपायसाध्यसाध्यसाधनसाध्यत्वसाधकौ-कस्त्वयुक्तिरबाधितविपयोत बाधितविषयेति । तदर्थं मुक्तभोगानां सङ्कल्पमात्रसाध्यत्वे प्रबलप्रमाणं नास्त्युतास्तीति । तदर्थम् "स यदि पितृलोककामो भवति" इति श्रुतेर्लोकविरोधः स्यादिति तर्कबाधो भवत्युत न भवतीति । तदर्थमयं तर्को अनाभास उतेष्टापादनरूपत्वेनाभास इति । भगवदोकसि स्थितत्वान्मुक्तस्य तत्तस्य प्योकस्त्वसाम्येन तत्तदुपायसाध्यभोगसाधनत्वमित्यत्र **न्यायविवरणे** तत्तदुपायसाध्यभोगसाधनं यस्मिन्नोकसीति विग्रहो द्रष्टव्य । न तेषां भोगादिषु

---

१. **विरोधेति** । जैमिन्यौडुलोमिमतयोरिति द्रष्टव्यम् ।

२. **भोगस्येति** । मुक्तभोगस्य सांसारिकभोगवैलक्षण्यमत्र प्रतिपाद्यते । अन्यथा मोक्षस्य पुरुषार्थत्वं न स्यादिति वेदितव्यम् । मुक्तभोग सङ्कल्पमात्रसाध्य इति सिद्धान्तोऽत्र समर्थ्यते ।

प्रयत्नापेक्षेति भाष्यस्योत्सूत्रितत्वपरिहारार्थमाह—चशब्द इति । निर्दोषत्वात्तदोकसो मुक्तस्य च "सङ्कल्पादेव" इति श्रुत्यनुसारेणोपपत्तेरिति न्याय विवरणतात्पर्यमाह—निर्दोष इति ॥ ६ ॥

॥ इति सङ्कल्पाधिकरणम् ॥ ६ ॥

---

## ॥ (७) अनन्याधिपतित्वाधिकरणम् ॥

## सू०॥ ओं ॥ अत एव चानन्याधिपतिः ॥ ओं ॥ ९ ॥

221 [1]स्वाधमनियामकराहित्येन भोगसाधनादिति । अनेनास्याधिकरणस्य भोगे इत्थंभावसाधनपरत्वेनास्मिन् पादेऽन्तर्भावलक्षणसङ्गतिरुक्ता भवति । अनन्तरसङ्गति अत "एव" इति पूर्वोक्तसत्यसङ्कल्पत्वस्यात्र स्वाधमपतिराहित्येऽप्यतिदेशात् स्पष्टैवेति भाव· । वस्त्वेति । अत्र मुक्त. वस्तुसपतिभ्योऽन्यपतियुक्तो भवत्युत न भवतीति चिन्ता । तदर्थं तत्साधकत्वेनाभिमतपरगृहगतत्वस्य सत्यसङ्कल्पत्वेन बाधो नास्त्युतास्तीति । तदर्थं सत्यसङ्कल्पत्वस्य स्वाधमनियम्यत्वाभावसाधकत्वाङ्गीकारे लोकविरोधापत्तिरूपतर्कविरोधोऽस्त्युत नास्तीति । तदर्थं लौकिकराजादीनाम् ईश्वरादीना च विशेषरूपमापादकमस्त्युत नास्तीति । परगृहगतत्वादस्य राजगृहगतस्येव स्वाधमा अपि कदाचिदीशते इति न्याय विवरणं मनसि निधायाह—मुक्तस्याधमा अपीत्यादि । किंचिद्याचष्टे इति "अत एव" इत्यस्यैव सत्यसङ्कल्पत्वादेवेति व्याख्यानादिति भावः । "अनन्यभृत्यत्वमिहोदितेभ्यस्तु अन्यस्य भृत्यत्वनिवारणाय" इत्यनुव्याख्यानम्, 'एतेभ्योऽन्यपतिर्नैव मुक्तानाम्" इत्युदाहरिष्यमाणस्मृतिं च मनसि निधाय सौत्रप्रतिज्ञाभाग व्याचष्टे—न मुक्तः वस्तुसपतिभ्य इति । वस्तुसपतिभ्य इति अन्यपदप्रयोगसामर्थ्यलब्धम् । सर्वथा पतिनिवारणाभिप्राये सूत्रे[2] "पति" इत्येवावक्ष्यदिति भाव । अस्मिन्नधिकरणे, "न च लोक-

---

१. **स्वेति** । मुक्ताना कीदृश स्वातन्त्र्यम् ? कीदृशश्च नियम्यनियामकभाव ? के नियामका ? के च नियम्या ? इत्यादीनामत्र विचारो द्रष्टव्य ।

२ **सूत्र इति** । "अत एव चाऽनन्याधिपति" इति सूत्रे ।

विरोधः " " निर्दोषभगवदोकसि तथात्वस्यैव युक्तत्वात्" इति पूर्वाधिकरणोक्त-
प्रकारेण निर्दोषत्वादेव मुक्तेश्वरस्य तत्रस्थानां च मुक्तान्तराणां राजदोषवद्दोषा-
संभवाद्यथायोग्यमेव स्वीकारोपपत्तेरित्येतदधिकरणसिद्धान्तन्यायविवरणम्; न
च लोकविरोधः ; मुक्तस्वामिनो हरेस्तदोकोगतानां ब्रह्मादिमुक्तान्तराणां च
निर्दोषत्वाद्धेतोः लौकिकराजादिवद्दोषासंभवादुत्तममुक्तनियमनार्थं तदवरान्
प्रत्यनियोजकत्वस्यैव युक्तत्वेन यथायोग्यमेवाधमोत्तमभावानतिक्रमेणैव नियम्यनिया-
मकाभावस्य स्वीकारोपपत्तेरिति योजयितुं शक्यत्वेन टीकायां न व्याख्यातमिति
ज्ञातव्यम् ॥ ७ ॥

॥ इत्यनन्याधिपत्यधिकरणम् ॥ ७ ॥

---

## (८) ॥ अभावंबादरिरधिकरणम् ॥

## सू०॥ ओं ॥ अभावं बादरिराह ह्येवम् ॥ ओं ॥ १० ॥

**मुक्तानां भोगानुपपत्तिवारणादिति** । ननु एतदधिकरणम् "ब्राह्मेण"
इत्येतदधिकरणान्तरमेव स्यात्; कुतो व्यवधानमिति चेत्, सत्यम्; तत्र सायुज्य-
भाजां भोगानुपपत्तिनिवारणम् । अत्र[1] तु सर्वमुक्तानामिति विशेषज्ञापनार्थत्वात्,
व्यवधानकरणस्य । अन्यथा एकविषयप्रतीतिप्रसङ्गात् । अत एव वक्ष्यते —
**सायुज्यभाजां कथञ्चिदिति** । उक्तप्रकारेण "त एवे"त्यस्य " संकल्पा-
देव" इत्यनेन संगतत्वादनन्तरमेतदधिकरणमिति भाव । **युज्यत इति** । अत्र
सर्वमुक्तानां निर्दुःखभोगो न युज्यते उत युज्यत इति चिन्ता। तदर्थं तेषां बाह्यदेहा-
भावो न युज्यत उत युज्यत इति चिन्ता । तदर्थं देहभावाभावपक्षयोः परस्परविरोध.
उताविरोध इति । तदर्थं देहाभावभावयो. साधकबाधकाभावौ न स्त उत स्त
इति । तदर्थं देहाभावे भोगो न स्यात्, देहे सति दुःखं स्यादिति बाधकतर्कयोर्मूल-
भूताव्याप्तिरस्ति उत नास्तीति । तदर्थं द्वितीयतर्कोपोद्बलकतयोक्ता "न ह वै स
शरीरस्य" इति श्रुति. किं निरवकाशोत कर्मारब्धदेहविषयतया सावकाशेति ।

---

1. अत्रेति । प्रकृताधिकरणविन्यासौचित्यं प्रतिपादयति ।

तदर्थं मुक्तानां देहसद्भावेऽपि दुःखाभावे प्रमाणं नास्ति उतास्तीति। तदर्थं "तीर्णो हि" इति श्रुतिः किं स्वर्गस्थविषयोत मुक्तविषयेति। देहभावे तत्कार्यदुःखादि तदभावे भोगासंभव इति न्यायविवरणोक्तयुक्तिमाह—**तथा हीत्यादिना नेतिपक्ष इति**। अनेन तदभाव इति न्यायविवरणं देहाभिमानाभाव इति व्याख्यातं भवति। **अस्ति चेदिति**। अनेन देहभाव इत्येतद्देहाभिमानभाव इति व्याख्यातं भवति। **द्वितीये भोगासंभव इति**। अनेन देहाभाव इत्येतद्देहाभिमानाभाव इति व्याख्यातं भवति। "त्राप्नेण" इत्यनेन गतार्थताशङ्कापरिहारायाभ्यधिकाशङ्कामाह—**न च चिच्छरीरेणेत्यादिना। कथंचिदुपपत्ताविति**। सायुज्यभाजामपि कदाचिद्बहिर्भोगाङ्गीकारेण तदोपपत्त्यभावात् **कथंचिदित्युक्तम्। प्रमाणवत्त्वादिति**। सूत्रगत "अतः"शब्दव्याख्यानमेतदिति ज्ञातव्यम्। स्वप्नावस्थायां देहसत्त्वेन सन्ध्यवदिति कथं दृष्टान्तोक्तिरित्यत आह— **अनभिमानस्याभावसाम्यादिति**। तदभिमानाविषयस्य तत्कार्याकारित्वेन तं प्रत्यविद्यमानकल्पत्वादित्यर्थः। स्वाप्नपदार्थानां मिथ्यात्वेन तद्विषयकभोग एवासंप्रतिपन्न इत्यत आह—**स्वाप्नपदार्थानामिति**।

ननु देहसद्भावाङ्गीकारे दुःखादिकमेवापादितं न भोगानुपपत्तिरुक्ता। अतः "भावे जाग्रद्वत्" इति सूत्रं व्यर्थमित्यत आह—**वक्ष्यमाणेति**। "प्रदीपवदावेशः" इत्यत्र वक्ष्यमाणं यद्दुःखादिप्राप्तिरूपदूषणनिराकरणं तत्प्रस्तावायेत्यर्थः। देहसद्भावपक्षमप्रस्तुत्य तत्करणे तस्यैतद्विषयत्वं न ज्ञायते। अतः प्रस्तावार्थमिदं सूत्रमिति भावः॥

ननु देहे सति दुःखं स्यादिति तर्कस्योक्तरीत्याऽऽभासत्वेऽपि "न ह वै
P. 222 सशरीरस्य" इति श्रुतेः का गतिरित्यत आह—**श्रुतिस्त्विति**। भाष्ये तत्प्रकाशयन्त इत्येतदनुपयुक्तं किमर्थमुक्तमित्यत आह—**तत्प्रकाशयन्त इतीति**। यथा प्रदीपो दीपिकां प्रकाशयन् तैलादिव भुङ्क्ते, तथा मुक्तास्तज्जडशरीरं

---

१. **स्वाप्नेति**। स्वाप्नपदार्थानां मिथ्यात्वेन तेषां भोगः कथमुपपन्न इति शङ्कते।

२. **स्वाप्नपदार्थानामिति**। सत्यत्व पूर्वमेव "सन्ध्य"धिकरणे स्वाप्नार्थाना साधितं सिद्धान्तितं चेति ज्ञेयम्।

प्रकाशयन्तः साधूनेव भोगान् अनुभवन्तीति प्रदीपवदिति वक्तुः सूत्रकारस्य विवक्षानेन भाष्येणोच्यत इत्यर्थः ॥

ननु "तीर्णो हि" इति श्रुतिः न देहवतोऽपि दुःखाभावं प्रतिपादयति, किं तु मुक्तस्य दुःखाभावम्। तच्चापादनानुपयुक्तमेवेत्यतो भाष्याभिप्रायमाह— देहसद्भावस्त्वित्यादिना। उपलक्षणं चैतत्। "देहाभावाच्च भावाच्च" इति न्यायविवरणोदाहृतश्रुतिरप्यस्मिन्नर्थे मानम् एतद्वाक्यमिति। अनेन सूत्रगतो "हि"शब्दः "अन्यतरापेक्षं हि" इत्यपि हेत्वर्थेन संबध्यत इत्युक्तं भवति। सुप्तिमुक्तिविषयमेवेति ॥ अत्र "सुप्तिः" इति "संपत्ति"शब्दार्थः "मुक्तिः" इति "स्वाप्यय"शब्दार्थ इति ज्ञेयम्।

ननु सूत्रे "अन्यतर"पदेन भाष्ये सुप्तौ मोक्षे वेति "वा"शब्देन "तीर्णो हि" इति वाक्यस्यैकार्थत्वमेवोक्तम्, तत्कथं सुप्तिमुक्तिविषयमित्युभयार्थत्वमुच्यते। अन्यथा सूत्रे स्वाप्ययसंपत्त्यपेक्षमित्येव स्यात्। भाष्ये च मोक्षे चेति "च"शब्दः स्यात्; न तु "वा"शब्द इति चेत्, न; अभिप्रायसद्भावात्। यदि स्वाप्ययसंपत्तिरित्युच्येत तदा स्वाप्यये मोक्षे या संपत्तिः सुप्तिस्तदपेक्षं तद्विषयमिति प्रतीतिः स्यात्। तन्निवृत्त्यर्थं स्वाप्ययसंपत्त्योर्मध्ये अन्यतरापेक्षमित्युक्तम्। ननु "तीर्णो हि" इति वाक्यस्यैक एवार्थ इति प्रतिपादनार्थमिति। तथा सति वस्तुनि विकल्पायोगात्, "स्वाप्ययापेक्षम्" इति वा "संपत्त्यपेक्षम्" इति वा ब्रूयादिति ॥

ननु संबन्धे षष्ठीमङ्गीकृत्य स्वाप्ययसंपत्त्योरित्येव कुतो न कृतम्[1] न तु उच्यते—अनेकार्थस्यास्यैकार्थव्याख्याने रुचिरेव व्याख्यातुः प्रमाणम्, मुख्यामुख्यतो विशेषो[2]ऽस्तीति सूचयितुमन्यतरापेक्षमित्युक्तम्। तदिदमाह— भाष्कारः सुप्तौ मोक्षे वेति "वा"शब्देन। तदेतत्सर्वं कर्मनिर्णयटीकायां मोक्षेऽपि सुप्तिरस्तीत्याशङ्कानिवृत्त्यर्थमेवान्यतरापेक्षमिति तन्मूलवाक्यव्याख्या-

१. कृतमिति। सूत्ररचनमिति भाव.।

२. विशेष इति। एकार्थपरित्यागसहकृतान्यार्थव्याख्याननिर्णायकविशेषहेतुरिति भाव.।

नावसर एवोक्तमिति । पुण्यपापादिवर्जिताः सर्वदोषनिवृत्ता इत्यनुवाद इति ।

"भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन"

इत्यत्र गुणमात्रस्वरूपिणः "तीर्णा हि सर्वशोकांस्ते" इत्यस्य हेतुत्वेन उपयोगवदनयोः पुनस्तत्त्वेनोपयोगाभावादिति भावः ॥

अत्राद्ये---बादर्याचार्यमतेन मुक्तानां बाह्यदेहाभावे श्रुतिरूपप्रमाणोक्तिः। द्वितीये---जैमिन्याचार्यमतेन कादाचित्कबाह्यदेहसद्भावे प्रमाणोक्तिः ॥ तृतीये--प्रामाणिकत्वेन तयोः स्वमतत्वप्रदर्शनेनाविरोधोक्तिः । चतुर्थे—देहाभावपक्षे देहाभिमानाभावस्यापि सिद्धत्वाद्देहाभिमानाभावे सुप्तिवद्भोगो न स्यादिति बाधकतर्कस्य स्वप्नावस्थायां व्यभिचारप्रदर्शनेन व्याप्त्यभावोक्तिः। पञ्चमे—देहसद्भावपक्षेऽपि भोगोपपत्त्युक्तिः । षष्ठे— देहे सति दुःखं स्यादिति बाधकतर्कस्य व्याप्त्यभावोपपादनाय कर्मारब्धदेहस्यैव दुःखजनकत्वं न देहमात्रस्येति स्वेच्छागृहीतदेहस्य कर्मारब्धत्वाभावादेव दुःखाभाव इत्यन्यथासिद्ध्युक्तिः। सप्तमे—"तथापि दर्शयति" इत्युक्त "तीर्णो हि" इति श्रुतेर्मुक्तविषयत्वोक्तिरिति सूत्रक्रमः ॥ ८ ॥

॥ इति अभावंबादरिरधिकरणम् ॥ ८ ॥

---

## (९) ॥ जगद्व्यापाराधिकरणम् ॥

### सू० ॥ ओं ॥ जगद्व्यापारवर्जम् ॥ ओं ॥ १७ ॥

**भोगे इयत्तासमर्थनादिति**। पूर्वाधिकरणे कारणनिर्णयेन परिहृतानुपपत्तिकस्य भोगस्य अत्र इयत्तासमर्थनादनन्तरसंगतिरिति भावः। **जगदिति**। अत्र सर्वे मुक्ता जगद्व्यापारादिसर्वभोगानाप्नुवन्ति उत नाप्नुवन्तीति चिन्ता । तदर्थम्

१. **इयत्तेति** । अवधिरित्यर्थः । जगद्व्यापारादित्येन, सावधित्वान्मुक्तभोगस्येति भावः ।

"सर्वकामान्" इति श्रुतिगत"सर्व"शब्दः किमसंकुचितवृत्तिरुत संकुचितवृत्तिरिति। तदर्थम्"अस्माच्छरीरभेदात्" इत्यनेनावगतस्य "सर्वान्"इति श्रुतेर्जीवप्रकरणत्वस्य च सर्वशब्दसङ्कोचकत्वं न संभवत्युत संभवतीति। तदर्थं सर्वजीवानां सर्वकामावाप्तिसामर्थ्यमस्त्युत नास्तीति। तदर्थं "सर्वेऽस्मै देवा बलिमावहन्ति" इति श्रुतिः किं सर्वमुक्तजीवविषया उत मुक्तहिरण्यगर्भमात्रविषयेति। तन्मात्रविषयत्वपक्षेऽपि किं मुक्तविरिञ्चस्य संसार्यादिसर्वजीवनियामकत्वपूज्यत्वादिकम् उत स्वसहंमुक्तमात्रनियामकत्वतत्पूज्यत्वादिकमिति। तदर्थमत्र प्रमाणमस्त्युत नास्तीति। सर्वान् कमानाप्त्वामृतः सममवदिति भाष्योक्तयुक्तिमाह–**सर्वान् कामानिति**। [1]संकल्पादेव समस्तसंभवात् सृष्ट्यादिकार्यसंभव इति **न्यायविवरणो**क्तयुक्तिमाह–**मुक्तस्य सत्यकामत्वेनेति। तत्रापीति**। सर्वशब्दविशेषितकामशब्दोक्तेषु विषयेष्वपीत्यर्थः। अनेन भाष्यगततत्रेतिपदमुक्ततात्पर्यं भवति। "प्रकरणादसन्निहितत्वाच्च" इति सूत्रनिरसनीयमाह—**सङ्कोच**[2] इति। अस्य जीवप्रकरणत्वं कुतो ज्ञायत इत्यत आह—**शरीरभेदादिति**। असत्यकामत्वस्योपाधित्वशङ्कायां तन्निरासाय पक्षे साध्यग्राहिकां स्मृतिमवतारयति, **संसारिणामिति**। उपलक्षणं चैतत्।

"व्यापारो जगतो विष्णौ मुक्तानां तु स्वभोगग."

इति **न्यायविवरणो**दाहृतश्रुतिरस्मिन्नर्थे मानमिति बोध्यम्। **स्फुटमिति**। अनेन सूत्रभाष्यगतम् "प्रत्यक्ष"पदमुक्ततात्पर्यं भवति। "ता यो वेद" इति श्रुतौ तच्छब्दपरामृष्टं दर्शयितुम् "ता वा एता" इति पूर्ववाक्योदाहरणमिति ज्ञातव्यम्। "महाचमस्य"इत्युपक्रमादिति।

'महाचमसनामासौ यस्मादतिचमत्कृतिः।
महाचमस्यस्तज्ज्ञानी ब्रह्मा संपरिकीर्तितः॥'

इति प्रमाणात् महाचमस्यशब्दस्य हिरण्यगर्भवाचकत्वादिति भाव। सूचनाया-

---

१. **संकल्पादेवेति**। सङ्कल्पमात्रसाध्यसकलभोगभाजनानां मुक्तानां जगत्कर्तृत्वादिकमपि स्यादिति शङ्कते।

२. **सङ्कोच इति**। "सर्वश्रुतेः सङ्कोच." इति टीकाकाराः।

